April, May & June. 1934.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO'S. 436, 437 & 438.

# वीरमित्रोदय-

## समयप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः
साहित्योपाध्याय-
पण्डितविष्णुप्रसादभण्डारिणा
संशोधितः ।

# VĪRAMITRODAYA

## SAMAYAPRAKĀS'A

BY

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

*Edited By*

SAHITYOPĀDHYĀYA

PANDIT VISHNU PRASĀDA BHANDARI

Vol XIII. FASCICULUS I-III. १-३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE.

*Benares City.*

1935



श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभश्वेतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४३६. ४३७. ४३८.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

THE

CHOWKHAMBĀ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

No's. 436, 437 & 438.

THE

# VĪRAMITRODAYA

## SAMAYAPRAKĀS'A

*By*

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

*Edited with Introduction Index etc.,*

By

SAHITYOPĀDHYĀYA

PANDIT VISHNU PRASĀDA BHANDARI

Vol. XIII.

FASCICULAS 1–3. १-३

PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1935.

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ३०

ग्रन्थाङ्कः ४३६, ४३७, ४३८.

॥ श्रीः ॥

# वीरमित्रोदय-

## समयप्रकाशः ।

श्रीमहामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्याय-

पण्डितविष्णुप्रसादभण्डारिणा

संशोधितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी ।

१९९२

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४३६. ४३७. ४३८.

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस

बनारस सिटी ।

श्रीगुरुः शरणम् ।

# भूमिका ।

इह खलु जगति सर्वासामपि प्राजापत्यानां प्रजानामभ्युदयनिःश्रेयसश्रेणीपरम्परा विशिष्टशिष्टस्वीकृतप्रामाण्यकश्रुतिस्मृतीतिहासपुराणादिप्रदिपादितधर्मात्मककर्मानुष्ठानाधीनलब्धसत्ताका इति निश्चप्रचमनवरतं निगमागमाकूपारनिमज्जनोन्मज्जनरसिकानां कोविदकदम्बानाम् । तच्च कर्मानुष्ठानं समुचितसमयोप्तं बीजमिव यथाविहितकालानुष्ठानकमेव यथोपदिष्टफलाय कल्पते नान्यथेति पूर्वमीमांसीयतत्तदधिकरणसिद्धान्त रीत्यनुसारेण तत्तत्कर्मानुष्ठानपरिवर्जनसमयनिरूपणपरो वीरमित्रोदयाभिधमहत्तरप्रबन्धोदरान्तर्गतोऽयं समयप्रकाशाख्यो निबन्धः सुतरां प्रेक्षावत्प्रतिपित्सागोचर इति नास्त्यस्योपादेयतायां कोऽपि विप्रतिपत्तिसमुन्मेषः । स च कालो ज्ञानलक्षणानङ्गीकर्तृभिरध्वरमीमांसकैर्घटाद्यपरोक्षानुभूतिसमनन्तरं तद्धर्मिकैतत्कालीनत्वकोटिकविचिकित्साशून्यतारूपयुक्त्युपोद्बलितबाह्यप्रत्यक्षेण, तथाविधैरेव ब्रह्ममीमांसकैरहमस्मिन् काले निवसामीतिसाक्षिप्रत्यक्षप्रत्ययेन, ज्ञानलक्षणामभ्युपगच्छद्भिस्तार्किकप्रभृतिभिश्चिरक्षिप्रादिप्रत्ययलिङ्गेन "काल एव दद्यात्, नाकाले" "कालं कालविभक्तिं च" "अनादिरेष भगवान् कालोऽनन्तोऽजरः पर" इत्यादिभिः श्रुतिस्मृतिपुराणैश्चाध्यवसित इति प्रत्यक्षानुमानागमप्रमितस्याऽप्यपलापेऽपलपितुरेवापलापप्रसक्तिभिया न स सहसापलपितुं शक्यः स्वसत्तां समभ्युपगच्छद्भिः । स च परमात्मस्वरूपो वाऽस्तु तद्व्यतिरिक्तो वा औपाधिकभेदमादायैवोभयमतेऽपि व्यवहारस्योपपादनीयतया फलतोऽविशेषात् । यद्यपि कल्पमन्वन्तरयुगसंवत्सरायनर्तुमासपक्षतिथ्यहोरात्रमुहूर्तकलाकाष्ठानिमेषलवक्षणभेदेन कालस्य नानात्वादत्र च कल्पमन्वन्तरादीनुपेक्ष्य संवत्सरादिमारभ्यैव निरूपणान्न्यूनत्वं दुष्परिहरम् ।

तदुक्तम्—

क्षणद्वयं लवः प्रोक्तो निमेषास्तु लवद्वयम् ।
अष्टादशनिमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः ॥
त्रिंशत्कलो मुहूर्तः स्यात् त्रिंशद्रात्र्यहनी च ते ।
अहोरात्राः पञ्चदश पक्षो मासस्तु तावुभौ ॥
ऋतुर्मासद्वयं प्रोक्तमयनन्तु ऋतुत्रयम् ।
अयनद्वितयं वर्षो मानुषोऽयमुदाहृतः ।
एषदैवस्त्व...रात्रस्तैः पक्षादि च पूर्ववत् ।
दैववर्षसहस्राणि द्वादशैव चतुर्युगम् ।

दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ॥
मन्वन्तरन्तु दिव्यानां कल्पानामेकसप्ततिः ॥ इति ।

तथापि "सोऽकामयत द्वितीयो मे आत्मा जायेत स मनसा मिथुनं समभवत् तद्यद्रेत आसीत् संवत्सरोऽभवत्" इति श्रुतौ संवत्सरस्य प्रथमं परमेश्वरसृष्टत्वेन प्राधान्यात् संवत्सरमारभ्याऽर्वाचामेव कर्माङ्गकालानामत्र निरूपणान्न न्यूनताया अवसरः । न वा कालस्य कर्माङ्गत्वे मानाभावः शङ्क्यः, सायं जुहोति, प्रातर्जुहोतीति वाक्यादेव तस्याङ्गत्वप्रमितेरित्यव्याहतं कालस्य कर्माङ्गत्वम्, यद्यपि विराजन्ते तैस्तैः सिद्धान्तविचारचतुरचेतोऽभिः सुमनोभिः प्रणीतानि समयनिरूपणपराणि शतशो निबन्धान्तराणि, तथापि तानि कतिचन विस्तारमात्रोपचितशरीरतया, कानिचित्, केवलपल्लवग्रहणालङ्कृतविग्रहतया, कतिपयानि च प्रमाणगवेषणारूपप्रधानाङ्गविकलतया, न समयतत्वबुभुत्सूनां समस्तसन्तमसापनायालङ्कर्मीणानीत्यभिसमयप्रकाशमभिधानं नातिशयोक्तिशय्यामधितिष्ठति । ग्रन्थकर्तृपरिचयश्चैतद्ग्रन्थप्रणेतृभिर्विद्वद्ग्रणीभिः श्रीमन्मित्रमिश्रसुधीभिरेवैतद्ग्रन्थोपक्रमे सविस्तरं न्यरूपीति न वयं पिष्टं पेष्टुं प्रवर्तामहे । अस्य संशोधनादिकार्यं च काशीस्थगवर्नमेण्टसंस्कृतपुस्तकालयस्थं हस्तलिखितं केवलमेकमेव पुस्तकमलभ्य सौजन्यनिधिभिः श्रीमद्विष्णुप्रसादोपाध्यायमहोदयैः सम्पादितम् । सम्प्रति तेऽपि विप्रकृष्टं देशं जिगमिषवो बहुतरप्रत्यूहव्यूहशङ्कयेव स्वकीयमित्रकलत्रपुत्रादिकमपि किमप्यसूचयन्तोऽकस्मादेवाधिकाशि नेत्रग्रहाङ्कशशाङ्क ( १९९२ ) मिते वैक्रमाब्दे वैशाखशुक्लाष्टम्यां शेषप्रायेण संशोधनादिकार्येण सहानादिपरम्परायातं निखिलमपि जन्ममरणपरम्परानिदानं कर्मचयं भगवति भवे समर्पिपयिषवोऽपुनरागमं कैवल्यावासं कैलासमेवागच्छन्नित्यस्त्यस्माकं प्रवर्धमानो हार्दिको विषादवेगः । किन्तु ज्वलितस्य निर्वाणमिव, उच्चैस्थस्य पतनमिव, संघटितस्य विघटनमिव, आयातस्य प्रयाणमपि नैसर्गिकमिति मत्वा कथं कथमप्यवशिष्टं कार्यजातं यथासम्भवमस्माभिः समपादि । ग्राहकमहाभागाः ! तदित्थं भूयसा प्रयत्नेन सम्मुद्रितं दुष्प्रापमिमं ग्रन्थरत्नं संगृह्य सफलयन्तु पुरातनग्रन्थरत्नप्रकाशनगृहीतदीक्षाणां काशीस्थचौखम्बामुद्रणालयाधिपतीनां श्रीजयकृष्णदासश्रेष्ठिमहोदयानां प्रकाशनकृते जातं नानाविधं परिश्रमजातम्, शमयन्तु च दयार्द्रदृष्ट्या मानसमभितापम्, चिन्तयन्तु चानिशं काश्यधिवासं विश्वनाथमिति ।

प्रार्थयिता—

**पद्मप्रसादोपाध्यायः ।**

# अथ समयप्रकाशस्थविषयानुक्रमणिका।

इति समयप्रकाशस्थविषयानुक्रमणिका।



प्राप्तिस्थानम्-

# चौखम्बा संस्कृत पुस्तकालय

बनारस सिटी।



श्रीगणेशाय नमः ।

# अथ वीरमित्रोदयस्य समयप्रकाशः ।

कोपाटोपनटत्सटोद्भटमटद्भ्रूभीषणभ्रूकुटि
भ्राम्यद्भैरवदृष्टि निर्भरनमद्गुर्वीकरोर्वीधरम् ।
गीर्वाणारिवपुर्विपाटविकटाभोगत्रुटद्धाटक-
ब्रह्माण्डोरुकटाहकोटि नृहरेरव्यादपूर्वं वपुः ॥ १ ॥
सटाग्रव्यग्रेन्दुस्रवदमृतबिन्दुप्रतिबल-
स्महादैत्यारम्भस्फुरितगुरुसंरम्भरभसः ।
लिहन्नाशाचक्रं हुतवहशिखावद्रसनया
नृसिंहो रंहोभिर्दमयतु मदंहो मदकलम् ॥ २ ॥
संसारध्वान्तसूर्यः प्रमुखसुरासुरप्रांशुवंशावतंस-
श्शृंगी बंशीधरो वः प्रचुरयतु चिरं शं स राधारिरंसी ।
यच्चूडारूढगूढस्मितमधुरमुखाम्भोजशोभां दिदृक्षु-
गुञ्जाभिः सानुरागालोकनकटनटच्चन्द्रकव्यक्तचक्षुः ॥ ३ ॥
लीलाभ्रान्तिविसर्पदम्बरतया व्यग्राद्रिकान्तं पद-
न्यासभ्यश्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम् ।
फूत्कारस्फुरदुत्पतत्फणिकुलं रिङ्खज्जटाताडन-
ध्मातव्योमगभीरदुन्दुभि नटन्नव्यात्स वो धूर्जटिः ॥ ४ ॥
कुम्भोद्भ्रान्तमधुव्रतावलिवलज्झङ्कारकोलाहलैः
शुण्डास्फालनविह्वलैः स्तुत इव व्यालोर्मियत्प्लाविभिः ।
मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः कुरुतां कृताम्बरकरालम्बाम्बरं वः शिवम् ॥ ५ ॥
समन्तात्पश्यन्ती समसमयमेव त्रिभुवनं
त्रिभिर्नेत्रैर्दोर्भिर्दशभिरपि पान्ती दश दिशः ।
दधाना पारीन्द्रोपरि चरणमेकं परपदा
हतारिर्वो हन्यान्महिषमथनी मोहमहिषम् ॥ ६ ॥
वामान् भिन्दन्नवामान् भुवमनु सुखयन्पूरयन्नर्थिकामान्
श्रीमान् भीमानुकारो बहलबलभरैर्मोदनीमल्लनामा ।
आसीदासीतचन्द्रद्युतिधवलयशा भूपचक्रावतंसः
श्रीकाशीराजवंशे विधुरिव जलधौ सर्वभूसार्वभौमः ॥ ७ ॥

सङ्ग्रामग्रामकामो निरुपममहिमा सर्वविश्रामधाम
क्रामन्नवारिचक्रं मिहिर इव तमो विक्रमोरुक्रमेण ।
सारैर्मेरोरुदारैरपर इव गिरिर्मेदिनीमल्लनेन
प्रख्यातः क्षोणिचक्रे समजनि नृपतिर्मेदिनीमल्लनामा ॥ ८ ॥
निर्यद्भिस्तर्जयद्भिर्विधुमिव जगतीमर्जुनाभैर्यशोभिः
सम्पूर्यानार्यवीर्यो विशिखवितरणैरर्जुनो दुर्जनानाम् ।
साम्राज्योपार्जनश्रीगणनगुणभूरर्जुनप्रांशुबाहु-
र्नाम्नाभूदर्जुनोऽस्मादप्रतिमतुलो मेदिनीमल्लभूपात् ॥ ९ ॥
बुद्धिः शुद्धमना क्षमा निरुपमा विद्यानवद्या मनो
गाम्भीर्यैकनिकेतनं वितरणं दीनार्तिनिर्वारणम् ।
आसीदर्जुनभूपतेर्विदधतो विद्रावणं विद्विषां
भूमीनामवनं च कारणगुणात्कार्यं यशोऽप्यर्जुनम् ॥ १० ॥
तस्मादाविरभूत्प्रभूतमहिमा भूमीपतेरर्जुना-
त्सौजन्यैकनिधिर्गुणैरनवधिर्लावण्यवारांनिधिः ।
भिन्दन् दुर्जनमर्जयन् बहुयशः प्रौढप्रतापोदयै-
र्दुर्जेयो मलखाननाम निखिलक्ष्मामण्डलाखण्डलः ॥ ११ ॥
यस्मिन् शासति नीतिभिः क्षितिमिमां निर्वैरमासीज्जग-
त्पारीन्द्रेण समं करीन्द्ररभसारम्भोऽपि सम्भावितः ।
श्येनः क्रीडति कौतुकी स्म विहगैश्चिक्रीड नक्रैर्झषः
किं वान्यद्गहनेऽभवत्सह मृगैः शार्दूलविक्रीडितम् ॥ १२ ॥
हिमविशदयशोऽभिशोभिताशो महिमातिरोहितवारिधिप्रभावः ।
समजनि मलखानतः प्रतापैस्त्रिजगति रुद्र इव प्रतापरुद्रः ॥ १३ ॥
शुचि धनमर्थिनि सहसा यशसा सममानने गुणो जगतः ।
पुत्रे भूरभिदध्रे चेतो रुद्रे प्रतापरुद्रेण ॥ १४ ॥
जातः प्रतापरुद्रात्ससमुद्रां पालयन्नवनीम् ।
कृतरिपुकाननदाहो मधुकरसाहो महीपतिः शुशुभे ॥ १५ ॥
पृथुः पुण्याभोगैर्विहितहितयोगैरनुदय-
त्खलायोगैर्योगैः कृतसुकृतियोगैरपि गुरुः ।
भुजस्तम्भालम्बालसशयितविश्वम्भरतया
बभौ प्रौढोत्साहः स मधुकरसाहः क्षितिपतिः ॥ १६ ॥
प्रजागणरुजापहो द्युतिमहोदयाविष्कृतः
सुधांशुरिव मांसलो रसभरैः सभारञ्जनः ।

## वंशावर्णनम् ।

प्रदीप्तकुमुदावलिर्द्विजपतिश्च नक्षत्रपो
नृपो जयति सत्कृपो मधुकरः कृतारित्रपः ॥ १७ ॥
विन्यस्य वीरसिंहे भूपतिसिंहे महीभारम् ।
ज्ञानानलमलदाहो मधुकरसाहो दिवं भेजे ॥ १८ ॥
अन्तर्गम्भीरतान्धूकृतसलिलनिधिर्लालिताशेषबन्धु-
र्बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ।
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यसङ्गीतरङ्गी
सन्मातङ्गी तुरङ्गी धरणिपतिरभूद्वीरसिंहो नृसिंहः ॥ १९ ॥

अमुष्य प्रस्थाने सति सपदि नानेभनिवहै-
रिहैकोऽपि द्वेषी न खलु रणशेषी समजनि ।
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्नुच्चैर्दिक्षु भ्रमितचकितं चक्षुरभितः ॥ २० ॥
दानं कल्पमहीरुहोपरि यशः क्षीरोदनीरोपरि
प्रज्ञा शक्रपुरोहितोपरि महासारोऽपि मेरूपरि ।
दावाग्नेरुपरि प्रतापगरिमा कामोपरि श्रीरभू-
त्सिंहातिक्रमवीरसिंहनृपतेः किं किं न कस्योपरि ॥ २१ ॥
दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणा-
त्कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ।
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितखनिश्चिन्तां च चिन्तामणिः ॥२२॥

भ्रामंभ्राममसम्भ्रमं त्रिजगतीचक्राणि चक्रे चिरा-
च्चारं शीलितविष्णुपादपदवीब्रह्माण्डभाण्डोपरि ।
ब्रह्माण्डं निजमण्डमण्डलमिवाच्छाद्यैव सैवाधुना
विश्वेषामपि यस्य भास्वरयशोहंसी वतंसीयति ॥ २३ ॥
जलकणिकामिव जलधिं कणमिव कनकाचलं मनुते ।
नृपसिंहवीरसिंहो वितरणरंहो यदा तनुते ॥ २४ ॥

यदा भवति कुण्डलीकृतमहाधनुर्मण्डल-
स्तदा नयनताण्डवत्रुटितखाण्डवः पाण्डवः ।
मनोवितरणोत्सुकं वहति वीरसिंहो यदा
तदा पुनरुदारधीरयमवर्णि कर्णो जनैः ॥ २५ ॥
शौर्यौदार्यगभीरताधृतिदयादानादिनानागुणा-
नुर्वीदुर्वहभारवत्याहिपतिस्पर्धालदोःशालिनि ।

संयोऽयैव जुहारसिंहधरणीधौरेयचूडामणौ
 मज्जन् ब्रह्मणि वीरसिंहसुकृती तस्थौ स्वयं निर्गुणः ॥ २६
नद्यः स्वादुजला द्रुमाश्च सुफला भूरुर्वरा भूसुरा
 वेदध्वानविधूयमानदुरिता लोका विशोका बभुः ।
राजन्नीतिनिरीतिरीति पितरीवोर्वीमिमां शासति
 श्रीवीरजुहारसिंहनृपतौ भ्रूभङ्गभग्नद्विषि ॥ २७ ॥
सङ्ग्रामोत्कटताण्डवोद्भटभटैरारब्धहेलाहठै
 श्चण्डाडम्बरपूरिताम्बरतटक्षीराब्धिगोधावटैः ।
भूभृत्सिंहजुहारसिंहधरणीजानेः प्रयाणे रणे
 शौर्यौदार्यधनोऽपि को नु धरणीचक्रे न चक्रे भयम् ॥ २८ ॥
तावद्वीरगभीरहुङ्कृतिरवस्तावद्गजाडम्बर-
 स्तावत्तुङ्गतुरङ्गरिङ्गणचमत्कारश्चमूनामपि ।
तावत्तोयमहामहीभृदटवीदुर्गग्रहो विद्विषां
 यावन्नैव जुहारसिंहनृपतिर्युद्धाय बद्धोत्सवः ॥ २९ ॥
अयं यदि महामना वितरणाय धत्ते धियं
 श्रियं कनकभूधरोऽञ्चति ह्रियं च कर्णोऽटति ।
दधीचिरपचीयते बलिरलीकरूपायते
 तदातिमलिनायते स किल कल्पभूमीरुहः ॥ ३० ॥
प्रासादागतडागनागमणिभूदानादिनानातपः—
 प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली ।
प्राचण्ड्येन जिता मिता वसुमती कोदण्डदोर्दण्डयो-
 र्जागर्तीति जुहारसिंहनृपतेः कुत्र प्रतापो न वा ॥ ३१ ॥
ब्रह्माभूच्चतुराननः स्मरहरः पञ्चाननः षण्मुखः
 स्कन्दो भूपजुहारसिंहयशसो गानोत्सवेऽत्युत्सुकः ।
तस्याभोगमुदीक्ष्य भूधरनभानद्यास्त्रिलोकी दिशः
 सप्तद्वीपमयी मही च विधिना विघ्नेन निर्वाहिताः ॥ ३२ ॥
तुङ्गत्वादनवाप्य दैवततरोः पुष्पाणि सर्वाः समं
 श्रीमद्वीरजुहारसिंहनृपतेर्दानं समानं जगुः ।
व्रीडादुर्वहभारनिर्भरनमद्ग्रीवे तु देवद्रुमे
 श्लाघन्ते सुलभायमानकुसुमास्तं भूरि देवस्त्रियः ॥ ३३ ॥
भीमो यः सहदेव एव पृतनादुर्धर्षपार्श्वो लसन्
 श्रीभूमीनकुलः सदार्जुनमहाख्यातिः क्षमामण्डले ।

कर्णश्रीः कृतवर्मभीष्मघटनाशौटीर्यदुर्योधनो
रोषाश्च शुधिस्थिरो यदि भवेत्कः स्यादमुष्यामतः ॥ ३४ ॥
सत्कीर्तिग्रामदामाभरणभृतजगद्विक्रमादित्यनामा
धाम्नो भूम्ना महिम्ना विघटितारिपुणा विक्रमोपक्रमेण ।
सुप्रांशुः पीवरांसः पृथुभुजपरिघस्तस्य वंशावतंसो
विश्वोदश्चत्प्रशंसो गुणगणहृदयानन्दनो नन्दनोऽभूत् ॥३५॥
आशापूर्ति प्रकुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः
प्रोद्यद्दिव्याम्बरश्रीः स्फुटमहिमरुचेः सर्वदाध्वस्तदोषः ।
जम्भारातेरिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी
पुत्रो राज्ञः पवित्रो रचयति सुदिनं विक्रमादित्य एव ॥३६॥
सार्थीकुर्वन्निरर्थीकृतसुरविटपी चार्थिसार्थं निजार्थै-
र्व्यर्थीभूतारिपृथ्वीपतिरमरगुरुस्पर्द्धिवर्द्धिष्णुबुद्धिः ।
मानैर्यानैर्विदानैर्बहुविधगुणिभिर्गीयते यः सभायां
भूतिजातः स भूयः सुकविकुलमुदे विक्रमादित्य एव ॥३७॥
दानं दीनमनोरथावधि रणारम्भोऽरिनाशावधि
क्रोधो वागवधि प्रतापयशसोः पन्था दिगन्तावधि ।
दाक्षिण्यं क्षितिरक्षणावधि हरौ भक्तिश्च जीवावधि
व्यालुप्तावधि वीरविक्रमरवेः श्रेयः परं वर्द्धते ॥ ३८ ॥
हेमाद्रेः श्रियमन्यथैव कुरुते चक्रे च गौरीं तनुं
कैलाशोपरि शोभते पटयति स्पष्टं च दिङ्मण्डलम् ।
भोगीन्द्रं न दधे श्रुतौ बत जटागूढां च गङ्गां व्यधा-
ल्लोकानामयमीश्वरोऽस्य यशसस्त्वैश्वर्यमुज्जृम्भते ॥ ३९ ॥
श्रीगोपाचलमौलिमण्डलमणिः श्रीदूरवारान्वये
श्रीहंसोदयहंसपण्डित इति ख्यातो द्विजाधीश्वरः ।
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भजतु-
र्भोंकारं रभसात्समानमुभयोः साम्राज्यमाढ्यं गुणैः ॥४०॥
पटु दिक्षु विदिक्षु कुर्वतीनां नटलीलां स्फुटकीर्तिनर्त्तकीनाम् ।
स्फुरदम्बरधूमधारणीह च्युतवर्णेति जनैरमानि यस्य ॥ ४१ ॥
ततोऽनल इवारणेरतुलधामभूर्भूभुजां
शिरोमणिरुरोमणिर्धरणिनामवाभुवः ।
रथी बहुगुणी धनी भुवि वनीपकश्रीखनी
रमारमणमिश्रणी परशुराममिश्रोऽजनि ॥ ४२ ॥

येनागत्य पुरा पुरारिनगरे विद्यानवद्यार्जिता
श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयोगुरुम् ।
शुद्धा सैव महोद्यमेन बहुधा भान्ती भवन्ती स्थिरा
तद्वंश्येषु कियन्न कल्पलतिकेवाद्यापि सूते फलम् ॥ ४३ ॥
आस्यारविन्दमनुपास्य गुरोरपास्य
लास्यं चतुर्मुखमुखेषु सरस्वतीह ।
सालङ्कृतिश्च सरसा च गुणान्विता च
यस्यातनोति रसनोपरि ताण्डवानि ॥ ४४ ॥
अङ्के लोमलतेव सीमनि दृशोरेकेव रेखाञ्जनी
कस्तूरीमकरीव भालफलके धारेव मूर्ध्न्यालकी ।
ऊर्ध्वं भृङ्गपरम्परेव कबरी सौरभ्यलोभाकुला
यस्यैवाध्वरधूमधोरणिरभूदाशाकुरङ्गीदृशः ॥ ४५ ॥
सुधासुरयशोनिधेः सुचिरवद्यविद्यानिधेः
सुचारुकवितानिधेः स्मृतिनिधेः श्रुतिश्रीनिधेः ।
अयं सुकृतगौरवात्परशुराममिश्राद्गुणै-
रनूनगरिमा पितुर्जगति मित्रमिश्रोऽजनि ॥ ४६ ॥
धर्मार्थैकनिकेतनं विधिमयं कर्मावनीदर्शनं
स्मृत्यम्भोजमहोदयं श्रुतिमयं श्रीवीरमित्रोदयम् ।
द्राक्स्वीकृतकार्यसिद्धिरतया श्रीवीरसिंहाज्ञया
तेने विश्वमुदे पुरे पुरभिदः श्रीमित्रमिश्रः कृती ॥ ४७ ॥
हारीतगोभिलपराशरनारदादिमुन्युक्तमर्थमखिलं हृदयेऽवधार्य ।
श्रीवीरसिंहनृपदेशितमित्रमिश्रो विद्वन्मणिः प्रकुरुते समयप्रकाशम् ४८

तत्र कालप्रकाशे तु क्रमोऽयमभिधीयते ।
नित्यकालस्वरूपं प्राक्कालोपाधिस्ततोदितः ॥
सम्वत्सरायनर्तूनां क्रमेणाथ विनिर्णयः ।
मासपक्षतिथीनां च क्रमेणाथ निरूपणम् ॥
सामान्यतस्तिथीनां च ग्राह्याग्राह्यविवेचनम् ।
प्रतिपन्निर्णयात्पश्चात् द्वितीयाया विनिर्णयः ॥
तृतीयानिर्णयस्यान्ते चतुर्थीनिर्णयः स्मृतः ।
पञ्चमीनिर्णयात्पश्चात्षष्ठीनिर्णय ईरितः ॥
सप्तमीनिर्णयस्यान्तेऽष्टमीसामान्यनिर्णयः ।
कृष्णजन्माष्टमी पश्चाद्विस्तरेण निरूपिता ॥
नवमीनिर्णयो रामनवम्याश्चाथ निर्णयः ।

# विषयानुक्रमः ।

महानवम्यास्तदनु निर्णयः समुदीरितः ॥
दशमीनिर्णयः पश्चादेकादश्या विनिर्णयः ।
द्वादशीनिर्णयस्यान्ते त्रयोदश्या विनिश्चयः ॥
सामान्यश्चतुर्दश्या निर्णयोऽथ प्रकीर्त्तितः ।
नरसिंहचतुर्दश्या निर्णयोऽत्र प्रकीर्त्तितः ॥
अथात्रैव प्रसङ्गेन जयन्तीनां विनिश्चयः ।
ज्येष्ठकार्तिकमाघेषु चतुर्दश्या विनिर्णयः ॥
शिवरात्रेः पारणा च तत्राथ परिकीर्तिता ।
अथ पञ्चदशीकृत्य श्रावणीकृत्यनिर्णयः ।
उपाकर्म प्रसङ्गेन उत्सर्गसमयान्वयः ॥
कार्त्तिके पञ्चदश्यास्तु निर्णयस्तदनन्तरम् ।
होलिकानिर्णयः पर्वनिर्णयस्तदनन्तरम् ॥
ग्रहणे चैकभक्ते च नक्ते कालस्य निर्णयः ।
नक्तैकभक्तयोः प्राप्तौ निर्णयस्तदनन्तरम् ॥
अयाचितस्य नक्षत्रोपवासस्याथ निश्चयः ।
सङ्क्रान्तिनिर्णयात्पश्चान्मलमासो निरूपितः
मलमासेऽथ कृत्यानामकृत्यानां च निर्णयः ।
गुरुशुक्रादिबाल्यादौ कार्याकार्यविवेचनम् ॥
श्राद्धकालेऽमावास्या अष्टकान्वष्टका तथा ।
अष्टकापूर्वदिवसो वृद्धिः पक्षोऽसितस्ततः ॥
आश्वयुक्कृष्णपक्षश्च तत्रैव भरणी तथा ।
त्रयोदशीचतुर्दश्यौ क्रमेणेह निरूपिते ॥
प्रकीर्णकश्राद्धकालाः काम्यश्राद्धदिनं ततः ।
युगाद्याश्च युगान्ताश्च ततो मन्वन्तरादयः ॥
कल्पाद्या व्यतिपातश्च वैधृतिश्चावमं दिनम् ।
नवान्नश्राद्धमुदितं नववर्षागमे ततः ॥
क्षयाहश्राद्धकालश्च नवश्राद्धदिनं ततः ।
प्रेतपिण्डस्य कालश्च तदन्ते परिकीर्त्तितः
पाथेयश्राद्धकालश्च प्रायणोत्सर्मीरितः ॥
अस्थिसञ्चयने कालो दाने प्रेतोदकस्य च
दशाहमध्ये दर्शस्य पाते प्रेतक्रिया ततः ॥
षोडशश्राद्धकालाश्च तदनन्तरमीरिताः ।
तिथिद्वैधे पार्वणादिश्राद्धनिर्णय ईरितः ॥

लक्षणं चापराह्णादेः कुतपस्य निरूपणम् ।
श्राद्धवेलापिण्डदाननिषिद्धसमयास्ततः ॥
प्रकीर्णकालाः प्रतिपदाद्या पुण्यातिथिस्ततः ।
नक्षत्रवारादिवशात्पुण्याश्च तिथयस्ततः ॥
अतः परं निशायां तु कृत्याकृत्यविवेचनम् ।
चतुष्पथस्य सेवाया निषेधस्तदनन्तरम् ॥
वर्ज्जनीयानि चोक्तानि तिथिकालविशेषयोः ।
पर्वकृत्यं युगधर्म्मा युगवर्ज्यानि चाप्यथ ॥
कालधर्म्माः कलिवर्ज्यान्यथोक्तानि विशेषतः ।
दीक्षाकालस्ततस्तस्यापवादः परिकीर्त्तितः ॥
नामकीर्त्तनकालश्चाधानकालास्ततः परम् ।
पशोः कालस्ततः कालश्चातुर्मास्येष्टिसामयाः ॥
एवमत्र विशेषेण मित्रमिश्रेण सूरिणा ।
स्मृतीः सर्वाः समालोक्य समयोऽत्र निरूपितः ॥
तत्र तावत्कालसद्भावे प्रमाणानि श्रुत्यादीनि । तथाहि ।
तस्मात्काल एव दद्यात्काले न दद्यादिति ऋग्वेदश्रुतिः ।

अत्र काल इत्यत्र यथाक्रमं विहितं प्रतिषिद्धं इत्यध्याहारः ।

"तं काले काल आगते यजेत" इति यजुः । तथा, "नक्षत्रसंवत्सरमासा विकाले आगते ऽभिजायन्त" इति च । "अहमेव कालो नाहं कालस्य" इति च । "का च सन्ध्या कश्च सन्ध्यायाः काल" इति सामवेदः । "कालं कालविभक्तिं च" इति मनुस्मृतिः । "श्राद्धकालाः प्रकीर्त्तिता" इति याज्ञवल्क्यः । तथा धारणाध्यानसमाधित्रयरूपात्संयमविशेषाद्योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्तीति योगशास्त्रे प्रत्यक्षमपि मानमुक्तम् ।

सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थितस्मरणान्यथानुपपत्तिकल्पितं साक्षिप्रत्यक्षमपि प्रमाणमित्यौपनिषदाः । सर्वेन्द्रियवेद्य इति जैमिनीयाः ।

अनादिरेष भगवान् कालोऽनन्तोऽजरः परः ।

इति पुराणमपि मानम् । तस्मादस्ति कालः । स द्विविधः अखण्डः सखण्डश्च । आद्य ईश्वराद्भिन्न इति तार्किकाः । अभिन्न इति वेदान्तिनो नवीनतार्किकाश्च । ईश्वराभेदे—

श्रुतिः, स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ इति ।
कालकालः=जन्यस्य संवत्सरादिरूपस्य कालस्याकलनात् ।

विष्णुधर्मोत्तरेऽपि—

अनादिनिधनः कालो रुद्रः सङ्कर्षणः स्मृतः ।
कलनात्सर्वभूतानां स कालः परिकीर्त्तितः ॥
कर्षणात्सर्वभूतानां स तु सङ्कर्षणः स्मृतः ।
सर्वभूतशमित्वाच्च स तु रुद्रः प्रकीर्त्तितः ॥
अनादिनिधनत्वेन स महान्परमेश्वरः । इति ।

एतेन परत्वापरत्वाभ्यामनुमाने आकाशादौ विनिगमकाभावादति-रिक्तकालसिद्धिरित्यपास्तं श्रुतेरेव विनिगमकत्वात् । एतच्च यथा-तथास्तु । नास्य कालस्यादृष्टार्थस्मरणादन्यः कर्मण्युपयोग इति न नि-रूप्यते । संवत्सरादिरूपस्तु सूर्यादिगत्यवच्छिन्नः कर्माणि "पौर्णमास्यां पौर्णमास्या यजेत" "देश काल उपायेन"इत्यादिश्रुतिस्मृतिभिरधिक-रणत्वेन विनियुक्तत्वाद्विचार्यते । सूर्यादिगतिपरिच्छेद्यत्वं चोक्तम्—

विष्णुधर्मोत्तरे,

तस्य सूक्ष्मातिसूक्ष्मस्य तथातिमहतो द्विजाः ! ।
मानसङ्ख्या बुधैर्ज्ञेया ग्रहगत्यनुसारतः ॥ इति ।

प्रत्यक्षोपलभ्यमाननिमेषादिक्रियापरिच्छेदश्च तत्रैव—

लघ्वक्षरसमा मात्रा निमेषः परिकीर्त्तितः ।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ! ॥
नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः ।
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दश त्रुटिः स्मृतः ॥
विनाडिका तु षट् प्राणास्तत्षष्ट्या नाडिका स्मृता ।
अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्त्तितम् ॥
त्रिंशन्मुहूर्त्ताश्च तथा अहोरात्रेण कीर्त्तिताः ।
तत्र पञ्चदश प्रोक्ता राम ! नित्यं दिवाचराः ॥
तथा पञ्चदश प्रोक्ता राम ! नित्यं निशाचराः ।
उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः ॥
तथा तथा भवेद्वृद्धिर्दिवसस्य महाभुज ! ।
दिवसश्च यथा राम ! वृद्धिं समधिगच्छति ॥
तदाश्रितमुहूर्त्तानां तथा वृद्धिः प्रकीर्त्तिता । इत्यादि ।

तत्र श्रुतौ निमेषादिकालानां संवत्सरावयवत्वेनोक्तत्वादवयवि-रूपः संवत्सरः प्रधानत्वाद्विचार्यते । संवत्सरो नाम सम्यग्वसन्त्य-यनर्तुमासपक्षतिथ्यादयोऽस्मिन्निति व्युत्पत्त्या "द्वादश मासाः सं-वत्सर" इतिश्रुतेश्च द्वादशमासात्मकः कालविशेषः । स पञ्चविधः ।

सौरबार्हस्पत्यसावनचान्द्रनाक्षत्रभेदात् । तथा च ज्योतिःशास्त्रे—

सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः ।
मातुलपातालातुलविमलवराङ्गानि वत्सराः क्रमशः ॥ इति ।

अस्यार्थः । गणकप्रसिद्ध्या कटपया वर्गाः । शुद्धस्वरः शून्यार्थः । तत्र वर्गाक्षरसङ्ख्ययाङ्कसङ्ग्रहः । तेन मातुलेत्यत्र पवर्गात्पञ्चमेन मकारेण पञ्चसङ्ख्या लभ्यते टवर्गषष्ठेन तकारेण षट्सङ्ख्या । यवर्गतृतीयेन लकारेण त्रित्वसङ्ख्या । एवं चाङ्कानां वामतो गतिरिति प्रकारेण मेलने सावनदिनानां पञ्चषष्ट्यधिकशतत्रयं सौरसंवत्सरो भवति । एवं पातालशब्द एकषष्ट्याधिकशतत्रयसङ्ख्यामाचष्टे । तावत्सूर्योदयपरिमितो बार्हस्पत्यः संवत्सरः । एवमतुलशब्दः षष्ट्यधिकशतत्रयसङ्ख्यामाह । तावत्सूर्योदयपरिमितस्सावनः संवत्सरः । एवं विमलशब्दः चतुष्पञ्चाशदधिकशतत्रयसङ्ख्यामाचष्टे । तावत्सूर्योदयपरिमितश्चान्द्रः । एवं वराङ्गशब्दश्चतुर्विंशत्यधिकशतत्रयसङ्ख्यामाह तावत्सूर्योदयपरिमितो नाक्षत्रः संवत्सर इति । नन्वधिकमासवान्संवत्सरः कथं द्वादशमासात्मकोऽधिमासस्य त्रयोदशत्वादिति चेत्, न ।

"षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।

इतिवचनात् षष्टिदिवसात्मकस्यैकमासत्वेन द्वादशसङ्ख्यानपायात् । "अस्ति त्रयोदशो मास" इति श्रुतिस्तु त्रयोदशदर्शान्तत्वेनेत्यदोषः । ये तु प्रभवादिषष्टिसंवत्सराः ते बार्हस्पत्यस्यैव भेदाः ।

माघशुक्लं समारभ्य चन्द्रार्कौ वासवर्क्षगौ ।
जीवयुक्तौ यदा स्यातां षष्ट्यब्दादिस्तदा स्मृतः ॥

इति विष्णुधर्मोक्तेः । ते च—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अङ्गिराः श्रीमुखो भावो युवा धातेश्वरस्तथा ॥
बहुधान्यः प्रमाथी च विक्रमोऽथ वृषस्तथा ।
चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥
सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥
हेमलम्बो विलम्बश्च विकारी शार्वरी प्लवः ।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत् ।
परिधावी प्रमादी च आनन्दो राक्षसोऽनलः ॥
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती ।

दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः ॥ इति ।

एते प्रभवाद्यश्चान्द्रा अपीति माधवः । मीनादिस्थे मेषादिस्थे वा सूर्ये सौरसंवत्सरारम्भः । बृहस्पतिमध्यमराशिभोगेन बार्हस्पत्यारम्भः । यत्किञ्चिद्दिवसमारभ्य यत्किञ्चित्तिथिमारभ्य वा चान्द्रारम्भः । यत्किञ्चिन्नक्षत्रादिमारभ्य सावनारम्भः ।

अथैषां विनियोगः । तत्र चान्द्रस्य तिलकव्रताब्दिकश्राद्धादावुपयोगः । तिलकव्रतमुक्तम्—

भविष्यपुराणे,

वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः ।
शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः ॥
ललाटपट्टे तिलकं कुर्याच्चन्दनपङ्कजम् ।
ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम् ॥
विधार्यं वत्सरं यावच्छशिनेव नभस्तलम् । इति ।

अत्र प्रतिपत्तिथावुपक्रमविधानादस्य व्रतस्य चान्द्रसंवत्सरसाध्यत्वावगतिः । आब्दिके तु ब्रह्मसिद्धान्ते—

प्रतिसंवत्सरश्राद्धे मासश्चान्द्रमसः स्मृतः । इति ।

सुजन्मादिव्रते सौरः । विष्णुधर्मोत्तरे—

भगवन्कर्मणा केन तिर्यग्योनौ न जायते ।

इत्युपक्रम्य—

मेषसङ्क्रमणे भानोः सोपवासो नरोत्तमः ॥

इत्यादिना व्रतस्वरूपमभिधाय—

व्रतं चरन् वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु न चापि जन्म ।

इत्युपसंहारात् । एवं यत्र सङ्क्रान्तिपुरस्कारेण कर्माण्युक्त्वा "संवत्सरं प्रकुर्वीत" इत्युक्तिस्तत्र संवत्सरः सौरो ग्राह्यः । "ब्रह्महा द्वादशाब्दं चरेत्" इत्यादिप्रायश्चित्तादौ सावनः ।

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेनैव कर्त्तव्या शत्रूणां चाप्युपासना ॥

इतिज्योतिर्गर्गोक्तेः । बार्हस्पत्यस्य तु यवदानादौ—

संवत्सरे तु दातॄणां तिलदानं महाफलम् ।
परिपूर्वे तथा दानं यवानां द्विजसत्तम ! ॥
इदापूर्वे च वस्त्राणां धान्यानां चानुपूर्वके ।
इत्पूर्वे रजतस्यापि दानं प्रोक्तं महाफलम् ॥

इति विष्णुधर्मोक्तेः । अत्र सम्परीत्यादि वत्सरशब्दस्यादिः । तेन सं·

वत्सरपरिवत्सरेत्यादिपञ्चनामका वत्सरा उक्ता भवन्ति। एतेषां पञ्चकस्य युगमिति संज्ञा। तथा च प्रभवादि प्रकृत्य—

ब्रह्मवैवर्ते,—

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः।
इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः॥
इद्वत्सरः पञ्चमस्तु कालस्तु युगसंज्ञकः। इति।

बार्हस्पत्य एव कदाचिल्लुप्तसंवत्सर इत्यभिधीयते। तथाच—

वसिष्ठः,

सहजां गतिमासाद्य यद्यतीचारगो गुरुः।
अवशिष्टं पूर्वराशिं नायात्यस्युपभुक्तये॥
अन्तर्भोग्योपभुक्तांशं वक्रानन्तरितं तदा।
मासैर्द्वादशभिर्लुप्तसंवत्सर इतीरितः॥

सहजां=वक्रातीचाराभिन्नाम्। तथाचायमर्थः। यद्यतीचारगो गुरुः पूर्वराश्यवशिष्टांशानां भोगार्थं स्वाभाविकगतिमास्थितः पुनस्तं राशिं नैति तदोपभुक्तांशमतिचारभुक्तांशम् अन्तर्भोग्यारभ्य तद्दिनप्रभृतीतियावत् द्वादशमासं लुप्तसंवत्सरो भवतीत्यर्थः। अस्य क्वचिदपवादः।

मेषे झषे वृषे कुम्भे यद्यतीचारगो गुरुः।
न तत्र काललोपः स्यादित्याह भगवान्यमः॥ इति।

पराशरः—

मासान् दशैका दश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः।
भुङ्क्ते न पूर्वं न पुनस्तथापि न लुप्तसंवत्सरमाहुरार्याः॥

लुप्तसंवत्सरे कर्मनिषेधो राजमार्तण्डे,

अतीचारगतो जीवस्तं राशिं नैति चेत्पुनः।
लुप्तसंवत्सरो ज्ञेयः सर्वकर्मसु गर्हितः॥ इति।

अस्यापवादमाह—

व्यासः,

यदातिचारं सुरराजमन्त्री करोति गोवृश्चिकमीनसंस्थः।
नायात्यसौ यद्यपि पूर्वराशिं शुभाय पाणिग्रहणं वदन्ति॥

इति संवत्सरनिर्णयः।

अथायनं निरूप्यते।

तत्र यद्यप्ययनशब्देन "अयनं वर्त्म मार्गाध्व" इति कोशात् मार्गसामान्यमुच्यते। तथाप्यत्र सौरर्त्तुत्रितयम् अयनमुच्यते। "तस्मादादित्यः षण्मासान् दक्षिणेनैति षडुत्तरेण" इति तैत्तिरीयश्रुतेः। सौर-

मृतुत्रयमुपक्रम्य विष्णुधर्मोत्तरेऽपि, ऋतुत्रयं चायनं स्यादिति।
सिद्धान्तशिरोमणावपि—

कर्किमृगादिषट्के ते चायने दक्षिणसौम्यके स्तः। इति।

अस्यादित्यगतिपुरस्कारेण विधानात्सौरत्वमेव। केचित्तु मार्गशीर्षादिषण्मासा उदगयनं ज्येष्ठादिषण्मासा दक्षिणायनमित्याहुस्तत्र मूलं ज्योतिःशास्त्रे मृग्यमिति माधवः। अनयोश्च सौम्यदक्षिणयोर्विनियोगः उदगयन आपूर्यमाणपक्षे पुण्यनक्षत्रे चौलकर्मोपनयनगोदानविवाहादिरित्यादिः। तथा—

मातृभैरववाराहनारसिंहत्रिविक्रमाः।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने॥

इत्यादिः तत्तत्प्रकरणोदितस्तत्र तत्र बोध्यः। सामान्यतश्चोक्तं ज्योतिषरत्नमालायाम्—

गृहप्रवेशत्रिदिवप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम्।
सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणे तु॥ इति।

इत्ययननिर्णयः।

अथ ऋतुर्निर्णीयते।

स च मासद्वयात्मकः। तथाच तैत्तिरीयश्रुतिः—द्वन्द्वमुपदधाति। तस्माद् द्वन्द्वमृतव इति।

द्वन्द्वः मासद्वयम्।

मधुश्च माधवश्च वासन्तिकावृतू शुक्रश्च शुचिश्च ग्रैष्मावृतू नभश्च नभस्यश्च वार्षिकावृतु इषश्चोर्जश्च शारदावृतू सहश्च सहस्यश्च हैमन्तिकावृतू तपश्च तपस्यश्च शैशिरावृतू इति श्रुतेः।

अत्र च ऋतू इति द्विवचनं तद्घटकमासद्वयाभिप्रायेण। अत्र च मध्वादिशब्दाश्चैत्रादिवाचकाः। तथा च—

माधवीये,

चैत्रो मासो मधुः प्रोक्तो वैशाखो माधवो भवेत्।
ज्येष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते॥
नभोमासः श्रावणः स्यात् नभस्यो भाद्र उच्यते।
इषश्चाश्वयुजो मासः कार्तिकश्चोर्जसंज्ञकः॥
सहोमासो मार्गशिरः सहस्यः पौषसंज्ञितः।
माघमासस्तपः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः॥ इति।

एते चर्तवो मधुश्च माधवश्चेतिपूर्वोदाहृतश्रुतेः षड्विधाः। "षड्वा ऋतव" इति श्रुतेश्च। यत्तु ऐतरेयिब्राह्मणे "द्वादशमासाः पञ्च-

त्सव" इति पञ्चर्तुत्वाभिधानं तत्तत्रैव समाहितम्—"हेमन्तशिशिरयोः समासेन" इति। समास एकीकरणं तेनेत्यर्थः। वसन्तादयोऽपि प्रत्येकं द्विविधाः सौराश्चान्द्राश्च। तत्र चैत्रादीनां चान्द्रत्वेन तद्घटितास्ते चान्द्राः। श्रुतिरपि—चन्द्रमाः षड्ढोता स ऋतून् कल्पयतीति।

बह्वृचश्रुतौ—विश्वान्यन्यो भुवनान्यभिचष्ट ऋतूनन्यो विदधज्जायते पुनरिति।

अत्राभिचष्ट इत्यतः सञ्चारादिक्रियाजनकत्वेन सूर्योक्तेरन्य इत्यतश्चन्द्र एव ऋतुविधायक उक्तः। केचित्तु पुनर्जायते इति लिङ्गाद्दतुकल्पकत्वं चन्द्रस्येति, तन्न। सूर्यस्यापि पुनः पुनर्जायमानत्वस्य श्रुतावुक्तत्वात्। ननु यदा मलमासो भवति तदा कथं द्विमासऋतुरितिचेत्,

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः।

इति वचनात् षष्टिदिनात्मकस्य मासस्यैकत्वात्। सौरस्तु विष्णुधर्मोत्तरे—

सौरं मासद्वयं राम! ऋतुरित्यभिधीयते। इति।

विष्णुपुराणेऽपि—द्वौ मासावर्कजावृतु इति। बौधायनेनापि—"मीनमेषयोर्वा वसन्त" इत्युक्तः। यद्यपि बौधायनवाक्येन वसन्तमात्रे सौरत्वमुक्तं तथापि विष्णुधर्मोत्तरवाक्यपर्यालोचनयाऽग्रेऽपि बोध्यम्। एतेषां विनियोगस्तु श्रुतिस्मृतिपुराणादिषु द्रष्टव्यः। तत्र श्रुतिः—वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीतेत्यादिः। तथा वर्षासु रथकार इति।

आश्वलायनः-हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति।

विष्णुधर्मोत्तरेऽपि-वसन्तादिऋतुषु षट्सु षण्मूर्त्तिव्रते पृथक्पूजाविशेषा उक्ताः। तत्रैव स्नानानुलेपनादिदानं ग्रीष्मे पानकदानं चोक्तम्। देवीपुराणे तु—वर्षासु तिलदानं शरद्यन्नदानम्। हेमन्तशिशिरयोर्वस्त्रदानमिति माधवः। तथा दिव्यादिव्यवस्था ऋतुविशेषपुरस्कारेणोक्ता तत्र तत्र द्रष्टव्येति।

इति ऋतुनिर्णयः।

अथ मासो निर्णीयते।

स च चान्द्रसौरसावननाक्षत्रभेदेन चतुर्विधः। तथाच—ज्योतिःशास्त्रे,

प्रथमः सावनो मासो द्वितीयश्चान्द्र उच्यते।
नाक्षत्रस्तु तृतीयः स्यात्सौरो मासश्चतुर्थकः॥ इति।

एतल्लक्षणानि विष्णुधर्मोत्तरे,

चन्द्रमाः पौर्णमास्यन्ते भास्करादतिरिच्यते ।
राशिषट्कं तदा राम ! मासार्धेन न संशयः ॥
भागद्वादशकेनैवं तिथ्यां तिथ्यां क्रमेण तु ।
चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते ॥
असन्निकर्षादारभ्यासन्निकर्षमथापरम् ।
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते ॥
सावने तु तथा मासे त्रिंशत्सूर्योदयाः स्मृताः ।
आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तितः ॥
सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते । इति ।

चान्द्रो द्विविधः कृष्णादिः शुक्लादिश्च । तत्र कृष्णादिस्तु उदाहृत-विष्णुधर्मोत्तरे दर्शितः । शुक्लादिमाह—

हारीतः,

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥ इति ।

अत्रेन्द्राग्न्यग्नीषोमपितृसोमशब्दैरमावास्योत्तरप्रतिपत्पौर्णमास्य-मावास्या उपलक्ष्यन्ते । आद्यायामिन्द्राग्नियागविधानात् पौर्णमास्या-मग्नीषोमीयविधानादमावास्यायां पिण्डपितृयज्ञे सोमस्य पितृमतो विधानात् । तेन शुक्लादिर्मासः प्रतिपादितो भवति । अनयोश्च व्य-वस्थोक्ता—

त्रिकाण्डमण्डनेन,

चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा ।
कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन ॥
येऽपीच्छन्ति न तेषामभीष्टो विन्ध्यस्य दक्षिणे । इति ।

अत्र विन्ध्यदक्षिणतः कृष्णादिनिषेधादुत्तरतो द्वयोरपि विकल्पः । तत्रापि शुक्लादिर्मुख्यः कृष्णादिर्गौणः ।

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ॥
प्रवर्तयामास तदा कालस्य गणनामपि ।
ग्रहान्नागानृतून्मासान्वत्सरान्वत्सराधिपान् ॥

इति ब्रह्मपुराणे मासर्तुसंवत्सरारम्भोक्तेः । नहि कृष्णादिवादिनां सं-वत्सरो भिद्यते । शुक्लादिनैव मलमासोक्तेश्च कृष्णादिना तदसंभवाच्च । यद्यपि यत्किंचित्त्रिंशत्तिथिसमुदायात्मको मासश्चान्द्र एव भवति

तिथिघटितत्वात्, तथापि तत्र चैत्रादिव्यवहाराभावान्मासौ तृतीयविधात्वेन क्वचिदभिहितो धर्मशास्त्रे। एवं सौरादावपि मासशब्दो गौणः। अन्यथानेकशक्तिकल्पनापत्तेः। न च विनिगमनाविरहः।

मस्यन्ते परिमीयन्ते स्वकला वृद्धिहानितः।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः॥

इति सिद्धान्तशिरोमणिना वृद्धिहानिभ्यां चन्द्रकलापरिगणनस्यैव मासपदप्रवृत्तिनिमित्तत्वप्रदर्शनात् इति। केचित्तु सर्वमासेषु सौरचान्द्रयोरेव सौर एव वा मुख्यो मासशब्द इत्याहुः। तदसत्। उक्तसिद्धान्तशिरोमणिवचनविरोधात्। चतुर्ष्वपि मासपदप्रयोगस्तु छत्रिन्यायेन द्वादशविधपुत्रेषु पुत्रपदप्रयोगवदविरुद्धः। गौणमासानामपि वचनात्तत्र तत्र ग्रहणमविरुद्धम्। नास्ति वचनस्यातिभार इति न्यायात्। असति विशेषप्रमाणे चान्द्रस्यैव ग्रहणम्। एवं चैत्रादिशब्दा अपि चान्द्रस्यैव वाचकाः। अनेकार्थत्वस्यान्याय्यत्वात्। मासविशेषवचनत्वाच्च। "नक्षत्रेण युक्तः कालः" "सास्मिन् पौर्णमासी"इति संज्ञायामिति पाणिनिप्रदर्शितयोगबलाच्च। न चायं योगः सौरमासेऽपि सम्भवति मीनादिस्थे सवितरि कदाचिच्चित्रादियुक्तपौर्णमासीयोगसम्भवेऽपि कन्याधनुर्मकरस्थे सवितरि अश्विनीपुष्यमघायुक्तपौर्णमासीनां कदाचिदप्यसम्भवात्। न च यदा नक्षत्रयोगो न स्यात् तदा कथं चैत्रत्वमिति वाच्यम्। कदाचिद्योगस्यैव तथात्वात्। तथा च

च्यवनः—

अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया॥ इति।

अन्त्योपान्त्यौ=आश्विनभाद्रौ। एतच्च त्रिभत्वादिकं द्वित्रिनक्षत्रयोगेन यथा कृत्तिकारोहिण्यन्यतरयोगः कार्तिक्यां मृगार्द्रान्यतरयोगो मार्गशीर्ष्यामित्यादि। न च कार्तिकीं प्रकृत्य—"यदा याम्यं तु भवति कचित्तस्याम्" इति पाद्मे भरणीयोगस्याप्युक्तेः कथं द्विभत्वमिति वाच्यम्। पौर्णमास्यन्तिमक्षणे कृत्तिकारोहिण्यन्यतरयोगस्य विवक्षितत्वात्। चैत्रादीनां चान्द्रत्वं स्पष्टमुक्तम्—

ज्योतिःशास्त्रे,

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः।
चैत्रादिः स तु विज्ञेयः पूर्त्तिद्वित्वेऽधिमासोऽन्त्यः॥

ब्रह्मगुप्तोऽपि—

मेषगरविसङ्क्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्।

एवं वैशाखाद्या वृषादिसङ्क्रान्तियोगेन ॥ इति ।

अनयोश्च लक्षणयोर्यथा नाधिमासादिव्यवस्थाप्तिस्तथा वक्ष्यते सावननाक्षत्रमासयोस्तु चैत्रादिपदप्रयोगाभावात्तद्व्यवहारत्वमनाशङ्क्यमेव । मुख्यगौणमासानां व्यवस्था—

ब्रह्मसिद्धान्ते,

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
सङ्क्रान्तिपौर्णमासाख्यौ तथैव नृपवैश्ययोः ॥

ज्योतिर्गर्गः,

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

आब्दिके=सांवत्सरिके । पितृकार्ये=पाक्षिकादौ । तथा स एव—

आयुर्दायविभागश्च प्रायश्चित्तक्रिया तथा ।
सावनेनैव कर्त्तव्या शत्रूणां चाप्युपासना ॥

उपासना=समयपालनम् । यथा पाण्डवैः कौरवाणाम् ।

पितामहः—

दैवे कर्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः । इति ।

विष्णुधर्मोत्तरे—

नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्याद्गणनात्मकेन । इति ।

ब्राह्मे—

तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च ।
विवाहादौ च सौरादिं मासं कृत्ये विनिर्दिशेत् ॥

इति मासः ।

अथ दिवसः

स चतुर्विधः । तदुक्तम्—

विष्णुधर्मोत्तरे,

तिथिनैकेन दिवसश्चान्द्रे माने प्रकीर्त्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥
आदित्यराशिभोगेन सौरो दिवस उच्यते ।
चन्द्रनक्षत्रभोगेन नाक्षत्रो दिवसः स्मृतः ॥ इति ।

राशिभोगेन=भुज्यमानराशित्रिंशत्तमेन भागेनेत्यर्थः ।

इति दिवसः ।

अथ पक्षः ।

स द्विविधः शुक्लकृष्णभेदात् । तथाच—

षट्त्रिंशन्मते,

तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण तु ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः"॥ इति ।

अनयोर्विनियोगमाहाश्वलायनः—

उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ।

तथा, हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्यादि ।

इति पक्षः ।

अथ सामान्यतस्तिथिर्निर्णीयते ।

तत्र तिथिर्नामामासंज्ञकसर्वानुस्यूतनित्यकलाव्यतिरिक्तानां प्रतिपद्द्वितीयादिसंज्ञानां पञ्चदशकलानां मध्ये एकैकस्याः कलायाश्चन्द्रमण्डलस्य सूर्यमण्डलेन सह परमसन्निकर्षानन्तरं विप्रकर्षः परमविप्रकर्षानन्तरं वा सन्निकर्षो यावता कालेन भवति तावान्कालो यथाक्रमं शुक्लकृष्णपक्षगतो निरूढलक्षणया प्रतिपत्द्वितीयादिशब्दैः प्रतिपाद्यः । तथा चोक्तम्—

स्कान्दे प्रभासखण्डे,

(१)अमाषोडशभागेन देवि ! प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ! ॥ इति ।

षट्त्रिंशन्मतेऽपि—

तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥
पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदश स्मृताः ।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥ इति ।

सा च तिथिर्द्विविधा पूर्णा खण्डा च । तत्रोदयमारभ्योदयपर्यन्ता पूर्णा ।

आदित्योदयवेलाया आरभ्य षष्टिनाडिकाः ।
सम्पूर्णा इति विख्याताः ।

इति नारदीयोक्तेः ।

( १ ) अस्यार्थः । या महामाया आधाररूपा देहिनां देहधारिणी संस्थिता सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिणी अमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञकैव । इतरा अपि पञ्चदशकला दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदशतिथयो भवन्तीति तिथयः षोडशैवेत्यविरुद्धं वचनमिति ।

प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः।
सम्पूर्णा' इति विख्याता हरिवासरवर्जिताः॥

इति स्कान्दोक्तेश्च। केचित्तु उदयादस्तमयपर्यन्ताया अपि सम्पूर्णत्वं दिनमात्रसाध्येषु भावति।

त्रिसन्ध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात्॥

इति पराशरवचनात्। त्रिसन्ध्यव्यापिनी प्रातर्मध्याह्नसायंसन्ध्याव्यापिनी। न तु प्रातःसन्ध्याद्वयं सायंसन्ध्या चेति, सङ्ख्यायाः पृथक्त्वनिवेशित्वात् "तिस्र आहुतीर्जुहोति"इतिवत्। त्रिसन्ध्यं यः पठेदित्यादौ तथा व्युत्पत्तेश्च। तस्मादहर्मात्रसाध्येषु तन्मात्रव्यापिन्यपि सम्पूर्णेत्याहुः। सम्पूर्णेतरा खण्डा। तत्र सम्पूर्णा एकदिनमात्र सत्वात्तत्तिथिप्रयुक्तस्य कार्यस्य इतरदिने प्रसक्तेः सन्देहाभावान्न निर्णया। खण्डा तु दिनद्वये सत्वात् गुणानुरोधेन च प्रधानावृत्तेरन्याय्यत्वेन तत्प्रयुक्तस्य कार्यस्य सकृदनुष्ठेयत्वात् क तदनुष्ठानमिति सन्देहान्निर्णेया भवति। निषेधे तु खण्डाप्यनिर्णयैव।

निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके॥
तिथीनां पूज्यतानाम कर्मानुष्ठानयोग्यता।
निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते॥

इति वृद्धगार्ग्योक्तेः। अत्र कालस्य निमित्तत्वं नामानुपादेयत्वं न तु वास्तवनिमित्तत्वं सर्वस्य कर्मणो नैमित्तिकत्वापत्तेः। न चेष्टापत्तिः। अमावास्यायां पितृभ्यो दद्यादित्यादौ तत्र तत्र सप्तम्यादिभिरङ्गत्वावगतेः। न च सापि निमित्तसप्तम्येवेति वाच्यम्। उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात्। न चैवं सर्वव्यापिकाम्यत्वापत्तिः अकरणे प्रत्यवायश्रवणादिनानैमित्तिकत्वात्। न चैवं यत्र वीप्सामात्रश्रवणं तत्र निमित्तपरत्वमेव स्यान्न काम्ये कालपरतेति वाच्यम्। निमित्तत्वेनैव श्रुतस्यापि कालस्य उपस्थितत्वादङ्गत्वेनापि बोधकाभावादितिकेचित्। वस्तुतो नैवोपस्थितस्यापि तस्य काम्ये प्रयोगे ग्रहणं बार्हद्गिरादिवत् किन्त्वन्यस्यैव यस्य कस्य चित्। ज्योतिष्टोमे तु वीप्सारहितेन वाक्यान्तरेण वसन्तप्राप्तिरित्यन्यत्र विस्तरः। 'निषेधः कालमात्रक' इत्ययं न वाचनिकोऽर्थः किन्तु न्यायप्राप्त इत्याह—निषेधस्त्वित्यादिना। अयमर्थः। विधिवाक्येषु विधेयार्थस्य श्रेयःसाधनत्वं वाक्यार्थः। निषेधेषु तु कालविशेषे रागप्राप्तस्यानर्थहेतुत्वम्। एवं च षष्ठीषु तैलमित्यादौ ष-

ष्ठ्यां तैलाभ्यङ्गकरणेऽनर्थप्रसक्तेरवगतेर्द्दिनद्वयेऽपि षष्ठ्यां तन्निषेध इति। तस्माद्यावत्तिथिभावित्वेन निषेधस्य निर्णीतत्वान्निषेधेषु खण्डा न निर्णयेति सिद्धम्। न चैवं सर्वनिषेधानां न्यायादेव तात्कालिकत्व-सिद्धौ-

अभ्यङ्गे चाद्यावेस्नाने दन्तधावनमैथुने।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः॥

इति स्कान्दे—अभ्यङ्गादौ पुनर्वचनानर्थक्यमिति वाच्यम्।

मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया॥

इति स्कान्द एव मन्वादौ तत्कालव्यापित्वविधानस्तुत्यर्थं दृष्टान्तत-या तदुपादानात्। तत्कालव्यापिनी तिथिरित्यस्यायमर्थः। तेषामभ्यङ्गादीनां कालमनुष्ठानकालं व्याप्नोतित्वेनाधिकरणत्वेनेति। केचित्तु अभ्यङ्गादिषु वि हितेष्वेव तत्कालव्यापिनी तिथिरनेन वचनेनोक्तेत्याहुः। तदसत्। दन्त-धावनमैथुनयोस्तिथिविशेषेषु विधेरदर्शनात् निषेधदर्शनाच्चेति तत्र खण्डायामपि तत्तदहर्भागरूपकालविहितेषु कर्मसु तत्तदहर्भागरूपका-लव्यापिनी एव तिथिर्ग्राह्या।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्॥

इति वृद्धयाज्ञवल्क्योक्तेः। अहर्भागरूपः कर्मकालश्च प्रातःसङ्गवमध्याह्ना-पराह्णसायाह्नरूपस्त्रिमुहूर्त्तात्मकः।

लेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव च।
प्रातस्तु संस्मृतः कालो भागश्चाह्नः स पञ्चमः॥
सङ्गवस्त्रिमुहूर्त्तोऽथ मध्याह्नस्तत्समः स्मृतः।
ततस्त्रयो मुहूर्त्ताश्च अपराह्णो विधीयते॥
पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृतः।
यद्यदेतेषु विहितं तत्तत्कुर्याद्विचक्षणः॥

इति पराशरोक्तेः। यस्तु द्वेधा त्रेधा विभागः स यत्र कर्मविशेषे वि-हितस्तत्र ग्राह्यः तस्मिन्नसति तु पञ्चधाविभाग एवेति धर्मशास्त्रविदः। तेषां चायमाशयः। अत्र हि यद्यदेतेषु विहितं तत्तदत्र कुर्यादिति न विधेयं विहित एव तात्सिद्धेः। किन्तु यद्यद्विहितं कालापेक्षं तत्त-देतेष्विति विधीयते "मैत्रावरुणः प्रेष्यति चान्वाह" इतिवदपेक्षिता-र्थविधेः तेन सामान्यविधिरयमिति। इदं चोपवासादन्यत्र तस्याहो रात्रसाध्यत्वादिति वक्ष्यते। ततश्च पूर्वेद्युरेव कर्मकालव्याप्तौ एकदेश-

सम्बन्धे वा पूर्ववत् आद्ये कालशास्त्रलाभात् द्वितीये कालमात्रलाभात्। अत एव परत्रैव तथात्वे परैव। दिनद्वये वैषम्येण सम्बन्धे याधिका सैव। साम्येनैकदेशसम्बन्धे तु यत्कर्म प्रातरुपक्रम्य प्रातरेव समाप्यते तत्र प्रधानोपक्रमकालीना ग्राह्या।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे।
तिथिर्याभिमता सा तु कार्या नोपक्रमोज्झिता॥

इति बौधायनोक्तेः नात्र युग्मवाक्यप्रवृत्तिः। यत्तु—

कर्म पूर्वमुपक्रम्य मध्याह्नादौ समाप्यते॥

तत्र वक्ष्यमाणयुग्मवाक्यादिप्रवृत्तिः एवं दिनद्वयव्याप्तावव्याप्तौ चेत्युत्सर्गः। मदनरत्नस्तु साम्येन वैषम्येण वा दिनद्वय एकदेशसम्बन्धेऽपि यद्येकत्रैवानुष्ठानपर्याप्तः कालस्तदा तत्रैव यद्युभयत्र तदा युग्मवाक्यादिना निर्णयः। यदि नोभयत्र किन्तु कर्मैकदेशसम्बन्धस्तत्रापि यदि समस्तदोपक्रमवाक्यात् यदि विषमस्तदाधिक्येनेत्याह।

अथ यद्युग्मवाक्यादिनिर्णायकं तदुच्यते। युग्मवाक्यं तावन्निगमे—

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशीयुक्ता चतुर्दश्या च पूर्णिमा॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम्॥ इति।

युग्मं=द्वितीया, अग्निस्तृतीया, युगं=चतुर्थी, भूतं=पञ्चमी, षट्=षष्ठी। मुनिः=सप्तमी, वसुरष्टमी। रन्ध्रं=नवमी। रुद्र=एकादशी। युग्माग्न्योः युगभूतयोः षण्मुन्योः वसुरन्ध्रयोः रुद्रद्वादश्योः चतुर्दशीपूर्णिमयोः अमावास्याप्रतिपदोश्च तिथ्योर्युग्मे परस्परवेधः। तत्तत्कर्माधिकरणतिथ्यवच्छेदकत्वेन सम्पादितो महाफल इति स्तुत्युन्नीतः कालविशेषविधिः। एतत् युग्मं व्यस्तम्। युग्मगतायाः पूर्वतिथेस्तत्पूर्वतिथिवेध उत्तरतिथेः स्वोत्तरतिथौ वेधो महादोष इति न हि निन्दान्यायेन पूर्वविधिस्तुतिः। एकवाक्यतालाभात्। न तु स्वतन्त्रनिषेधकल्पनं वाक्यभेदापत्तेः। न च विनिगमनाविरहः। नियमविधौ लाघवात् निषेधे गौरवात्। एतद्युग्मवाक्यविरुद्धमपरमापस्तम्बादिषु युग्मवाक्यम्—

प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा॥
चतुर्थी च तृतीयायां महापुण्यफलप्रदा॥ इत्यादि।

तथा खर्वदर्पवाक्यं व्याघ्रोसनसोः—

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पापरौ पूज्यौ हिंसा स्यात् पूर्वकालिकी ॥ इति ।

खर्वः=साम्यम् । दर्पो=वृद्धिः । हिंसा=क्षयः । तथा शुक्लकृष्णपक्षवाक्यमपि विष्णुधर्म्मोत्तरे,

वज्र उवाच ।

नक्षत्रं देवदेवेश ! तिथिं चार्द्धविनिर्गताम् ।
दृष्टोपवासः कर्त्तव्यः कथं शङ्कर ! जानता ॥

ईश्वर उवाच ।

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥ इति ।

अत्र पूर्ववाक्यविहितोदयास्तमयतिथिव्यवस्थार्थं शुक्लकृष्णपक्षवाक्यम् । केचित्तु—

देवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः ।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः ॥

इति वचनानुसारेणोदयास्तमयतिथ्योर्दैवपित्र्यविषयत्वेन व्यवस्थामाहुः । तन्न । उपक्रमोपसंहारयोर्भिन्नविषयत्वापत्तेः । वक्ष्यमाणसाकल्यवचनेन दैवेऽप्यस्तमयव्यापित्वविधानाच्च । उक्तवचनस्य तु पित्र्येऽस्तमयव्यापिनीविधान एव तात्पर्यम् । दैव उदयव्यापिन्यभिधानं त्वनुवादः "यज्ञोपवीती हि देवेभ्यो दोहयति" इतिवत् स्तुत्यर्थः ।

तथा साकल्यवचनं देवलीयम्—

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥
यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥

अत्रेयं व्यवस्था । युग्मवाक्यानि दैवविषयकाणि । खर्वदर्पवाक्यं पित्र्यविषयम् ।

द्वितीयादिकयुग्मानां पूज्यतानियमादिषु ।
एकोद्दिष्टाविवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥

इति व्यासनिगमवचनात्। अत्र पूज्यतानियमादिष्वित्यादिपदेन सकलदैवकर्म्मोपादानम्। एकोद्दिष्टादीत्यादिपदेनाभ्युदयिकश्राद्धातिरिक्तसकलपित्र्योपादानम्। वृद्ध्यादीत्यादिपदे वातद्गुणसंविज्ञानबहुव्रीहिणा यज्ञोपवीतादिदैवधर्म्मवतां दैवश्राद्धादीनां पित्र्याणां च पुत्रवृद्धिनिमित्तवशेनानियतकालकत्वेनानिर्णेयत्वात्। ह्रासवृद्ध्यादीत्यादिपदेन साम्यं तेषां चोदना खर्वदर्पवाक्यमित्यर्थः। युग्मवाक्यानां तु मिथोविरोधे तद्विषयीभूततिथिषु च दशम्यादिषु शुक्लकृष्णवाक्याद्व्यवस्था अपेक्षितविधानात्। अत एव शुक्लकृष्णपक्षवाक्योपक्रमे उपवासग्रहणं दैवमात्रोपलक्षणम्। न चोपवास एव शुक्लकृष्णवाक्याद्व्यवस्था तद्तिरिक्ते तु विरुद्धयुग्मवाक्यद्वयविरोधात् विकल्प एवास्त्विति वाच्यम्। तत्र उपवासप्रक्रमेऽपि "तथा कर्म्माणि कुर्वीत" इति बहुवचनेन कर्म्ममात्रतदवगमात्। यत्तु देवलवाक्यं तत् युग्मवाक्यादिना पूर्वस्यामुत्तरस्यां वा ग्राह्यत्वेन प्राप्तायां तत्तदहर्भागे तात्तिथ्यभावे तिथेः प्रधानत्वादहर्भागस्य च गुणभूतत्वाद् गुणमुख्यव्यतिक्रमन्यायेन तिथावेव कर्त्तव्यत्वे प्राप्ते अहर्भागे एवानुष्ठानसिद्ध्यर्थमिति। एतच्च साकल्यवचनं मन्वादिव्यतिरेकेण। तत्र मन्वादौ चेत्यादिप्रागुदाहृतवचनेनापवादात्। प्राच्यास्तु द्वितीयादिकयुग्मानामिति पूर्वार्द्धे न विवादः। "एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना" इत्यत्र तु एकोद्दिष्टमादिः प्रकृतिर्यस्य माध्याह्निकश्राद्धस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा माध्याह्निकश्राद्धान्युच्यन्ते। मुख्यैकोद्दिष्टस्याशौचान्तदिन एवानुष्ठेयत्वेनानिर्णेयत्वात्। वृद्ध्यादावित्यनेन पौर्वाह्णिकं श्राद्धमुच्यते। ह्रासवृद्धी चन्द्रस्य तयोरादिराश्रयः कृष्णशुक्लपक्षौ तत्सम्बन्धिनी चोदना शुक्लकृष्णपक्षवाक्यमित्यर्थः। अथवा ह्रासवृद्धी कृष्णशुक्लपक्षौ तावादिर्निमित्तभूता यस्याश्चोदनाया निर्णयस्येत्यर्थः। तदयमर्थः। आपराह्णिकश्राद्धातिरिक्तनिर्णयश्राद्धे शुक्लकृष्णवाक्यान्निर्णय इति। आपराह्णिकश्राद्धे तु

यथास्तं सविता याति पितरस्तामुपासते।
तिथिं तेभ्योऽपरो दत्तो ह्यपराह्णः स्वयम्भुवा॥

इतिहेतुमन्निगदयुक्तपरिशिष्टवाक्यात् पक्षद्वयेऽप्यस्तमयव्यापिन्येव, यद्यपि शुक्लकृष्णवाक्यं दशम्यादिविषये दैवेऽपि प्रवर्त्तत इति नास्य पित्र्यमात्रविषयत्वं तथापि आपराह्णिकश्राद्धातिरिक्तश्राद्धेषु शुक्लकृष्णवाक्यमेव निर्णायकमिति व्यवस्थार्थं ह्रासवृद्ध्यादिचोदनेति वाक्यमित्यदोषः। अत एव शुक्लकृष्णवाक्यीयप्रश्नवाक्ये उपवासग्रहणं तादृशपित्र्योपलक्षणम्। खर्वदर्पादिवाक्यं तु प्राच्यनिबन्धृभिरलिखनान्निर्मू-

लम्। समूलत्वे तु अमावास्याविषयमेव।

यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते॥

इति परिशिष्टवाक्यत्वात्। यदपि "कर्मणो यस्य यः काल" इति वाक्ये 'ह्रासवृद्धी न कारणम्' इत्यत्र ह्रासवृद्धिग्रहणं तदपि शुक्लकृष्णपरमेवेत्याहुः। तन्न। ह्रासवृद्धिपदस्य पूर्वार्द्धोपस्थितनिमित्तगतह्रासवृद्धिपरत्वे सम्भवति अत्यन्तानुपस्थितचन्द्रह्रासवृद्धिपरत्वस्यायुक्तत्वात्। पक्षपरत्वे लक्षणापत्तेश्च। किञ्च पूर्वार्द्धे युग्मवाक्यं दैव एवेति नियमविधानात्। उपक्रमानुरोधेनोत्तरार्द्धेऽपि पित्र्य एव शुक्लकृष्णवाक्यमिति नियमौचित्यात्तदतिक्रमेण पित्र्ये शुक्लकृष्णवाक्यस्य विनिनियमकरणे वैरूप्यापत्तेः। एतेन यत् विवेकतीर्थचरणैरेकोद्दिष्टादीत्यादिपदेन पार्वणग्रहणात् वृद्ध्यादीत्यादिपदेन क्षयाहादिग्रहणात् ह्रासवृद्ध्यादीत्यादिपदेन 'यथास्तं' इतिवाक्यस्य ग्रहणादेकोद्दिष्टे पार्वणे च तिथिवृद्धिक्षयसाम्यप्रयुक्तसन्देहे सति शुक्लकृष्णपक्षवाक्याभ्यां युग्मवाक्याभ्यां क्रमेण निर्णय इत्युक्तं, तदपास्तम्। वैरूप्यापत्तेः समानत्वात्। किञ्च वृद्ध्यादावितिपदेन सन्देहप्रतिपादनं व्यर्थं सर्वनिर्णयवाक्यानां सन्देह एव प्रवृत्तेः। तेषु सत्स्वपि कर्मकालव्याप्तौ सत्यां सन्देहाभावाच्च सन्देहोत्थापकत्वमपि तेषां किन्तु तिथिखण्डत्वकर्मकालानुकूल्य। या च यथास्तमित्यादेः पार्वणविषयत्वेन व्यवस्था साप्ययुक्ता। अस्य हि सत्यपि अपराह्णसमभिव्याहारे—

पूर्वाह्णे दैविकं कार्यमपराह्णे तु पैतृकम्।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते॥

इत्यादिवाक्यपर्यालोचनया द्विधाविभक्तदिनापराह्णविषयत्वात् सकलपित्र्यविषयत्वेऽपि न कापि क्षतिः। एकोद्दिष्टादेरपि हि कुतपपूर्वार्द्ध उपक्रमेऽपि तादृशापराह्ण एव समाप्यमानत्वात्। एवं च—

दैवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥
उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः॥

इत्यादिसामान्यवचनान्युपपद्यन्ते। अन्यथा पार्वणमात्रविषयत्वे सङ्कोचापत्तेः। न चोपक्रमप्रभृतिसमाप्तिपर्यन्तं पार्वण एवापराह्णसम्बन्धात् 'यथास्तं' इतिवचनस्य तद्विषयत्वमेवास्त्विति वाच्यम्। शुक्लपक्षगतपार्वणस्यापि पूर्वाह्ण एवोपक्रमात् उपक्रमप्रभृतिसमाप्तिपर्यन्तमपराह्णसम्बन्धाभावात्।

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षेऽपराह्णे तु रौहिणं तु न लङ्घयेत् ॥

इति पार्वणं प्रकृत्याभिधानात् । तस्मात् यथास्तमित्यादि न पार्वणेऽस्तमयव्यापितिथिविधायकं किन्तु सर्वपित्र्ये खर्वदर्पवाक्यप्राप्तास्तमयव्यापित्वानुवादमात्रम् । एतेन —

दैवे कर्म्मणि सम्प्राप्ते यस्यामभ्युदितो रविः ।
सा तिथिः सकला ज्ञेया पित्र्येऽर्थे चापराह्णिकी ॥

इति मार्कण्डेयवचनमपि सत्यप्यपराह्णसमभिव्याहारे सर्वपित्र्यविषयत्वेनैव व्याख्यातम् । तस्मादुक्तयुक्त्या पित्र्ये खर्ववाक्यात् , दैवे युग्मवाक्यात् , युग्मवाक्यविरोधे तदविषयतिथिषु च शुक्लकृष्णवाक्यान्निर्णय इति सिद्धम् । यत्र पूर्वविद्धाया ग्राह्यत्वं युग्मादिवाक्यादवगतं यथा द्वितीयाविद्धायास्तृतीयायास्तत्र तृतीयाया द्वितीयादिनास्तमयात् पूर्वं त्रिमुहूर्त्तायास्ततोऽधिकाया वा सत्त्वे एवाग्राह्यत्वम् । न तु ततो न्यूनायाः सत्त्वे । एवं यत्र उत्तरविद्धाया ग्राह्यत्वं युग्मादिवाक्यादवगतं यथा तृतीयाविद्धाया द्वितीयायास्तत्र द्वितीयायास्तृतीयादिने उदयादूर्ध्वं त्रिमुहूर्त्तायास्ततोऽधिकाया वा सत्त्वे एव तत् न तु ततो न्यूनत्वे ।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥

इति पैठीनसिवचनात् ,

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥

इतिविष्णुधर्म्मोत्तरवचनाच्च । अस्तमिते इत्यादिकर्म्मणि क्तः । अस्तं गन्तुमारब्ध इत्यर्थः । अस्तमयोत्तरमन्होऽसत्त्वात् । अत्रोदयव्यापिन्या द्विमुहूर्त्तसत्तास्तमयव्यापिन्यास्त्रिमुहूर्त्तसत्ता विधीयते । न तु हव्ये योदयव्यापिनी कव्ये यास्तमयव्यापिनी तस्या द्वित्रिमुहूर्त्तसत्तोद्देश्यविशेषणस्याविवक्षितत्वात् । अत एव—

यां प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात् त्रिमुहूर्त्तगा ।
धर्म्मकृत्येषु सर्वेषु सम्पूर्णां तां विदुर्बुधाः ॥

इति शिवरहस्ये सामान्यतो धर्म्मकृत्येष्वित्युक्तम् । विष्णुधर्म्मवाक्ये च द्विमुहूर्त्तग्रहणमनुकल्पत्वेन द्रष्टव्यम् ।

त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी ।
द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी ॥

इति दक्षवचनेऽपिशब्दश्रवणात्, पूर्वार्द्धे क्षयगामिन्यास्त्रिमुहूर्त्ताया निषेधस्य प्राप्तिपूर्वकत्वेन वृद्धिसाम्ययोस्त्रिमुहूर्त्तग्राह्यत्वलिङ्गाच्च। वस्तुतस्तु पूर्वोत्तरार्द्धयोरेकवाक्यतार्थमुत्तरार्द्धगतापिशब्दानुषङ्गेण त्रिमुहूर्त्तानुकल्पस्तुत्यर्थत्वमेव युक्तं न तु स्वतन्त्रो निषेधो वाक्यभेदापत्तेः। एतेनायं स्वतन्त्रो निषेधः अतस्तत्र चतुर्थमुहूर्त्तस्पर्शिनी ग्राह्या इति माधवोक्तमप्यपास्तम्। एवं यत्र पूर्वविद्धोत्तरविद्धा वा निषिध्यते तत्रापि यदि पूर्वातिथिर्वेधिका यथा प्रतिपत् द्वितीयायास्तत्र प्रतिपदुदयानन्तरं त्रिमुहूर्त्ता ततोऽधिका वोत्तरातिथेर्वेधिका, यदि उत्तरातिथिर्वेधिका यथा द्वितीया प्रतिपदस्तत्र द्वितीया प्रतिपदुदयेऽस्तमयात् प्राक् त्रिमुहूर्त्ता ततोऽधिका वा न ततो न्यूनेति।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः॥

इतिपैठीनसिवचनात्। यानि तु—

व्रतोपवासदानादौ घटिकैकापि या भवेत्।

तथा,

आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत्।

इत्यादीनि त्रिमुहूर्त्तन्यूनाया अपि सम्पूर्णत्वप्रतिपादकानि तान्यष्टाकपाल आग्नेयाधिकरणन्यायेन त्रिमुहूर्त्तवेधस्तावकानि स्तोकापीत्यपिशब्दोपादानादित्यलम्। अयं च निर्णयोऽहोरात्रसाध्योपवासादिकर्मातिरिक्तविषयः। उपवासादौ तु या पूर्वदिने शुद्धा सत्युत्तरदिने नास्ति त्रिमुहूर्त्तन्यूनास्ति वा तत्रायुग्मापि पूर्वैव त्रिमुहूर्त्तन्यूनाया युग्मशास्त्राविषयत्वात्। या तु पूर्वदिने त्रिमुहूर्त्तविद्धोत्तरदिने त्रिमुहूर्त्ता ततोऽधिका वा तत्र युग्मवाक्यान्निर्णयः। न चोत्तराया युग्मवाक्यविषयभूतत्वेऽपि पूर्वैव कार्या। पूर्वदिनेऽहोरात्रकालव्यापित्वादितिवाच्यम्। युग्मत्वेनोपक्रमकालीनत्वेन च बलीयस्त्वात् उपवासस्य च सङ्कल्परूपत्वात् तस्य च "प्रातः सङ्कल्पयेद्विद्वान्" इतिवचनेन प्रातःकाले विधानेनोत्तरातिथेः प्रधानकालत्वाच्चेति केचिद् वदन्ति। हेमाद्रिमदनरत्नयोस्तूपवासे तु यत्र पूर्वतिथिविद्धोत्तरा निषिद्धा यथा प्रतिपद्विद्धा द्वितीया तत्र त्रिमुहूर्त्तन्यूनयापि प्रतिपदा विद्धा द्वितीया यद्युत्तरदिने त्रिमुहूर्त्तन्यूनाप्यस्ति तदोत्तरैव।

घटिकार्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिम्।
पञ्चगव्यघटं पूर्णं सुराया बिन्दुको यथा॥

तथा,

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः ।

तथा उपवासं प्रक्रम्य—

घटिकामात्रवेधोऽपि दूषयत्युत्तरां तिथिम् ॥

इतिषट्त्रिंशन्मतनिगमस्मृत्यन्तरैर्दूषकवेधोक्तेः ।

उदये तूपवासस्य नक्तस्यास्तमये तिथिः ।

तथा,

व्रतोपवासनियमे घटिकैकापि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके ॥
आदित्योदयवेलायां याल्पापि च तिथिर्भवेत् ।
पूर्णा इत्येव मन्तव्या प्रसूता नोदयं विना ॥

इत्यादिबौधायननिगमादिवचनैः स्वल्पाया अपि उदयगामिन्या ग्राह्यत्वाभिधानात् । यदा तूत्तरदिने स्वल्पापि न लभ्यते तदा निषिद्धपूर्वतिथिविद्धाप्युपोष्या ।

अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु ।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥
तदर्धविद्धान्यन्यानि दिनान्युपवसेन्नरः ।

इति ऋष्यशृङ्गोक्तेः । निषिद्धैरविद्धानि चेन्न लभ्यन्त इत्यन्वयः । पञ्चमुहूर्तविद्धाया एकादश्या ग्राह्यत्वं च यदा दशमी पञ्चमुहूर्ता परदिने एकादशी द्विमुहूर्ता द्वादशी च क्षयं गता तदा ज्ञेयम् । अरुणोदयमारभ्य पञ्चमुहूर्त्तवेध इति मदनरत्ने । तदर्द्धविद्धानीति तु निषिद्धवेधोपलक्षणम् । घटिकार्द्धं त्रिभागं वेत्यादिवाक्यानुसारात् । यत्र तु पूर्वविद्धा ग्राह्येत्युक्तं तत्र त्रिमुहूर्त्तवेध एवेति विशेष इति युक्तम् ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनिराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धरापुण्डरीकविकासदिनकर-श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसुनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधानिबन्धे समयप्रकाशे सामान्यतिथिनिर्णयः ।

एवं सामान्यतस्तिथौ निर्णीतायां विशेषतस्तिथिर्निर्णीयते। तत्र प्रतिपत्तावन्निर्णीयते। तस्या मुख्यत्वात्। प्रतिपदुपवासेषु शुक्ला कृष्णा वा पूर्वैव।

प्रतिपत् पञ्चमी चैव उपोष्या पूर्वसंयुता।

इति जाबालिवचनात्।

प्रतिपत् पञ्चमी भूता सावित्री वटपूर्णिमा।
नवमी दशमी चैव नोपोष्याः परसंयुताः॥

इति ब्रह्मवैवर्त्ते परविद्धाया निषेधाच्च। यत्तु—

प्रतिपत् सद्वितीया स्यात् द्वितीया प्रतिपद्युता।

इत्यापस्तम्बवचनं तदुपवासेतरदैवकर्म्मविषयम्। उपवासेऽपि अनपराह्णिकप्रतिपद्विषयं च वक्ष्यमाणवचनानुसारात्। इदं चोपवासेतरदैवकर्म्मण्युत्तरविद्धाया ग्रहणं तत् कृष्णपक्षे। शुक्लपक्षे प्रतिपद्यप्यमावास्येतिपूर्वविद्धाया एव विधानात्। न चैतदप्युपवासमात्र उपसंह्रियतामिति वाच्यम्। शुक्लपक्षप्रतिपन्मात्रविषययुग्मवचनस्य विशेष्यत्वे शुक्लकृष्णोभयसाधारणैरुपवासवाक्यैरुपसंहारायोगात्। न च सामान्यवाक्यान्येव विशेषरूपेण युग्मवाक्येनोपसंह्रियन्तामितिवाच्यम्। तन्मते युग्मवाक्यस्य उपवासातिरिक्तदैवकर्म्मविषयत्वस्याप्यवश्यवाच्यत्वात्तेनैवोपवासेऽपि सिद्धौ सामान्यवचनानर्थक्यापत्तेः। माधवाचार्यास्तु उपसंहारमेव मत्वापस्तम्बवाक्यात् कृष्णोपवासेऽप्युत्तरैव ग्राह्येत्याहुः। दैवान्तरेषु तु कृष्णाया उत्तरविद्धात्वं शुक्लायाश्च पूर्वविद्धात्वमविवादमेव। इदं चोपवासे दैवान्तरेषु च शुक्लायाः पूर्वविद्धात्वं न सार्यं त्रिमुहूर्त्तसत्त्वे किन्तु आपराह्णिक्या एव।

प्रतिपत्सम्मुखी कार्या या भवेदापराह्णिकी।

इति स्कन्दोक्तेः। यत्तु गौडैः एतस्य वचनस्य निर्म्मूलत्वं, समूलत्वे आपराह्णिकपित्र्यविषयत्वं यच्छब्दयोगात्। वचनान्तरप्राप्तां पित्र्य आपराह्णिकीमुद्दिश्य सम्मुखीत्वस्य लाघवेन विधानादित्युक्तम्। तन्न। तथात्वे प्रतिपत्पुरस्कारेण सम्मुखीत्वविधानानर्थक्यापत्तेः।

प्रतिपत् सैव विज्ञेया या भवेदापराह्णिकी।
दैवं कर्म्म तया कार्यं पित्र्यं च मनुरब्रवीत्॥

इति माधवोदाहृतव्यासवचनविरोधाच्च। यदपि च यच्छब्दयोगादापराह्णिक्या उद्देश्यत्वमुक्तम्। तदप्ययुक्तम्। उक्तयुक्त्या सम्मुखीमुद्दिश्यापराह्णिकत्वस्यैव विधेयत्वावगमात्। यच्छब्दयोगस्तु व्यवहितक-

त्पनयापि न दुष्यति "यदाहवनीये जुहोति" इतिवत्। यदा तु सम्मुख्यापराह्णिकी न लभ्यते तदोत्तरैव "प्रतिपत् सद्वितीया स्यात्" इति सामान्यवचनात्। माधवस्तु तत्रापि सायान्हव्यापिन्या ग्राह्यत्वमाहानुकल्पत्वात्। शेषं तु सामान्यनिर्णयादवसेयमिति। चैत्रशुक्लप्रतिपत्तु संवत्सरारम्भादिप्रयुक्ताभ्यङ्गादावौदयिकी ग्राह्या।

चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ॥

इति ब्राह्मोक्तेः। दिनद्वये तत्सत्त्वासत्त्वयोः पूर्वैव।

चैत्रसितप्रतिपदि यो वारोऽर्कोदये स वर्षेशः ।
उदयद्वितये पूर्वा नोदययुगलेऽपि पूर्वा स्यात् ॥

इति ज्योतिर्निबन्धधृतवचनात्।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्त्तव्या प्रतिपत् सर्वदा बुधैः ॥

इति वृद्धवशिष्ठोक्तेश्च। नवरात्रारम्भप्रतिपत्तु—

अमायुक्ता न कर्त्तव्या प्रतिपच्चण्डिकार्चने ।
मुहूर्त्तमात्रा कर्त्तव्या द्वितीयादिगुणान्विता ॥

इति देवीपुराणवचनात्।

तिस्रो ह्येताः पराः प्रोक्तास्तिथयः कुरुनन्दन ! ।
कार्त्तिकाश्वयुजोर्मासोश्चैत्रे मासि च भारत ! ॥

इति प्रतिपदमुपक्रम्य ब्रह्मपुराणाच्च परयुता कार्या। यत्तु—
देवीपुराणे,

शृणु राजन् ! प्रवक्ष्यामि चण्डिकापूजनक्रमम् ।
आश्विनस्य सिते पक्षे प्रतिपत्सु शुभे दिने ॥

इत्युपक्रम्य—

शुद्धे तिथौ प्रकर्त्तव्यं प्रतिपच्चोर्ध्वगामिनी ।
आद्यास्तु नाडिकास्त्यक्त्वा षोडश द्वादशापि वा ॥
अपराह्णे च कर्त्तव्यं शुद्धे सन्ततिकाङ्क्षिभिः ।

इत्यापराह्णिक्या ग्राह्यत्वमुक्तं तत् परदिने प्रतिपदोऽभावे ज्ञेयम्।

पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी ।
नवरात्रव्रतं तस्यां न कर्त्तव्यं शुभेच्छुना ॥

इति मार्कण्डेयदेवीपुराणयोः पूर्वविद्धानिषेधाच्च। विशेषो नवरात्रेऽत्र वक्ष्यते। बल्युत्सवप्रतिपत्तु पूर्वा "वत्सरादौ वसन्तादौ" इति पूर्वोदाहृतवचनात्।

पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ।

इति पाद्मोक्तेश्च । अन्यविशेषो दीपोत्सवे वक्ष्यते । होलाका प्रतिपत् औदयिकी ।

प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।

इति भविष्योक्तेः । उभयत्र तथात्वातथात्वयोस्तु वत्सरादौ वसन्तादाविति वचनात् पूर्वैव । इयं कामपूजायां प्रातर्युता ग्राह्या ।

वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ।
सम्प्राश्य चूतकुसुमं सहचन्दनेन
सत्यं हि पार्थ ! पुरुषोऽथ समां सुखी स्यात् ॥

इति पुराणसमुच्चयोक्तेः । भाद्रशुक्लप्रतिपन्महत्तपव्रते रुद्रव्रतत्वात् पूर्वा ग्राह्या ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ।

इति ब्रह्मवैवर्त्तोक्तेः ।

अथ द्वितीया निर्णीयते ।

सा च सर्वदेवकार्येषु शुक्ला परा कृष्णा तु पूर्वा ग्राह्या। युग्माग्नीतिपरविद्धाग्राह्यत्वप्रतिपादकस्य निगमवाक्यस्य—

प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युता ।

इत्यापस्तम्बवचनेन,

प्रतिपत् सम्मुखी कार्या द्वितीया द्विजसत्तम ! ।

इति ब्रह्मवैवर्त्तवचनेन च विरोधे—

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति मार्कण्डेयवाक्येन व्यवस्थाविधानात् । केचित्तु युग्माग्नीति वाक्ये "चतुर्दश्या च पूर्णिमा" इति पौर्णमासीसमभिव्याहारात् सर्वं वाक्यं स्वत एव शुक्लपक्षविषयमिति न शुक्लपक्षे इत्यस्य व्यवस्थापकत्वमिति वदन्ति। तत्तु समभिव्याहाररूपसन्निधिवशेन सामान्यविषययुगादिश्रुतिसङ्कोचायोगात् प्रतिपद्यप्यमावास्येति पक्षद्वयवर्त्यमाप्रतिपत्समभिव्याहाराच्चायुक्तमिति पूर्वोक्तैव व्यवस्था ज्यायसी । नन्वेवं युग्मादिवाक्यानां सर्वदैवकार्यतिथिविषयत्वे—

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः ॥

इत्युपवासमात्रविषयकपरान्विताग्राह्यत्वप्रतिपादकविष्णुधर्मोत्तरवाक्यानर्थक्यं स्यात्। एतद्वचनाभावे हि—

तृतीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः।
वेधादधस्ताद्दृन्युक्ता उपवासे तिथीश्चिमाः॥

इति नारदीयवाक्ये तृतीयाया द्वितीयादूषकत्वाभिधानद्वारा उपवासे परविद्धद्वितीयाया निषेधात् सा उपवासातिरिक्तदैवविषयैव स्यात्। विष्णुधर्मोत्तरवाक्येन च उपवास एव पुनः परान्विताविधाने सति विधिनिषेधयोर्विरोधे सति शुक्लकृष्णवाक्याभ्यां व्यवस्थापनात्। तथाचात्र उपवासग्रहणस्य उपलक्षणमात्रपरतया परविद्धायाः पूर्वविद्धायाश्च शुक्लकृष्णपक्षव्यवस्थया सर्वदैवविषयत्वं सिद्धं भवति। एवं सर्वत्र सामान्यतो निर्णीतेऽर्थे विशेषतो निषेधे पुनर्विशेषविधानस्य इदमेव प्रयोजनं द्रष्टव्यम्। यच्च कृष्णद्वितीयायाः पूर्वविद्धाया ग्राह्यत्वमुक्तं तत् पूर्वाह्णसंस्पर्शे सत्येव।

प्रतिपत् सम्मुखी कार्या या भवेदापराह्णिकी।
पौर्वाह्णिकी च कर्त्तव्या द्वितीया तादृशी विभो!॥

इति स्कन्दपुराणवचनात्। चस्त्वर्थे। तादृशी सम्मुखी पूर्वविद्धेत्यर्थः। अस्य च वाक्यस्य पौर्वाह्णिकत्वपूर्वविद्धत्वोभयविधानपरत्वे गौरवप्रसङ्गात्। यत्र पूर्वविद्धत्वं प्राप्तं तत्रैव पौर्वाह्णिकत्वविधानात् कृष्णपक्षविषयत्वमेव। अस्मिंश्च वाक्ये यद्यपि पूर्वाह्णापराह्णशब्ददर्शनात् द्वेधा विभाग एव प्रतिभासते। तथापि सायान्हमात्रव्यापिन्यामविद्यमानस्यापराह्णिकत्वस्य द्वेधाविभागपक्षेऽसम्भवात् पञ्चधाविभागपक्षोपादानेनैवापराह्णिकत्वमुपपादनीयम। तथा च तत्साहचर्यात् पौर्वाह्णिकत्वमपि पञ्चधाविभागपक्षेणैव, अन्हः पूर्वो भागः पूर्वाह्ण इत्येवं व्युत्पत्त्या प्रातः-कालसम्बन्धित्वमेव व्याख्येयम्। नन्वेवं व्याख्याने एतस्याः शुद्धत्वादेव ग्राह्यत्वं प्राप्तमिति वचनमिदमनर्थकं स्यात्। मैवम्। एतद्वचनाभावे हि या पूर्वेद्युः सर्वं प्रातःकालं परित्यज्य प्रवृत्ता परेद्युश्च त्रिमुहूर्ता ततोऽधिका वा सा कृष्णपक्षगतत्वेन पूर्वैव ग्राह्या स्यात्। एतद्वचनसत्त्वे तु तस्याः पौर्वाह्णिकत्वाभावात्। परेद्युश्च परविद्धावचनानां युग्माग्नीत्यादीनां प्रवृत्तेः परस्या एव ग्राह्यत्वसिद्धिरित्यस्य वचनस्य प्रयोजनं व्यतिरेकतः सिद्धं भवति।

ननु युग्मादिवाक्यानां शुक्लकृष्णवाक्याभ्यां शुक्लकृष्णविषयत्वेन व्यवस्थापितानां कथं कृष्णपक्षे प्रवृत्तिः? उच्यते। युग्मादिवाक्यानां "द्वितीया प्रतिपद्युता" इत्यादिवचनैर्विरोधे खलु शुक्लकृष्ण-

वाक्ययोर्व्यवस्थापकत्वम्। यदा तु तानि वचनानि पौर्वाह्णिकीत्यनेन वि·शेषवचनेन सम्बध्यन्ते या प्रतिपद्युक्ता ग्राह्या सा पौर्वाह्णिकीत्येवमर्थतया तदा एतादृशानामेव युग्माग्निवाक्यविरोधात् शुक्लकृष्णपक्षपरतया व्यवस्थापनम्। या तु सर्वं प्रातःकालं परित्यज्य प्रवृत्ता परदिने च त्रि·मुहूर्त्ता ततोऽधिका च तस्यां पूर्वविद्धाग्राह्यत्ववचनाभावात् भवेदेव युग्मवाक्यानां प्रवृत्तिरिति। या तु परेद्युस्त्रिमुहूर्त्तन्यूना सा पूर्वाह्णसंस्प·र्शाभावेऽपि पूर्वैव ग्राह्या सन्देहाभावात्, परविद्धावचनानामप्रवृत्तेश्च। प्राच्यास्तु इदं वचनं न लिखन्ति। माधवानन्तभट्टमते तु सर्वा द्वितीया परा। तथा च—

माधवः,

पूर्वेद्युरसती प्रातः परेद्युस्त्रिमुहूर्त्तगा।
सा द्वितीया परोपोष्या पूर्वविद्धा ततोऽन्यथा॥ इति।

श्रावणादिमासचतुष्टयासितपक्षद्वितीयासु अशून्यशयनाख्ये व्रते चन्द्रोदयव्यापिनी ग्राह्या तस्य चन्द्रोदये विधानात्। चन्द्रोदयव्रतत्वं चास्य

चन्द्राय चार्घ्यो दातव्यो दध्यक्षतफलादिभिः।
इतिपुराणान्तरवचनात्। व्रतं चोक्तम्—

भविष्ये,

अशून्यशयनं नाम द्वितीयां शृणु भारत!।
यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप!॥ इति।
अत्रोपोष्येत्यनेनोपासनमुक्तं न तु भोजननिवृत्तिः।
नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः।

इतिपुराणान्तरे नक्तभोजनविधानात्। दिनद्वये चन्द्रोदये तत्सत्त्वास·त्त्वयोः परैव।

चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु।
अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकम्॥

इतिपुराणान्तरे जयायुक्ताविधानादिति मदनरत्नः। कार्त्तिकशुक्लद्वितीया यमपूजायामापराह्णिकी ग्राह्या।

ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम्।

इतिस्कान्दोक्तेः।

भविष्ये—

प्रथमा श्रावणे मासि मासि भाद्रे तथा परा।
तृतीयाश्वयुजे मासि चतुर्थी कार्तिके भवेत्॥

श्रावणे कलुषा नाम तथा भाद्रे च गीर्मता ।
आश्विने प्रेतसञ्चारा कार्त्तिके याम्यका मता ॥

इत्युक्त्वा प्रथमायां व्रतं द्वितीयायां सरस्वतीपूजां तृतीयायां श्राद्ध-मुक्त्वा चतुर्थ्यामुक्तम्—

कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! ।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ॥
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र ! न भोक्तव्यं ततो नरैः ।
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ॥
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ।
सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः ॥

प्रतिपन्नकाः=भगिनीत्वे परिकल्पिता इति हेमाद्रिः ।

इति द्वितीयानिर्णयः ।

अथ तृतीयानिर्णयः ।

रम्भातृतीयातिरिक्ता तृतीया उपवासादिसकलदैवेषु चतुर्थीयुता ग्राह्या । तदुक्तम्—

ब्रह्मवैवर्त्ते,

रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तमाः !
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥

गणः=चतुर्थी ।

आपस्तम्बः—

चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रपौत्रप्रदायिनी ॥

अत्र चतुर्थीयुततृतीयायाः प्रशंसाश्रवणेन विधेयतावगम्यते । द्वितीयायुक्ततृतीयाया निषेधश्च श्रूयते । तथा च—

स्कन्दपुराणे,

द्वितीयया तु या विद्धा तृतीया न कदाचन ।
कर्तव्या व्रतिभिस्तात ! धर्मकामार्थतत्परैः ॥
विहायैकां तु रम्भाख्यां तृतीयां पुण्यवर्धिनीम् ।
तस्मात्र ऋषिभिः प्रोक्तं वचनं कृत्तिकासुत ! ॥

ब्रह्मवैवर्ते च—

तृतीया तु न कर्त्तव्या द्वितीयोपहता विभो ! ।
द्वितीयया युतां तां तु यः करोति नराधमः ॥

संवत्सरकृतेनेह नरो धर्म्मेण मुच्यते ।

तथा,

द्वितीयाशेषसंयुक्तां कुरुते नृपसत्तम ! ।
स याति नरकं घोरं कालसूत्रं भयङ्करम् ॥
द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥

स्कन्दपुराणे—

तृतीया तु न कर्त्तव्या द्वितीयासंयुता तिथिः ।
या करोति विमूढा स्त्री पुरुषो वा शिखिध्वज ! ।
द्वितीयासंयुतां तात ! पूर्वधर्म्माद्विलुप्यते ॥
विधवात्वं दुर्भगत्वं भवेन्नैवात्र संशयः ।
कलाकाष्ठापि या चैव द्वितीया सम्प्रदृश्यते ॥
सा तृतीया न कर्त्तव्या कर्त्तव्या गणसंयुता ।
य इच्छेत्परमं गुह्यं व्रतकर्त्ता शिखिध्वज ! ॥

भविष्यत्पुराणे—

कार्या द्वितीयया सार्द्धं न तृतीया कदाचन । इति ।

अत्र "रम्भाख्यां वर्जयित्वा" इति "विहायैकां तु रम्भाख्यां" इति च श्रवणाद्रम्भाव्रते द्वितीयायुक्ततृतीया ग्राह्येति गम्यते साक्षाद्विधानाच्च । यथोक्तम्—

स्कन्दपुराणे,

बृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्त्तव्या सम्मुखी तिथिः ॥

तथा,

कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी ।
बृहत्तपा तथा ब्रह्मन् ! कर्त्तव्या सम्मुखी तिथिः ॥

एवं च युग्माग्नीतियुग्मवाक्यमपि रम्भाव्रतविषयमेव । न च द्वितीयायुततृतीयानिषेधाः चतुर्थीयुततृतीयाविधय उपवासमात्रविषयाः।

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति बृहस्पतिवचनानुगुण्यादितिवाच्यम् ।

अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ।

इत्यादिवचनेषु उपवासव्यतिरिक्तकार्येऽपि परविद्धात्वसङ्कीर्त्तनात् । एकादश्यष्टमीतिवाक्यं तु तिथिविशेषे उपवासे परविद्धत्वं प्रतिपाद्य·

ति । न तु कार्यान्तरे परविद्धत्वं निवर्त्तयति । उभयार्थत्वे वाक्यभेदप्रसङ्गात् । केचित्तु द्वितीयायुक्ततृतीयाविधिः शुक्लतृतीयाविषयः । निषेधस्तु कृष्णतृतीयाविषयः । नचैवं रम्भावाक्यमनर्थकं स्यादितिवाच्यम् । एकादश्यष्टमीतिप्रागुक्तवचनवशादुपवासे शुक्लपक्षगताया अपि तृतीयायाः परविद्धत्वाश्रयणात्तदपवादत्वेन रम्भावाक्यारम्भोपपत्तेरित्याहुः । तदयुक्तम् । वैपरीत्यस्यापि वक्तुं शक्यत्वात् । द्वितीयायुततृतीयाविधिः कृष्णतृतीयाविषयः । निषेधस्तु शुक्लतृतीयाविषय इति । किञ्च—

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इतिवचनं विपरीतमेवार्थमवगमयति । अत्र हि कृष्णपक्षगतायास्तृतीयायास्तिथेर्यस्यामस्तमितो रविरितिद्वितीयायुताया ग्राह्यत्वं प्रतीयते । शुक्लपक्षगतायास्तु तस्या एव तिथेर्यस्यामभ्युदितो रविरिति चतुर्थीयुताया ग्राह्यत्वम् । वस्तुतस्तु न शुक्लकृष्णभेदेन विधिनिषेधयोर्विषयव्यवस्था युक्तिमती । तथासति द्वितीयायुक्ततृतीयानिषेधकानां चतुर्थीयुक्ततृतीयाविधायकानां च प्रागुदाहृतानां बहूनां सङ्कोचापत्तेः । अस्मत्पक्षे तु न तथा वाक्यसङ्कोचः । रम्भाव्रतपारित्यागेन द्वितीयायुततृतीयानिषेधानां चतुर्थीयुततृतीयाविधीनां च शुक्लपक्षेऽपि प्रवृत्त्यङ्गीकरणात् "अन्येषु सर्वकार्येषु" इति वचनं च मत्पक्षे बाध्यते। केवलं युग्मवाक्यमेव तु रम्भाव्रतविषयत्वेनास्मत्पक्षे सङ्कोच्यते इति विशेषः । अयं च द्वितीयावेधः स्वल्पोऽपि त्याज्यो न तु मुहूर्त्तत्रयपरिमित एव । "द्वितीयाशेषसंयुक्तां" "कलाकाष्ठापि या चैव" इत्यादिवचनेभ्यस्तथावगमात् । अत एव तृतीयापि चतुर्थीयुता स्वल्पापि ग्राह्या न तु त्रिमुहूर्त्तत्वकर्मकालत्वादरः । अयं चाल्पस्यापि द्वितीयावेधस्य निषेधः, अल्पोत्तरतृतीयापरिग्रहश्च शिष्टाचारात् गौरीदैवत्यव्रतविषय एव । व्रतान्तरेषु तु निषेध्यद्वितीयावेधादौ त्रिमुहूर्त्तत्वमादरणीयमेव यदा तूत्तरदिने अल्पापि तृतीया न लभ्यते तदा सर्वव्रतेषु द्वितीयायुक्तापि ग्राह्यैव ।

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धापि कर्त्तव्या यदि न स्यात् परेऽहनि ॥

इति वृद्धवसिष्ठवचनात् । यदा तु पूर्वदिने तृतीया शुद्धा सती उत्तरदिने वर्द्धते तदा शुद्धामपि त्यक्त्वा चतुर्थीयुक्तैव ग्राह्या "गणयुक्ता प्रशस्यते" इत्यादिवचनैः चतुर्थीयुक्तायाः प्राशस्त्यावगमादिति केचित् ।

अन्ये तु एतादृशविषये निषेधवाक्यानामप्रवृत्तेः शुद्धाधिकायामप्युत्त-रविद्धैव तृतीया ग्राह्येत्येतदर्थप्रतिपादकस्य वचनस्यानुपलम्भात् गणयुक्तादिवाक्यानां च तृतीयायाः द्वितीयावेधचतुर्थीवेधयोः सतोः पूर्वविद्धा वा ग्राह्या उत्तरविद्धा वा ग्राह्या इत्येवं सन्देहे सति निर्णायकत्वात् एतादृशविषये च तिथेः पूर्णत्वेन सन्देहानुदयात् निर्णायकगण-युक्तादिवाक्याप्रवृत्तेः पूर्वैव तृतीया ग्राह्येत्याहुः । तदयं सङ्क्षेपः। रम्भाव्र-तातिरिक्तेषु उपवासादिसकलदैवकार्येषु न द्वितीयाविद्धा तृतीया ग्राह्या किन्तु चतुर्थीयुक्ता। गौरीव्रतेषु स्वल्पयापि द्वितीयया युक्ता वर्ज्या न द्वितीयायास्त्रिमुहूर्त्तत्वादरः। तथा गौरीव्रत एव अत्रिमुहूर्त्तापि चतुर्थीयु-क्ता ग्राह्या व्रतान्तरेषु वेध्यवेधकयोस्तृतीयाद्वितीययोस्त्रिमुहूर्त्तत्वमाश्रय-णीयमेव। यदा तु स्वल्पापि तृतीयोत्तरदिने न लभ्यते तदा द्वितीयावि-द्धापि सर्वव्रतेषु ग्राह्यैव रम्भाव्रते तु द्वितीयायुक्तैव ग्राह्या तदलाभे च द्वितीयायुक्तापि शुद्धाधिका पुनः पूर्णत्वात् पूर्वैवादेयेति ।

इति तृतीयानिर्णयः ।

अथ चतुर्थीनिर्णयः ।

चतुर्थी पञ्चमीयुता ग्राह्या युगभूतानीतिवाक्यात् ।
एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति वृद्धवशिष्ठवाक्याच्च । विनायकव्रते तु तृतीयायुक्ता चतुर्थी ग्राह्या । तदुक्तम्—

ब्रह्मवैवर्त्ते,

चतुर्थीसंयुता या तु तृतीया सा फलप्रदा ।
चतुर्थी च तृतीयायां महापुण्यफलप्रदा ॥
कर्त्तव्या व्रतिभिर्वत्स ! गणनाथसुतोषिणी । इति ।

अत्र गणनाथेतिविशेषणसामर्थ्यात् गणनाथव्रते तृतीयायुक्ता चतुर्थी ग्राह्येति गम्यते । एवं च—

चतुर्थीसंयुता कार्या तृतीया च चतुर्थिका ।
तृतीयया युता नैव पञ्चम्या कारयेत्क्वचित् ॥

इति यत् भविष्यत्पुराणस्थं वचनं, यच्च—

चतुर्थी चैव कर्त्तव्या तृतीयासंयुता विभो! ।

इति स्कन्दपुराणस्थं वचनं, तदुभयमपि गणनाथव्रतविषयमेव । सिद्धिविनायकव्रते च मध्याह्नव्यापिनी चतुर्थी ग्राह्या ।

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।

मध्याह्नव्यापिनी सा तु परतश्चेत् परेऽहनि ॥

इति बृहस्पतिवचनात् । परतश्चेत् परेऽहनीत्यस्यायमर्थः । यदि परेद्युरेव मध्याह्नव्याप्तिः तदैव परेऽहनि पञ्चमीविद्धेत्यर्थः । पक्षान्तरेषु तु मातृविद्धैव ग्राह्येति ।

प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ! ।

इतिगणपतिकल्पे मध्याह्नस्य कर्म्मकालत्वावगमाच्च । यदा तु पूर्वदिने मातृविद्धा परेद्युरेव च मध्याह्नव्यापिनी भवति तदा मातृविद्धात्वगुणयोगेन परदिन एव विनायकव्रतमनुष्ठेयम् । तत्रैव कर्म्मकालव्याप्तेः । एवं नागदेवताव्रतेऽपि मध्याह्नव्यापिनी चतुर्थी ग्राह्या ।

युगं मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्याय्य पञ्चम्यां पारयेत् प्रयतो नरः ।
विषाणि तस्य नश्यन्ति न तं हिंसन्ति पन्नगाः ॥

इति मध्याह्ने नागपूजाविधानात् । एतावांस्तु विशेषः । यदा पूर्वेद्युरेव मध्याह्नव्याप्तिः तदैव पूर्वा । पक्षान्तरेषु पञ्चमीयुक्तैव ग्राह्या। पञ्चम्या नागतिथित्वेन तद्योगस्य प्राशस्त्यात् । केचित्तु नागदेवताव्रतेऽपि विनायकव्रतवत् तृतीयायुक्ता ग्राह्येत्याहुः । तदयुक्तम् । प्रमाणविरहात्। पूर्वोदाहृतभविष्यत्पुराणस्थस्कन्दपुराणस्थवचनयोः प्रमाणत्वमितिचेत् , न । तयोः सामान्यतः प्रवृत्तेः । तत्र हि चतुर्थी तृतीयायुक्ता ग्राह्येत्येतावत् प्रतीयते न पुनर्नागचतुर्थी तृतीयायुक्तेति । पूर्वोदाहृतब्रह्मवैवर्त्तवचनानुगुण्यात्तु गणनाथस्तुतोषिणी च चतुर्थी तृतीयायुक्ता ग्राह्येत्येतदेवैतयोर्वचनयोर्हृदयमवगच्छामः । तेन नागदेवताव्रते दिनद्वये मध्याह्नव्याप्त्याविना चतुर्थीग्रहणसन्देहे युग्मवाक्यात् परैव ग्राह्या, यदा तु पूर्वदिन एव मध्याह्नव्याप्तिस्तदा कर्म्मकालशास्त्रस्य प्राबल्यात् पूर्वा ग्राह्या । यत्तु—

द्वितीया पञ्चमीवेधात् दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

इति पञ्चमीयुक्तचतुर्थीनिषेधकं वचनं तद्विनायकव्रतविषयम् । गौरीव्रते तु तृतीयायुक्तचतुर्थी ग्राह्या तृतीयाया गौरीदेवतात्वेन तद्योगस्य प्राशस्त्यात् । चतुर्थ्यां गौरीव्रते तु भविष्यत्पुराणेऽभिहितम्—

विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन ! ।
सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात् ॥

इत्यभिधायानन्तरमेवाभिहितम्—

निद्रां रतिं शिवां भद्रां कीर्तिं मेधां सरस्वतीम् ।

प्रज्ञां तुष्टिं तथा कान्तिं तत्रैवाहनि पूजयेत् ॥
विद्याकामो विशेषेण पूजयेच्च सरस्वतीम् ॥ इति ।

लिङ्गपुराणेऽपि—

चतुर्थ्यां तु गणेशस्य गौर्य्याश्चैव विधानतः ।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यं च नरः क्रमात् ॥ इति ।

नारदीयपुराणेऽपि—

माघशुक्लचतुर्थ्यां तु गौरीमाराधयेद्बुधः ।
चतुर्थी वरदा नाम गौरी तत्र सुपूजिता ॥ इति ।
जया च यदि सम्पूर्णा चतुर्थी ह्रसते पुनः ।
जया सैव हि कर्त्तव्या नागविद्धां न कारयेत् ॥

इति वचनमपि गौरीव्रते कैमुत्यन्यायेन तृतीयायुक्तचतुर्थीं ग्राह्यतया प्रतिपादयति । अयं हि अस्य वचनस्यार्थः । यदा परदिने चतुर्थीह्रासेन पञ्चमी विद्धा भवति पूर्वदिने पुनर्जया सम्पूर्णदिनव्यापिनी भवति तदा शुद्धा तृतीयापि चतुर्थीव्रते ग्राह्या न तु दोषभूयिष्ठा पञ्चमीविद्धा चतुर्थीति । न त्विदं वचनं चतुर्थीव्रते शुद्धतृतीयां ग्राह्यतया प्रतिपादयति पञ्चमीविद्धचतुर्थीनिषेधपरत्वात् । उभयपरत्वे च वाक्यभेदादिति । केचित्तु इदं वचनं विनायकव्रतविषयमित्यङ्गीकृत्यान्यथा व्याचक्षते । यदा पूर्वदिने मध्याह्ने जया सम्पूर्णा उत्तरदिने पुनर्ह्रासवशाच्चतुर्थी मध्याह्नादर्वागेव समाप्यते तदा दिनद्वये कर्म्मकाले चतुर्थ्या अभावे सति किं दिनं ग्राह्यमित्यपेक्षायामिदं वचनमारभ्यते—जया च यदि सम्पूर्णेति । जयाया मध्याह्नव्यापित्वेऽपि जयायुक्ता पूर्वैव चतुर्थी ग्राह्या न तु नागविद्धा परा चतुर्थी ।

गौर्य्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्मरहोलिके च ।
वत्सस्य पूजा शिवरात्रिरेताः परा विनिघ्नन्ति नृपं सराष्ट्रम् ॥

इतिपुराणमुख्यवचनादपि गौरीव्रते तृतीयायुक्ता चतुर्थी ग्राह्येति प्रतीयते । गौर्य्याश्चतुर्थी=गौरीव्रतसम्बन्धिनी चतुर्थी । धेनुपूजा=तत्सम्बन्धिनी बहुलाचतुर्थी । वत्सस्य पूजा=वत्सद्वादशी । केचित्तु शुक्लचतुर्थी पञ्चमीयुता कृष्णचतुर्थी तृतीयायुता ग्राह्या "शुक्लपक्षे तिथिर्ग्राह्य" इत्यादिवचनादित्याहुः । तदयुक्तम् । तृतीयायुक्तचतुर्थीग्रहणवाक्यस्य पूर्वोक्तैव व्यवस्था साध्वीति । सङ्कष्टचतुर्थी तु चन्द्रोदयव्यापिनी ग्राह्या तस्यास्तत्कल्पे चन्द्रोदयकालत्वविधानात् ।

इति चतुर्थीनिर्णयः ।

अथ पञ्चमीनिर्णयः ।

पञ्चमी उपवासादिसकलदैवकर्म्मसु पूर्वयुता ग्राह्या युगभूतानामिति युग्मवाक्यात् ।

स्कन्दपुराणेऽपि—

पञ्चमी च तथा कार्या चतुर्थीसंयुता विभो ! । इति ।

भविष्यत्पुराणेऽपि—

पञ्चमी तु चतुर्थ्यां तु कार्या षष्ठ्या न संयुता । इति ।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।

उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति वशिष्ठवाक्ये परिगणितव्यतिरिक्तायाः परशब्दसंगृहीतायाः पञ्चम्या उपवासे पूर्वसंयुक्तत्वाभिधानाच्च । तेन यद्यपि

प्रायः प्रान्त उपोष्या हि तिथिर्दैवफलेप्सुभिः ।

इति शिवरहस्यसौरपुराणयोरितिथिप्रान्तस्योपवासे अङ्गत्वाभिधानात्तिथिद्वैधे परविद्धा तिथिरुपवासे प्राप्नोति प्रतीयते । तथाप्यस्य सामान्यविधित्वात् प्रागुदाहृततत्तद्विशेषवचनैः उपवासे पञ्चम्याः पूर्वयुक्तत्वं युक्तमेव । एतदेवाभिप्रेत्य प्रायः प्रान्त इति प्रायःशब्दः प्रयुक्तः । यत्तु

पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद ! ।

इति विरुद्धवचनं तत् स्कन्दोपवासविषयम् ।

स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता ।

इति तद्वाक्यशेषेऽभिधानात् नागदेवताव्रतविषयं च ।

श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी ।

तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः ॥

इतिवचनात् । अत्र श्रावणोपादानान्मार्गशुक्लपञ्चमी व्रते पूर्वैवेति बोध्यम् । केचित्तु पञ्चमीविषयविरुद्धवचनानां शुक्लकृष्णभेदेन व्यवस्थामाहुः । तदयुक्तम् ।

चतुर्थ्या संयुता कार्या पञ्चमी परया न तु ।

दैवे कर्म्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते ॥

इति माधवायुदाहृतवचने पक्षद्वयवर्त्तिपञ्चम्याः पूर्वयुक्तत्वाभिधानात् । अत्र पित्र्यग्रहणं दृष्टान्ततया कृतम् । यथा पित्र्ये अपराह्णाद्यनुरोधेन षष्ठीयुक्तपञ्चमीं परित्यज्य चतुर्थीसंयुता पञ्चमी उपादीयते तथा दैवेऽपीति । नच दैवे पूर्वाह्णस्य कर्मकालत्वात् कर्म्मकालशास्त्रस्य च प्रबलत्वात् परयुक्तैव पञ्चमी उपादेयेति शङ्कनीयम् । पूर्वोदाहृततत्तद्विशेषवचनानां प्रबलतरत्वात् एतादृश एव च विषये "यां तिथिं समनुप्रा-

त्य" इतिसाकल्यवचनमुपपद्यते । अन्यथा साकल्यवचनमनवकाशं स्यात् । अत एवोपवास एव पञ्चमी पूर्वयुतान्यत्र दैवेऽप्युत्तरैवेत्यस्यभिधानमयुक्तमत्र । दैवे कर्म्मणीति दैवमात्रे पूर्वयुतत्वप्रतीतेः परयुक्तपञ्चमीवचनानां स्कन्दोपवासवचनेन विषयदानाच्च । ननु व्यासनिगमगतयुग्मशास्त्रात् पञ्चम्याश्चतुर्थीयुक्ताया ग्राह्यत्वं प्रतीयते । आपस्तम्बाद्युदाहृतयुग्मशास्त्रात्तु—

प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता ।
चतुर्थीसंयुता या च सा तृतीया फलप्रदा ॥
पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारद ! ॥

इत्येवंरूपात् षष्ठीयुक्ता पञ्चमी ग्राह्येति प्रतीयते । ततश्च युग्मशास्त्रयोर्विरोधे व्यवस्थापकवचनान्तरस्यापेक्षितत्वात् युक्ता शुक्लकृष्ण शास्त्रेण व्यवस्थेति सत्यम् । प्रयुक्ता शुक्लकृष्णशास्त्रेण व्यवस्था तां निराकर्त्तुमेव हारीतवचने 'शुक्लपक्ष तथासित' इत्युक्तम् । तेन विरुद्धमापस्तम्बादियुग्मशास्त्रं स्कन्दोपवासविषयं युक्तमिति तस्मात् पूर्वोक्तैव व्यवस्था ज्यायसी ।

इति पञ्चमीनिर्णयः ।

अथ षष्ठी निर्णीयते ।

सा च स्कन्दव्रतातिरिक्ते सर्वत्र दैवकार्ये सप्तमीयुक्ता ग्राह्या षण्मुन्योरितियुग्मवाक्यात् ।

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः ॥

इति विष्णुधर्मोत्तरवाक्याच्च । उपवासग्रहणं तु दैवमात्रोपलक्षणमित्युक्तं द्वितीयानिर्णये ।

नागविद्धा तु षष्ठी स्यात्पक्षयोरुभयोरपि ।
दैवे कर्म्मणि तामन्त्यां पित्र्ये पूर्वेण संयुताम् ॥

इति सुमन्तुना पञ्चमीविद्धानिषेधपुरःसरं दैवे कर्म्मणि अन्त्यशब्दोदितायाः सप्तमीविद्धाया विधानाच्च ।

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा नोपोष्या स्यात् कथञ्चन ॥

इति शिवरहस्यसौरपुराणयोः ।

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद् विष्णुर्न ग्राह्यास्ते तु वासराः ॥

इति निगमे पूर्वविद्धा निषेधाच्च । अत्रापि उपवासग्रहणं पूर्ववत् ।

नागः पञ्चमी । शिवो रुद्रश्चाष्टमी । दिवाकरः=सप्तमी । कामस्त्रयोदशी । विष्णुर्द्वादशी । पञ्चमीवेधस्तु—

नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा ।
भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥

इति स्कन्दपुराणवचनात् षण्मुहूर्त्तात्मको न तु सामान्यतस्त्रिमुहूर्त्तात्मकः । स्कन्दषष्ठी तु—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इति ब्रह्मवैवर्त्तवचनात् पञ्चमीयुतैव ग्राह्या । कृष्णाष्टमी=कृष्णपक्षगता अष्टमी । व्रतप्रकाशप्रसिद्धरुद्रदैवत्यकृष्णाष्टमीव्रतसम्बन्धिनी वा जन्माष्टमीत्यपि केचित् । इदं वचनं या द्वादशनाडीमितपञ्चम्या विद्धा षष्ठी सामान्यतः सर्वदैवकार्येषु निषिद्धा तस्या एव स्कन्दव्रते प्रतिप्रसवार्थम् । तथाच स्कन्दव्रतेऽपि द्वादशनाडीविद्धाया निषिद्धत्वात् ततो न्यूनपञ्चमीयुतैव ग्राह्येति ज्ञातव्यम् । तस्याः शुद्धत्वेन सर्वत्रापि ग्राह्यत्वे वचनानर्थक्यापत्तेः । किञ्च "नागो द्वादशनाडीभिः" इति वाक्यं न सर्वत्र द्वादशनाडीमितपञ्चम्या उत्तरतिथिदूषकत्वाभिधानपरं तदभिधाने गौरवात् किन्तु यत्र दूषकत्वं प्राप्तं तत्रैव दूषकत्वानुवादेन द्वादशनाडीमितत्वविधानपरम् । स्कन्दव्रते तु पूर्वयुताया एव ग्राह्यत्वाभिधानान्न दूषकत्वमिति द्वादशनाडीमितपञ्चमीविद्धायामपि तत्कार्यम् । यत्तु—

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धापि कर्त्तव्या यदि न स्यात्परेऽहनि ॥

इति वशिष्ठवचनं तत् न सर्वदैवविषयम् । पूर्वेद्युः षण्मुहूर्त्तपञ्चमीविद्धायाः षष्ठ्यास्त्रिमुहूर्त्ताधिकक्षयासम्भवेन उत्तरदिनेऽपि त्रिमुहूर्त्ताया अवश्यम्भावित्वात् 'यदि न स्यात्' इत्यस्यानुपपत्तेः, किन्तु एकभक्तादिकाले मध्यान्हादौ परेऽहनि यदि न स्यात्तदा या स्कन्दव्रतातिरिक्ते सवत्र निषिद्धा पूर्वविद्धा सापि कर्त्तव्येति प्रतिप्रसवार्थम् । युक्तं चैतत् । कालशास्त्रस्य प्रबलत्वात् । द्वादशनाड्यादिवेधस्य नक्तैकभक्तादिव्यतिरिक्तविषयत्वं वदतो हेमाद्रेरप्ययमेवाभिप्रायो निर्णीयते । भाद्रपदकृष्णपक्षगतषष्ठी चन्द्रषष्ठी । सा चद्रोदयव्यापिनी ग्राह्या ।

तदुक्तं भाद्रपदे मासि षष्ठी पक्षे सितेतरे ।
चन्द्रषष्ठीव्रतं कुर्यात् पूर्ववेधः प्रशस्यते ॥

चन्द्रोदये यदा षष्ठी पूर्वाह्णे चापरेऽहनि ।
चन्द्रोदयेऽसिते पक्षे सैवोपोष्या प्रयत्नतः ॥ इति वचनात् ।

इति षष्ठीनिर्णयः ।

अथ सप्तमी निर्णीयते ।

सा च सर्वत्र दैवे पूर्वविद्धैव ग्राह्या । षण्मुन्योरिति युग्मवाक्यात् ।
षष्ठी तु सप्तमी तात ! अन्योन्यं तु समाश्रितम् ।
पूर्वविद्धा द्विजश्रेष्ठ ! कर्त्तव्या सप्तमी तिथिः ॥
इतिब्रह्मपुराणवचनात् ,
पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ॥
इति पैठीनसिवचनात् । ननु—
षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥
इति उपवास एव विद्धाया निषेधात्तत्रैव पूर्वविद्धाया ग्राह्यत्वमस्तु । तत्रापि—
षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता ।
(१)पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥
इतिभविष्यत्पुराणवचनात्—
षष्ठ्या युक्ता सप्तमी च कर्त्तव्या तात ! सर्वदा ।
षष्ठी च सप्तमी यत्र तत्र सन्निहितो रविः ॥
इतिस्कन्दपुराणवचनाच्च सौरोपवासविषयत्वमेव वास्तु । नैतद्युक्तम् ।
सप्तमी नाष्टमीयुक्ता न सप्तम्या युताष्टमी ।
सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा ॥
इतिब्रह्मवैवर्त्तवाक्ये सर्वव्रतेषु परविद्धाया निषेधात् । पतङ्गोपासनायेत्यादेरुपलक्षणतया पूर्वविद्धायाः सर्वविषयत्वोपपत्तेः । यदा तु पूर्वेद्युः अस्तमयोत्तरं प्रवृत्ता परेद्युश्च तिथिक्षयवशेन त्रिमुहूर्त्तया अष्टम्या विद्धत्वात् शुद्धा पूर्वविद्धा वा न लभ्यते । तदा "गुणे त्वन्याय्यकल्पना" इतिन्यायात् गुणानुरोधेन प्रधानत्यागायोगात् निषेधमतिक्रम्यापि वचनाभावेऽपि गुणकालत्वेन अष्टमीविद्धाया एवोपादानं न्याय्यम् । माघशुक्लसप्तमी चारुणोदयव्यापिनी ग्राह्या ।

( १ ) पतङ्गः सूर्यः ।

सूर्यग्रहणतुल्या तु शुक्लमाघस्य सप्तमी ।
अरुणोदयवेलायां तत्र स्नानं विधीयते ॥

इति वचनात् । वैशाखशुक्लसप्तम्यां गङ्गापूजा तत्र मध्यान्हव्यापिनी ग्राह्या शिष्टाचारात् ।

इति सप्तमीनिर्णयः ।

अथाष्टमीनिर्णयः ।

सा च व्रतमात्रे शुक्ला परा कृष्णा पूर्वा ।

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कुत्रचित् ॥
उपवासादिकार्येषु एष धर्म्मः सनातनः ।

इति निगमोक्तेः । शिवशक्त्युत्सवे तु सर्वा परा ।

अष्टमी नवमीयोगे महोत्साहे । महोत्सवः ।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि ॥

इति पाद्मोक्तेः । उपवासे तु पक्षद्वयेऽप्यष्टमी परयुतैव ग्राह्या ।

उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम् ।
पक्षयोरुभयोरेष उपवासविधिः स्मृतः ॥

इति नारदीयवचने पक्षद्वयेऽपि सप्तमीविद्धानिषेधात् । यत्तु "कृष्णपक्षेऽष्टमी चैव" इतिपूर्वोदाहृतनिगमवचने उपवासग्रहणं तद्रुद्रोपवासविषयम् ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ।
अन्येषु व्रतकल्पेषु यथोद्दिष्टामुपावसेत् ॥

इतिवचनात् । यत्तु—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्द्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इति ब्रह्मवैवर्त्तवचनं तज्जन्माष्टमीपरमिति मदनरत्ने । भाद्रशुक्लाष्टमी दूर्वाष्टमी । सा च पूर्वा ग्राह्या ।

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति बृहद्यमोक्तेः ।

शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।

दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ॥

इति पुराणसमुच्चयाच्च। यत्तु—

मुहूर्त्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा।
दूर्वाष्टमी तु सा कार्या ज्येष्ठां मूलं च वर्जयेत् ॥

इति पराभिधानं तत् पूर्वदिने ज्येष्ठादियोगे वेदितव्यम्।

दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता ॥

तथा—

ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा।
भर्त्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ॥

इतिनिषेधात्। इयं च कन्यार्के अगस्त्योदये च न कार्या।

शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी।
सिंहार्के एव कर्त्तव्या न कन्यार्के कदाचन ॥

इतिस्कान्दोक्तेः।

अगस्त्य उदिते तात ! पूजयेदमृतोद्भवाम्।
वैधव्यं पूर्वशोकं च दशवर्षाणि पञ्च च ॥

इति तत्रैव दोषोक्तेश्च। अत्रैव ज्येष्ठाव्रतमुक्तम्—

लैङ्गे,

कन्यार्के याष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता।
अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् ॥ इति।

इयं च ज्येष्ठर्क्षयुक्ता ग्राह्या। दिनद्वये तथात्वे परा कार्या।

नवम्या सह कार्या स्यादष्टमी नात्र संशयः।
मासे भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्षसंयुता ॥
रात्रिर्यस्मिन्दिने कुर्यात् ज्येष्ठायाः परिपूजनम्।

इतिस्कान्दोक्तेः। नक्षत्रयोगश्च मध्यान्हादूर्ध्वम्। मध्यान्हात्पूर्वं चेत् पूर्वैव।

यस्मिन् दिने भवेज्ज्येष्ठा मध्यान्हादूर्ध्वमप्यधः।
तस्मिन् हविष्यं पूजा च न्यूना चेत् पूर्ववासरे ॥

इतिवचनात्। एतच्च तिथिप्रयुक्तं नक्षत्राभावे केवलतिथौ कार्यम् नक्षत्रप्रयुक्तं तु केवलनक्षत्रे।

प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतम्।
नीलज्येष्ठाव्रतं यच्च विहितं केवलोडुनि ॥

इतिमात्स्योक्तं नीलज्येष्ठाव्रतमपि तिथिप्रयुक्तमेवेति माधवः।

तत्राष्टम्यां यदा वारो भानोर्नक्षत्रमेव च।
नीलज्येष्ठेति सा प्रोक्ता दुर्लभा बहुकालिकी ॥

इतितल्लक्षणार्थे स्कान्दवचने तत्रेति सप्तम्या निर्दिष्टाया अष्टम्यास्तत्र 'जयां जुहुयात्''(अं०३ पा०४ अधि० १३) इतिवत् प्राधान्यावगतेः। मदनरत्नादयस्तु नक्षत्रव्रतमेवेत्याहुः। नीलज्येष्ठापदस्य नक्षत्रपरत्वादिति। आश्विनबहुलाष्टमी महालक्ष्मीव्रतसमाप्तौ चन्द्रोदयव्यापिनी ग्राह्या।

पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा।
त्रिमुहूर्त्तापि सा पूज्या परतश्चोर्ध्वगामिनी॥

इतिसङ्ग्रहोक्तेः। ऊर्ध्वगामिनी=चन्द्रोदयोर्ध्वगामिनी त्रिमुहूर्ता चेत् परतोऽन्यथा तु पूर्वा। यत्तु—

कन्यागतेऽर्के प्रारभ्य कर्त्तव्यं न श्रियोऽर्चनम्।
हस्तप्रान्तदलस्थेऽर्के तद्व्रतं न समापयेत्।
दोषैश्चतुर्भिः संत्यक्ता सर्वसम्पत्करी तिथिः॥
पुत्रसौभाग्यराज्यायुर्नाशिनी सम्प्रकीर्त्तिता।
तस्मात्सर्वप्रयत्नेन त्याज्या कन्यागते रवौ॥
विशेषेण परित्याज्या नवमीदूषिता यदि।
त्रिदिने चावमे चैव अष्टमीं नोपवासयेत्॥
पुत्रहा नवमीविद्धा स्वघ्नी हस्तार्कगे रवौ।

इति नवमीयुक्ताया निषेधकथनं तदर्धरात्रादूर्ध्वं त्रिमुहूर्त्तत्वाभावे त्रिमुहूर्त्तेत्युपादानात्। त्रिस्पृगादिनिषेधश्च प्रथमारम्भविषयः। प्रारब्धस्य षोडशवार्षिकव्रतस्य मध्येऽनुष्ठाने लोकविगर्हणा स्यादिति। इति महालक्ष्म्यष्टमी।

आश्विनशुक्लाष्टमी तु दुर्गाष्टमी सा च सामान्यनिर्णयादेव नवमीविद्धा कार्या। यद्यपि च सामान्यनिर्णयादेवास्या उत्तरविद्धत्वं तथापि इयं लेशतोऽपि सप्तमीविद्धा न कर्त्तव्या। तथा च—

स्मृतिसङ्ग्रहे,

सप्तमीलेशसंयुक्तां मोहादज्ञानतोऽपिवा।
महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते॥
सप्तमी कलया यत्र परतश्चाष्टमी भवेत्।
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम्॥
पुत्रान् हन्ति पशून् हन्ति हन्ति राष्ट्रं सराजकम्।
हन्ति जातानजातांश्च सप्तमीसहिताष्टमी॥
इतिसप्तमीमिश्रिताया निषेधात्। यच्च—
सप्तम्यामुदिते सूर्ये परतो याष्टमी भवेत्॥
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि॥ इति,

तद् यदाश्विनकृष्णाष्टमीमारभ्य—
कन्यायां कृष्णपक्षे तु पूजयित्वाष्टमीदिने ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिस्वनैः ॥

इति देवीपुराणे कृष्णपक्षाष्टम्यां देवीबोधनमुक्तं तद्विषयम् । यच्च—
भद्रायां भद्रकाल्याश्च मध्ये स्यादर्चनक्रिया ।
तस्माद्धि सप्तमीविद्धा कार्या दुर्गाष्टमी बुधैः ॥ इति ।

यच्च मदनरत्ने—
महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी ।
सप्तम्यादियुता कार्या मूलेन तु विशेषतः ॥

तथा निर्णयामृते—
अहं भद्रा च भद्राहं नावयोरन्तरं क्वचित् ।
सर्वसिद्धिं प्रदास्यामि भद्रायामर्चिता ह्यहम् ॥

इति देवीपुराणम्, तथा तत्रैव—
विष्टिं त्यक्त्वा महाराज ! मम पूजां करोति यः ।
कृत्स्नं तस्य फलं न स्यात्तेनाहमवमानिता ॥

इत्यनेन सप्तमीविद्धाया अपि ग्राह्यत्वमुक्तम् । तदपरदिने कलाकाष्ठादिरूपाया अष्टम्या अभावे । यत्तु—
यदाष्टमीं तु सम्प्राप्य चास्तं याति दिवाकरः ।
तत्र दुर्गोत्सवं कुर्यान्न कुर्यादपरेऽहनि ॥
दुर्भिक्षं तत्र जानीयान्नवम्यां यत्र पूजयेत् ।
इति वचनं तद्दशम्यां नवम्यसत्त्वे ।
यदा सूर्योदये न स्यान्नवमी चापरेऽहनि ।
तदाष्टमीं प्रकुर्वीत सप्तम्या सहितां नृप ! ॥

इति स्मृतिसङ्ग्रहादिति मदनरत्ने । वस्तुतः पूर्वोदाहृतदेवीपुराणात् कृष्णपक्षाष्टमीविषयमिदमिति प्रतिभाति । अत्र च पुत्रवता उपवासो न कार्य इत्युक्तम्—

कालिकापुराणे,
उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ।
यथा तथा वा पूतात्मा व्रती देवीं प्रपूजयेत् ॥ इति ।
इयं च मूलयुक्तातिप्रशस्तेत्युक्तं हेमाद्रौ स्कन्दपुराणे—
कन्यां गते सवितरि शुक्लपक्षेऽष्टमी तु या ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
नवम्यां पूजिता देवी ददात्यभिमतं फलम् । इति ।

इयमपि सप्तमीयुक्ता न कार्येत्युक्तम्—

निर्णयामृते दुर्गोत्सवे,

मूलेनापिहि संयुक्ता सदा त्याज्याष्टमी बुधैः ।
लेशमात्रेण सप्तम्या अपि स्याद् दूषिता यदि । इति ।

इति दुर्गाष्टमीनिर्णयः ।

पौषशुक्लाष्टमी बुधवारयुता महाभद्रा । तदुक्तम्—

भविष्योत्तरे,

पुष्ये मासि यदा देवि ! शुक्लाष्टम्यां बुधो भवेत् ।
तदा सा तु महापुण्या महाभद्रेतिकीर्त्तिता ॥ इति ।
इयमेव भरणीसंयुक्ता जयन्ती । तथाच—

तत्रैव,

पुष्ये मासि यदा देवि ! अष्टम्यां नगजे ! शुभे ! ।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते ॥
तदा तु सा महापुण्या जयन्ती अष्टमी शुभा ॥ इति ।

रौद्रं=क्रूरदैवत्यत्वाद्भरणी । आर्द्रेति कल्पतरुः । तन्न । तत्र तद्योगासम्भवात् ।

अथ कृष्णजन्माष्टमी निर्णीयते ।

यद्यपीयं—

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।

इति विष्णुधर्म्मोत्तरात् ,

मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ।

इति भविष्योत्तराच्च श्रावणभाद्रयोः प्रतीयते । तथाप्येकमूलकल्पनालाघवात् पौर्णमास्यन्तं मासमादाय भाद्रे अमावास्यान्तमादाय श्रावणे ग्राह्या इत्यनुसन्धेयम् । एवं च "तिथिकृत्ये च कृष्णादिम्"इति वचनं नात्र श्रावणस्य पौर्णमास्यन्तत्वविधायकं किन्तु एतदतिरिक्तविषयकल्पनालाघवात् । भाद्रस्तु यद्यपि भाद्रश्रुत्यामावास्यान्त एव प्राप्नोति मूलश्रुतिकल्पनागौरवस्य फलमुखत्वनादोषत्वात् तथापि "तिथिकृत्ये च कृष्णादिम्" इतिवचनात् तिथ्यन्तरकृत्येषु तत्तन्मासपदे लक्षणाश्रयणवदिहापि लक्षणाश्रयणमदोषः । सा च द्विविधा शुद्धा सप्तमीविद्धा च । तत्र द्विविधा अपि सूर्योदयादूर्ध्वगामिनी न वेति द्विविधा । तादृश्यपि रोहिणीयोगायोगभेदेन द्विविधा । तत्र सूर्योदयोर्ध्वमसत्यां सर्वस्यामपि न सन्देहः । परेऽहन्यष्टम्यभावात् । सूर्योदयोर्ध्वगामिन्यां तु शुद्धायां विद्धायां वा रोहिणियोगस्यान्यतरत्र सत्त्वे सैव ।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला ॥
मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।
अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेत् ॥

इति विष्णुरहस्योक्तेः । तेनोत्तरदिन एव रोहिणीयोगे पूर्वनिशीथव्यापिनी शुद्धापि त्याज्येति हेमाद्रिमाधवादयः । शिष्टास्तु पूर्वामेवोपवसन्ति। तेषामयमाशयः । अत्रार्द्धरात्रस्य वक्ष्यमाणरीत्या कर्मकालत्वात् कर्मकालशास्त्रस्य च सर्वापेक्षया बलवत्त्वात् परदिने च तदभावात् पूर्वैवेति । न च रोहिणीयोगशास्त्रानुरोधेनोत्तरेति वाच्यम् । तस्य गुणफलसम्बन्धार्थकत्वेन बुधवारादियोगशास्त्रवदनिर्णायकत्वात् । अन्यथा

प्रेतयोनिगतानां च प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि ह्यष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ॥
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ।

इति पाद्मात् पूर्वेद्युरर्द्धरात्रगतां रोहिणीयुतामप्यष्टमीं परित्यज्य बुधवारादियुता परा कर्त्तव्या आपद्येत । न चेष्टापत्तिः । कुलकोट्यास्तु मुक्तिदा किं पुनर्बुधवारेणेत्यादिना "यदि कामयेत वर्षुकः पर्जन्यः स्यात्" इतिवत् ( अ० ३ पा० ८ अधि० ६ ) गुणफलसम्बन्धार्थकत्वप्रतीतेः । एतेन आचार्यचूडामणयुक्तं बुधावारादियोगस्य निर्णायकत्वं प्रत्युक्तम् । तिथितत्त्वकारादयोऽपि बुधवारादियोगस्यानिर्णायकत्वं मन्यन्ते । एवं च—

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।

मुहूर्त्तमपि लभ्येत—

इति विष्णुरहस्यवचनमपि गुणफलसम्बन्धपरं व्याख्येयम् । यत्तु—

उदये चाष्टमी किञ्चित् नवमी सकला यदि ।

इति स्कान्दवचने उदयग्रहणं तच्चन्द्रोदयपरं "तारापत्युदये तथा" इतिवचनान्तरैकवाक्यत्वात् । न च—

दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥

इतिवचनात् परदिने रोहिणीयोगाभाव एव रात्रियुक्ताष्टमी ग्राह्येति वाच्यम् । तस्य तद्दिने स्वल्पस्यापि रोहिणीयोगस्याभावेऽपि न्यायप्राप्तशुद्धाष्टमीव्रतकर्त्तव्यतानुवादकत्वात् इति शिष्टमतमनवद्यम् । दिनद्वये रोहिणीयोगेऽयोगे वा शुद्धाधिका पूर्वैव तदतिक्रमे कारणाभा·

वात्। विद्धाधिकायां त्वन्यतरस्मिन्नेव दिने निशीथे रोहिणीयोगे सैव रोहिणीयोगप्राशस्त्यात्। पूर्वैव योगे--

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि।
भविता साष्टमी पुण्या यावच्चन्द्रदिवाकरौ॥

इति वक्ष्यमाणसप्तमीविद्धानिषेधप्रतिप्रसवार्थकवह्निपुराणात्। दिनद्वये निशीथे रोहिणीयोगे तूत्तरैव।

वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी।
सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी॥

इति ब्रह्मवैवर्तवचनात्। अत एव विद्धाधिकायां दिनद्वयेऽपि निशीथमतिक्रम्य रोहिणीयोगेऽष्टम्याश्च दिनद्वये निशीथे सत्त्वासत्त्वयोः परैव। अन्यतरस्मिन्नेव सत्त्वे सैव। सर्वथा रोहिणीयोगरहितायामष्टम्यां निशीथे दिनद्वयसत्त्वान्यतरसत्त्वेष्वयमेव न्यायो द्रष्टव्यः। न च—

अलाभे रोहिणीभस्य कार्याष्टम्यस्तगामिनी।
तत्रोपवासं कृत्वैव तिथ्यन्ते पारणं भवेत्॥

इति गौडधृतविष्णुरहस्यवचनात् रोहिण्यलाभे सर्वथा पूर्वैव ग्राह्या स्यादितिवाच्यम्। वाक्यस्य हेमाद्र्यादिभिरनिबन्धनान्निर्मूलत्वात्। समूलत्वे वा परदिने निशीथे रोहिणीयोगाभावविषयत्वादिति। अत्र चार्द्धरात्रपूजोपवासश्च द्वयं प्रधानम्।

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्॥

इति भविष्यपुराणात् "सोपोष्या सा महाफला" इति पूर्वोदाहृतवचनाच्च।

त्रिकालं पूजयेद्देवं दिवारात्रौ विशेषतः।
अर्धरात्रावपि तथा पुष्पैर्नानाविधैरपि॥

इति भविष्योक्तपूजा त्वङ्गभूता फलसम्बन्धाभावात्। न चैवं पूजोपवासयोः फलभेदात् समानफलकत्वेऽपि वा निरपेक्षविधानात् चित्रोद्भिदादिवदेकैकस्याप्यनुष्ठानप्रसङ्ग इति वाच्यम्।

सोपवासो हरेः पूजां कृत्वा तत्र न सीदति।

इति भविष्यवचनात् समुच्चयावगतेः "द्वादशरात्रे हवींषि निर्वपेत्" इतिवचनादाधानपवमानेष्ट्योरिव। भाष्यकारमतेन च फलश्रुतेः काम्यत्वमेव।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः॥

इति वीप्साश्रवणान्नित्यत्वोपपत्तेः। न चात्र तुष्ट्यर्थमितिफलश्रवणात् फलनिमित्तोद्देश्यद्वयनिमित्तवाक्यभेदः स्यादिति वाच्यम्। विजातीयानेकोद्देश्यत्वनिमित्तस्य तस्यादोषत्वात्। न च नित्यत्वेऽस्याकरणे प्रायश्चित्तश्रवणं स्यादितिवाच्यम्। विशिष्य तदनुक्तावपि

प्राणायामशतं कार्यं सर्वपापापनुत्तये।

इत्यादेः सामान्यतः श्रुतस्यात्रापि प्राप्तेरित्यनवद्यम्।

इति जन्माष्टमीनिर्णयः।

अथास्याः पारणनिर्णयः।

तत्र केवलाऽष्टम्युपवासे पारणदिने चाष्टम्यनुवृत्तौ तदन्ते कार्यम्।
विष्णुधर्मोत्तरे—

जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते।
कृत्वोपवासं तिथ्यन्ते तथा कुर्याच्च पारणम्॥ इति।

अत्र जयन्तीशब्दो जन्माष्टमीमात्रवचनः तिथिमात्रान्ते पारणविधानात्। रोहिणीसहिताष्टम्युपवासे तु पारणदिने उभयानुवृत्तावुभयान्ते तत् कार्यम्।

कार्या विद्धा तु सप्तम्या रोहिणीसहिताष्टमी।
तत्रोपवासं कुर्यात्तु तिथिभान्ते च पारणम्॥

इति पद्मपुराणात्। इदं चोभयान्ते पारणं महानिशातोऽर्वागुभयान्ते भोजनपर्याप्तकाललाभे।

न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात्।
अत्र निश्यपि तत्कुर्यात् वर्जयित्वा महानिशाम्॥

इति गौडनिबन्धोदाहृतब्रह्माण्डपुराणात्। महानिशा च सार्द्धयामानन्तरं याममात्रो रात्रिभागः।

महानिशा तु विज्ञेया मध्यं मध्यमयामयोः।

इति स्मृतेः। रोहिणीव्रतं चात्र तदुक्ताष्टमीव्रतमेव प्रकरणात्। एवं च-

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते।
अन्यथा पुण्यहानिः स्यादृते धारणपारणम्॥
अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा।
तामसे पारणं कुर्यात् तामसीं गतिमाप्नुयात्॥

इति गरुडपुराणादौ रात्रिपारणनिषेधो जन्माष्टमीपारणातिरिक्तपरः। यदा तु तादृशे काले उभयान्तो न लभ्यते तदान्यतरान्तेऽपि तत् कार्यम्।

भान्ते कुर्यात्तिथेर्वापि शस्तं भारत ! पारणम् ।

इति जन्माष्टमीं प्रक्रम्य वह्निपुराणात् । यदा तु महानिशायाः पूर्वं पारणापर्याप्तः कालो न लभ्यते तदा तत्रापि कुर्यात् ।

तिथ्यर्क्षयोर्यदा च्छेदो नक्षत्रान्तमथापि वा ।
अर्द्धरात्रेऽपि वा कुर्यात् पारणं त्वपरेऽहनि ॥

इति हेमाद्रिधृतवचनात् । अर्द्धरात्रे=महानिशायाम् । तत्रैव भोजननिषेधात् प्रतिप्रसवस्योचितत्वात् । नक्षत्रान्तमिति तिथ्यन्तस्याप्युपलक्षणम् । गौडास्तु अर्द्धरात्रे न तत् कुर्यात् इति पठित्वा यद्यर्धरात्रे उभयोरन्यतरस्य वान्तस्तदा नार्द्धरात्रे पारणं किन्तु दिवैव । वर्जयित्वा महानिशामिति पर्युदासैकवाक्यतालाभादित्याहुः । यत्तु—

तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् ।

इति कालादर्शवचनं तदशक्तविषयमिति मदनरत्ने । हेमाद्रिस्तु उभयान्ते पारणं शक्तविषयमशक्तस्य तु अन्यतरान्ते ततोऽप्यशक्तस्योत्सवान्त इत्याह ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल श्रीमन्महाराजाधिराजप्रतापरुद्रतनुजश्रीमन्महाराजमधुकरसाहसूनु-चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकाशदिनकर श्रीमन्महाराजाधिराजवीरसिंहदेवोद्योजित-श्रीहंसपण्डितात्मज-श्रीपरशुराममिश्रसुनु-सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-श्रीमन्मित्रमिश्रकृते वीरमित्रोदयनिबन्धे समयप्रकाशे जन्माष्टमीनिर्णयः ।

---

अथ नवमी निर्णीयते ।

सा तु अष्टमीसंयुता ग्राह्या । वसुरन्ध्रयोरितियुग्मवाक्यात् ।
पद्मपुराणेऽपि—

अष्टमी नवमीविद्धा नवम्या चाष्टमी युता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥ इति ।

भविष्यपुराणेऽपि द्वादशीकल्पे—

नवम्या सह कार्या स्यादष्टमी नवमी तथा ।

तथा=अष्टम्या सहेत्यर्थः । निषेधमुखेनापि नवम्या अष्टमीविद्धत्वं

स्कन्दपुराणादावभिहितम्—

न कार्या नवमी तात ! दशम्या तु कदाचन ।

इति स्कन्दपुराणम्

नवम्येकादशी चैव दिशा विद्धा यदा भवेत् ।
तदा वर्ज्या विशेषेण गङ्गाम्भः सुरया यथा ॥

इति पद्मपुराणं च । दिक् दशमी । नवम्या अष्टमीवेधविधिर्दशमीवेधनिषेधश्च द्वयं ब्रह्मवैवर्त्ते दर्शितम् ।

अष्टम्या नवमी विद्धा कर्त्तव्या फलकाङ्क्षिभिः ।
न कुर्यान्नवमीं तात ! दशम्या तु कदाचन ॥ इति ।

ननु कृष्णनवम्या अष्टमीविद्धत्वेऽपि शुक्लपक्षनवम्या दशमीविद्धत्वमस्तु ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।

इति वचनबलादिति चेत्, न। पूर्वोक्तेषु वचनेषु दशमीवेधस्य साक्षान्निषिद्धत्वात् । ननु पूर्वोक्तनिषेधस्य कृष्णशुक्लपक्षोभयसाधारणत्वेन सामान्यरूपस्य कृष्णपक्षे सङ्कोचोऽस्त्विति चेत्, नैवम् । भवदुक्तोऽपि "शुक्लपक्षे तिथिर्ग्राह्या" इत्ययं सङ्कोचहेतुरपि सामान्यरूप एव । तस्मात् पक्षयोरुभयोरपि पूर्वविद्धैव नवमीति सिद्धम् ।

चैत्रशुक्लपक्षे नवमी रामनवमी सा च मध्याह्नव्यापिनी ग्राह्या ।

मेषे पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये ।
आविरासीत्स कलया कौसल्यायां परः पुमान् ॥

इत्यगस्त्यसंहितावचनात् मध्याह्नस्य जन्मकालत्वात् । जयन्तीषु च जन्मकालस्यैव पूजारूपकर्मकालत्वात् । जन्माष्टम्यादौ तथा दर्शनात् । सैव मध्याह्नयोगिनी यदि पुनर्वसुयुता अतीव पुण्यतमेत्युक्तं—

तत्रैव,

चैत्रशुक्ला तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥ इति ।

सा रामनवमी यदि दिनद्वयेऽपि मध्याह्नस्पर्शिनी दिनद्वयेऽपि मध्याह्नास्पर्शिनी दिनद्वयेऽपि मध्याह्नैकदेशस्पर्शिनी वा तदा पुनर्वसुयुता ग्राह्या ।

पुनर्वस्वृक्षसंयोगः स्वल्पोऽपि यदि दृश्यते ।
चैत्रशुद्धनवम्यां तु सा पुण्या सर्वकामदा ॥

इत्यगस्त्यसंहितावचनात् । यदा तादृश्या दिनद्वयेऽपि पुनर्वसुयोगस्तदा या मध्याह्ने पुनर्वसुयोगिनी सा ग्राह्या । जन्मकाले ऋक्षयोगस्य

रोहिणीयोगवत् प्रशस्तत्वात् । यदा दिनद्वयेऽपि मध्याह्ने वर्त्तमाना दिनद्वयेऽपि च मध्याह्ने पुनर्वसुयोगस्तदाप्युत्तरैव । यदा दिनद्वये मध्याह्ने मध्याह्नं परिहृत्य वा वर्त्तमाना पुनर्वसुयोगश्च मध्याह्नं परिहृत्यैव तदाप्युत्तरैव । यदा दिनद्वये मध्याह्नयोगिनी दिनद्वये तद्योगिनी दिनद्वये तदेकदेशयोगिनी वा सर्वथैव पुनर्वसुयोगाभावस्तदाप्युत्तरैव । यदा तु उत्तरदिने मध्याह्ने वर्त्तमाना पूर्वदिने ऋक्षयोगवत्यपि तदापि परैव । यदा तु पूर्वदिने मध्याह्ने वर्त्तमानापि उत्तरदिने च पुनर्वसुयोगस्तदाप्युत्तरैव । सर्वथाष्टमीविद्धाया निषिद्धत्वादिति ।

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां तु दशम्यां पारणं भवेत् ॥

इत्यगस्त्यसंहितावचनात् । एतेषां च पक्षाणां स्पष्टत्वार्थमुक्तानां नातीव पौनरुक्त्यं शङ्कनीयम् । अत्रैवं केचित् ।

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।

इत्यत्र विष्णुपरायणानां वैष्णवानाम् अष्टमीविद्धा नवमी नोपोष्या दशमीविद्धोपोष्या । अवैष्णवानां तु अष्टमीविद्धाप्युपोष्येति मन्यन्ते । तदसत् । विष्णुपरायणैः सद्भिरिदं सर्वं कर्त्तव्यमित्युपदेशपरत्वेनापि तस्य विशेषणस्योपपत्तौ अवैष्णवानामष्टमीविद्धाविधायकर्तृविशेषणत्वाङ्गीकारस्यानुचितत्वात् । वस्तुतस्तु विष्णुपदस्य प्रकृतरामात्मकविष्णुपरत्वात् परायणैरित्येतत्तन्मन्त्रदीक्षितपरं सद्गुणविधावपि श्रुतम्—

तस्मिन् दिने तु कर्त्तव्यमुपवासव्रतं सदा ।

इति सदाशब्दयुक्ते नित्यप्रयोगावश्याकाङ्क्षितत्वात् प्रकृतेऽन्वेति । तेन सदाशब्दप्रयोगात् प्रतीयमानं नित्यत्वमेतद्व्रतस्य राममन्त्रदीक्षितान् प्रत्येव भवति । ननु—

प्राप्ते श्रीरामनवमीदिने मर्त्त्यो विमूढधीः ।
उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥
अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् ।
व्रतान्यन्यानि कुरुते न तेषां फलभाग् भवेत् ॥

इत्यादिषु अकरणे दोषप्रतिपादनात् नित्यत्वावेदकेषु वचनेषु मर्त्य इत्यादिसामान्यशब्दश्रवणात सर्वान् प्रत्येवेदं कुतो नेति चेत, मैवम् । तन्नित्यत्वं हि "विष्णुपरायणैः" इत्यनेन "तस्मिन् दिने तु कर्त्तव्यम्" इत्यादिना च राममन्त्रदीक्षितान् प्रत्येव न सर्वान् प्रति ।

लोकेऽपि राममन्त्रदीक्षारहिता रामनवम्यामनुपवसन्तः शिष्टा अपि बहुशो दृष्टा एव।

सूर्यग्रहे कुरुक्षेत्रे महादानैः कृतैर्मुहुः।
यत् फलं तदवाप्नोति श्रीरामनवमीव्रतात्॥

इत्यादिवाक्यविहितः काम्यप्रयोगस्तु सर्वेषां भवति। ननु यथा विष्णुपरायणैरित्यस्य नित्याधिकारविधावन्वयस्तथा कामाधिकारविधावप्यन्वयोऽस्त्विति चेत्, न। खण्डतिथौ काम्यप्रयोगस्य निषिद्धत्वात् खण्डतिथिनिर्णयवाक्यानां नित्यप्रयोगविधिमात्रशेषत्वात् तदन्तर्गतस्य विष्णुपरायणैरित्येतस्य पदस्य नित्यप्रयोगमात्रान्वयस्यैवोचितत्वात् इति। अत्र पारणं तु यदा पूर्वविद्धायामुपवासस्तदा नवमीमतिक्रम्यैव कर्त्तव्यं सामान्यवचनात् दशम्यामेव पारणमिति विशेषवचनाच्च। न चात्र रात्रिपारणादिप्रसक्तिः कापि।

इति रामनवमीनिर्णयः।

आश्विनशुक्लनवमी दुर्गानवमी सैव महानवमी। तथा च—

भविष्ये,

आश्वयुक्शुक्लपक्षे तु अष्टमी मूलसंयुता।
सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा॥ इति।

मूलग्रहणमुपलक्षणम्। दुर्गापूजां प्रक्रम्य तत्रैव—

दुर्गापूजासु नवमी मूलाद्यृक्षत्रयान्विता।
महती कीर्तिता तस्यां दुर्गां महिषमर्द्दिनीम्॥

इयं च उपवासादिषु अष्टमीविद्धैव ग्राह्या। तथाच—

पद्मपुराणे,

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनम्॥ इति।
न कुर्यान्नवमीं तात! दशम्या तु कदाचन।

इति स्कान्दाच्च। बलिदाने च नवमी सूर्योदयसम्बन्धिनी ग्राह्या।

सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि।
बलिदानं प्रकर्त्तव्यं तत्र देशे शुभावहम्॥
बलिदाने कृतेऽष्टम्यां पुत्रभङ्गो भवेन्नृप!।

इति देवीपुराणात्। यदपि तत्र—

आश्वयुक्शुक्लनवमी मुहूर्त्तं वा कला यदि।
सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः॥

इति सौरपुराणम् । तदपि बलिदानपरमेवेति । यदपि

नवम्यामपराह्ने तु बलिदानं प्रशस्यते ।
दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा ॥

इति नारदवचनं तच्छुद्धाधिकानिषेधपरमिति मदनरत्ने । अलमतिप्रसङ्गेन । विस्तरस्तु नवरात्रनिर्णये द्रष्टव्यः ।

इति नवमीनिर्णयः ।

अथ दशमी निर्णीयते ।

तस्यां च तिथ्यन्तरवद्धेयोपादेयविभागवचनं नास्ति । तिथ्यन्तरे हि तिथिः क्वचित् पूर्वविद्धा ग्राह्या क्वचिदुत्तरविद्धा दशम्यां च तथा न किञ्चित् नियामकं वचोऽस्ति । तेन दशमी दिनद्वयेऽपि कर्मकालव्यापिनी पूर्वा परा वेच्छया ग्राह्या ।

सम्पूर्णा दशमी ग्राह्या परया पूर्वयाथवा ।
युक्ता न दूषिता यस्मात् तिथिः सा सर्वतोमुखी ॥

इति स्कन्दपुराणात् । सम्पूर्णा कर्मकाले विशेषाश्रवणाद्दिनद्वयेऽपि । इतरेषु पक्षेषु पूर्वा ।

दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तम ! ।

इति स्कन्दपुराण एवोक्तत्वादिति । सदुर्गा=नवमीविद्धा । ननु

सम्पूर्णा दशमी ग्राह्या परया पूर्वयाथ वा ।

इत्यनेन अव्यवस्थायां प्राप्तायां विकल्पपर्यवसानात्तस्य चाष्टदोषदुष्टत्वात् केवलं पुरुषेच्छाप्रसरस्यानुचितत्वादवश्यं किञ्चिदास्थातव्यं व्यवस्थापकं शास्त्रमितिचेत्, सत्यम् ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति मार्कण्डेयोक्तास्त्येव व्यवस्था । तेन नास्त्येव स्वच्छन्दं पुमिच्छाप्रसरः । अत एवोक्तं व्यतिरेकमुखेन—

उदासीने तु शास्त्रार्थे पुरुषेच्छा नियामिका । इति ।

एवं सति यानि परविद्धानिषेधकानि—

नन्दाविद्धा तु या पूर्णा द्वादशी मकरे सिता ।
भृगुणा नष्टचन्द्रा च एता वै निष्फलाः स्मृताः ॥

इति कूर्मपुराणे । पूर्णा=दशमी । नन्दा=एकादशी तद्विद्धा निष्फलेति गम्यते ।

प्रतिपत् पञ्चमी भूतसावित्री वटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुताः ॥

इति ब्रह्मवैवर्ते,

नागविद्धा तु या षष्ठी शिवविद्धा च सप्तमी ।
दशम्येकादशीविद्धा नोपोष्याः स्युः कथञ्चन ॥

इति शिवरहस्यसौरपुराणादिषु वचनानि तानि कृष्णपक्षविषयाण्येव न व्यासवाक्यादिपक्षविषयाणि । अत्रोपवासग्रहणं मुख्यतया सर्वकर्म्मोपलक्षणमेव युक्तमिति सङ्क्षेपः ।

इति दशमीसामान्यनिर्णयः ।

ज्येष्ठशुक्लदशमी दशहरा ।

दशमी शुक्लपक्षे तु ज्येष्ठमासे कुजेऽहनि ।
अवतीर्णा सरित् स्वर्गाद्धस्तर्क्षे सा यतोऽमला ॥
हरते दश पापानि तस्माद्दशहरा स्मृता । (१)

इति स्कन्दपुराणात् । अत्र योगविशेष उक्तस्तत्रैव—

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
अत्र च यत्रैव योगबाहुल्यं सैव ग्राह्या ।

आश्विनशुक्लदशमी विजयादशमी । तां प्रक्रम्य पुराणसमुच्चये—

दशम्यां च नरैः सम्यक् पूजनीयापराजिता ।
ईशानीं दिशमाश्रित्य अपराह्णे च यत्नतः ॥
इयं च यद्युत्तरैव श्रवणयुता तदा सैव ग्राह्या ।
उदये दशमी किञ्चित् सम्पूर्णैकादशी यदि ।
श्रवणर्क्षे यदा काले सा तिथिर्विजयाभिधा ॥

(१) दश पापानि च मनुनोक्तानि यथा—

पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ इति ।

इति कश्यपोक्तेः । अन्येषु पक्षेषु नवमीयुक्ता ग्राह्या ।
या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता ।
इति पुराणसमुच्चयात् ।

इति दशमीनिर्णयः ।

अथैकादशी निर्णीयते ।

सा च सर्वकार्येषु परयुतैव ग्राह्या । "रुद्रेण द्वादशीयुक्ता" इति युग्मवाक्यात् ।

एकादशी न कर्त्तव्या दशमीसंयुता विभो !
पूर्वविद्धा न कर्त्तव्या तृतीया षष्ठिरेव च ।
अष्टम्येकादशी भूता धर्म्मकामार्थवाञ्छिभिः ॥

इति स्कन्दपुराणभविष्यपुराणयोः पूर्वविद्धाप्रतिषेधाच्च । चैत्रशुक्लैकादशी वैश्यकर्तृकवास्तुपूजनेऽपराह्णव्यापिनी ग्राह्या ।

तत्रापराह्णे वास्तुश्च वैश्यानां वंशधारकः ।
अर्घ्यैर्माल्यैश्च वस्त्रैश्च पूज्यो गन्धैर्विचित्रितैः ॥

इति तां प्रकृत्य ब्रह्मपुराणात् । आषाढशुक्लैकादश्यादिषु विष्णुशयनादि कार्यम् । तत्र—

ब्रह्मपुराणे,

एकादश्यां तु शुक्लायामाषाढे भगवान् हरिः ।
भुजङ्गशयने शेते तदा क्षीरार्णवे सदा ॥
एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥

भविष्योत्तरेऽपि—

प्राप्ते भाद्रपदे मासि एकादश्यां दिने सिते ।
कटिदानं भवेद्विष्णोर्महापातकनाशनम् ॥

कटिदानम्=अङ्गपरिवृत्तिकरणम् । वराहपुराणादौ तु एतेष्वेव मासेषु शुक्लद्वादशीषु शयनादिकमुक्तम् ।

आषाढमासे द्वादश्यां सर्वशान्तिकरं शुभम् ।
य एतेन विधानेन ज्ञात्वा मे कर्म कारयेत् ॥
स पुमान्न प्रणश्येत संसारेषु युगे युगे ।

तथा—

इयं च द्वादशी राजन्! प्रबोधार्थं विनिर्म्मिता ।
मयैषा सर्वलोकानां हितार्थं शेषशायिना ॥

तथा हेमाद्रयुदाहृते भविष्येऽपि—

द्वादश्यां शुक्लपक्षे तु प्रस्वापावर्त्तनोत्सवाः। इति।

न चात्र द्वादशीपदस्य एकादशीपरत्वमिति कस्य चिदुक्तिर्युक्ता। तथात्वे प्रमाणाभावात् लक्षणापत्तेश्च।

प्रतिपद्धनदस्योक्ता पवित्रारोपणे तिथिः।
श्रियो देव्या द्वितीया तु तिथीनामुत्तमा स्मृता॥
तृतीया स्याद्भवान्यास्तु चतुर्थी तत्सुतस्य च।
पञ्चमी धर्मराजस्य तथा षष्ठी गुहस्य च॥
सप्तमी भास्करस्योक्ता दुर्गाया अष्टमी स्मृता।
मातॄणां नवमी चैव दशमी वासुकेः स्मृता॥
एकादशी ऋषीणां च द्वादशी चक्रपाणिनः।
त्रयोदशी ह्यनङ्गस्य शिवस्योक्ता चतुर्दशी॥
मम चैव मुनिश्रेष्ठ! पौर्णमासी तिथिः स्मृता।
यस्य यस्य च देवस्य यन्नक्षत्रं तिथिश्च या॥
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकम्।

इति मत्स्यपुराणवचनविरोधापत्तेश्च। तस्मात् कालान्तरविधानमेव साधीयः। क्वचित्तु आषाढकार्त्तिकपौर्णमास्योः स्वापप्रबोधावुक्तौ। तथा च—

यमः,

क्षीराब्धौ शेषपर्यङ्क आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोः सम्पूजयेत्सदा॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति।

आषाढी कार्त्तिकी चात्र पौर्णमासी। तत्रैव प्रचुरतरप्रयोगात्।

आषाढशुक्लपक्षान्ते भगवान् मधुसूदनः।
भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात्॥
शेतेऽसौ चतुरो मासान् यावद्भवति कार्त्तिकी।
विशिष्टा न प्रवर्त्तन्ते तदा यज्ञादिकाः क्रियाः॥

इति विष्णुधर्मोत्तरे पक्षान्त इति स्पष्टमभिधानाच्च। एतेनाषाढस्येयमाषाढी एकादशी कार्त्तिकस्येयं कार्त्तिकी एकादशीति कल्पतरुव्याख्यानमपास्तम्। तेन पौर्णमास्यपि एकः काल इति सिद्धम्। विष्णुधर्मोत्तरे तु एकादशीमारभ्य दिनपञ्चकं शयनप्रबोधावुक्तौ।

एकादश्यामाषाढस्य शुक्लपक्षे जनार्दनम्।
देवाश्च ऋषयश्चैव गन्धर्वाप्सरसां गणाः॥

अभिष्टुवन्ति ते गत्वा सततं दिनपञ्चकम्।
उत्सवं चैव कुर्वन्ति गीतनृत्यसमाकुलम् ॥
ततस्तु चतुरो मासान् योगनिद्रामुपासते।
सुप्तं च तमुपासन्ते ऋषयो ब्रह्मसम्मिताः ॥
कार्त्तिकस्य सिते पक्षे तदेव दिनपञ्चकम्।
विबोधयन्ति देवेशं गत्वा सेन्द्रा दिवौकसः ॥
तस्मात्तथैव कुर्वीत तदापि च महोत्सवम्।

न चात्र स्वापप्रबोधौ एकादश्यामेव दिनचतुष्टयं तु पूजेति कस्यचिदुक्तिर्युक्ता। "ततस्तु चतुरो मासान्" इति "विबोधयन्ति देवेशम्" इति च पञ्चदिनसाध्योत्सवानन्तरं तयोः कर्त्तव्यत्वप्रतीतेः। तेनेदमपि एकं कालान्तरमिति युक्तम्। एते च कालाः शक्त्यनुसारेण यथासम्प्रदायं च व्यवस्थिताः। एते च स्वापपरिवर्त्तनप्रबोधाः रात्रिसन्ध्यादिनेषु कार्याः।

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्।

इति भविष्योक्तेः।

विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते।

इति विष्णुधर्मोत्तराच्च। एवं च 'प्रसुप्तं बोधयेद्रात्रौ' इति ब्रह्मपुराणं रात्रौ प्रसुप्तं दिवा बोधयेदित्येवं भविष्यवचनैकवाक्यतया व्याख्येयम्। अन्यथा विकल्पापत्तेः। तदपेक्षया च पदधर्म्मस्य सान्निधानस्यैव बाधौचित्यात्। अन्यथा तद्वशेन पदधर्म्मस्याप्यबाधे पदस्य सुतरामबाधापत्तेः पर्युदासोच्छेदापत्तिः। केचित्तु निशि स्वाप इत्यस्मिन्ननाश्वासाद्रात्रावपि प्रबोधमाचरन्ति। तत्तु वचनस्य हेमाद्र्यादिसकलनिबन्धादृतत्वादसमञ्जसम्। अत्र च द्वादश्यां रात्र्यादिभागेषु क्रमेण अनुराधाश्रवणरेवतीनामादिमध्यावसानेषु जायमानेषु प्रस्वापावर्त्तनोद्बोधाः प्रशस्ताः। तथा च—

भविष्ये,

मैत्राद्यपादे स्वपितीह विष्णुः श्रुतेश्च मध्ये परिवर्त्तमेति।
पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन ॥
आभाकाद्येषु मासेषु नृपते! माधवस्य च।
द्वादश्यां शुक्लपक्षे च प्रस्वापावर्त्तनोत्सवाः ॥

यदा द्वाद्श्यां रात्र्यादिभागेषु तत्तन्नक्षत्रभागानामयोगो नक्षत्रमात्रस्यैव तु योगस्तदा नक्षत्रमात्रयुक्तरात्र्यादिभागेष्वेव शयनादिकं कार्यम्।

पादयोगो यदा न स्याद्दक्षेणापि तदा भवेत्।

इति वराहपुराणवचनात् ।

विष्णुर्दिवा न स्वपिति न च रात्रौ विबुध्यते ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥

इति विष्णुधर्मोत्तराच्च । यदा द्वादश्यां राज्यादिभागेषु नक्षत्रमात्रस्याप्य-भावस्तदा द्वादश्यामेव सन्ध्यायां शयनादिकं कार्यम् । तथा च—

वराहपुराणे,

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे ।
आभाकासितपक्षेषु शयनावर्त्तनादिकम् ॥

सन्धिसमये इति शयनादावन्वेति । सन्धिसमयः सन्ध्याकालः । हेमा-द्र्यादिसम्मतोऽप्ययमर्थः ।

इति विष्णुशयनकालः ।

अस्यामेवाषाढशुक्लैकादश्यां चातुर्मास्यव्रतारम्भ उक्तो—

महाभारते,

आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियतो नरः ॥
असम्भवे तुलार्केऽपि कर्त्तव्यं तत् प्रयत्नतः ।

अथैकादशीव्रतं निर्णीयते ।

तत्र—

पक्षे पक्षे तु कर्त्तव्यमेकादश्यामुपोषणम् ।

इत्यादिनारदीयादिवचने तावत् यत्रोपवासश्रवणं तत्राष्टयामिकाभोज-नसङ्कल्पो विधीयते । उपवासपदस्य व्रतविशेषपर्यायस्य सङ्कल्पवाचि-त्वस्येष्टत्वात् । यानि तु व्रतं नियमो धर्म्म इत्यादिसमभिव्याहारवन्ति नञ्-युक्तवाक्यानि यथा—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्म्मोऽयम्

इत्यादीनि तत्रापि "नोद्यन्तमादित्यमीक्षेत" इत्यादाविव सङ्कल्प एव लक्षणया विधीयते । या तु तत्र भोजननिन्दा सा "नहि निन्दा निन्दितुं प्रवर्त्तत" इति न्यायेन व्रतस्तुत्यर्था न तु स्वतन्त्रनिषेधोन्नायि-का गौरवात् ।

न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्मशूकरौ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इत्यादौ तु निषेधप्रायपाठात् व्रतादिपदसमभिव्याहाराभावाच्च भो जननिषेध एव । तत्र सङ्कल्पलक्षणायां प्रमाणाभावात् । न चैकमूलक-

रूपनालाघवार्थं सेतिवाच्यम्। तस्योत्तरकालनित्वात्। अन्यथा निषादस्थपत्यधिकरणविरोधापत्तेः। (अ० ६ पा० १ अधि० १३) अत्र भोजनं स्मृतिलोकप्रसिद्धोऽभ्यवहार एव निषिध्यते न तु सर्वादननिवृत्तिः। अत एव गृहस्थस्य कृष्णैकादश्यादौ व्रतभोजननिषेधयोः प्राप्तौ—

उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत्।

इति किञ्चिद्भक्षणविधानम्। न चैतद्विध्यन्यथानुपपत्त्यैव भुजेरदनीयमात्रादनपरतेति वाच्यम्। अस्य च वचनस्य रागद्वेषादिकृतनिराहारव्यावृत्त्या सार्थकत्वात्। अयं च निषेधः कलञ्जभक्षणनिषेधाधिकरणन्यायेन नित्य एव। अयं च कृष्णे शुक्ले च सर्वान् प्रति प्रवर्त्तते।

अष्टवर्षाधिको मर्त्यो ह्यशीतिर्न च पूर्यते।
यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत्।
स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे॥

इति नारदोक्तेः,

गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

इत्यग्निपुराणाच्च। अत्र चाष्टवर्षग्रहणमुपनयनोपलक्षणम्। अशीतिग्रहणं च शक्त्युपलक्षणमिति केचित्। तन्न। प्रमाणाभावात्। न च—

गृहस्थो ब्रह्मचारी च योऽनश्नंश्च तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः॥

इति वचनविरोध इति वाच्यम्। अस्य—

एकभक्तेन नक्तेन तथैवायाचितेन च॥
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः॥
एतत् त्रिगुणितं प्राजापत्यम्

इत्यादिविहितप्राजापत्यानुष्ठाने त्रैगुण्यसम्पत्त्यर्थं स्वस्थानविवृद्धिन्यायप्राप्तोपवासावृत्तिनिवृत्त्यर्थत्वात्। अत एव "अनश्नंस्तपश्चरेत्" इति यावत्तपश्चरणमनशनाभ्यासार्थको वर्त्तमानकालप्रत्ययः। 'प्राणाग्निहोत्रलोपेन' इति तु "तेन ह्यन्नं क्रियते" इतिवदर्थवादमात्रम्। प्राणाग्निहोत्रं नाम तद् "यद् भक्तं प्रथममागच्छेत् तद्धोमीयम्" इति विहितो भोजनाश्रितो नियमविशेषो नित्यतया विहितः। न चास्य आश्रयभूतभोजनाभावे लोपो दोषाय भवति तस्मादर्थवादः। हेमाद्रिस्तु ब्रह्मचारिगृहस्थयोर्मरणान्तिकानशनरूपतपोनिवृत्त्यर्थमिदं वचनमित्याह।

यदपि—

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम्॥

इतिसाङ्ख्यायनवचनं तत् भोजनाभावेऽशक्त्याध्ययनाग्निहोत्रादिलोपप्रसक्तौ तन्निवृत्त्यर्थम्। नैषां सिद्धिरनश्नतामितिहेतुवन्निगदात्। अग्निहोत्रादेः श्रौतत्वेन स्मार्त्तभोजननिवृत्तिबाधौचित्यात्। एवं चाग्निहोत्राद्यविरोधेन नित्योपवासविधिः प्रवर्त्तते। काम्यस्तु श्रौतस्यापि नित्याग्निहोत्रादेर्बाधक एव प्रमाणबलाबलाऽपेक्षया प्रमेयबलाबलत्वस्य ज्यायस्त्वात्। काम्येन तु श्रौतेन काम्यस्मार्त्तनिवृत्तिरिष्टैव श्रौतत्वेन बलीयस्त्वाधिक्यात्। एतेन नित्यस्य काम्यस्य स्मार्त्तोपवासस्य श्रौतेनाग्निहोत्रादिना निवृत्तिरिति यत् कैश्चिदुक्तं तन्निरस्तम्। इत्यलं प्रसक्तानुप्रसक्तेन। तस्मान्निषेधे पक्षद्वयेऽपि सर्वेषामधिकारः। व्रते तु नित्यप्रयोगे गृहस्थव्यतिरिक्तानां पक्षद्वयेऽप्यधिकारः। गृहस्थस्य तु शुक्लपक्षगत एव।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही॥

इति देवलोक्तेः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही॥

इति भविष्योत्तरोक्तेश्च।

यथा शुक्ला तथा कृष्णा द्वादशी मे सदा प्रिया।
शुक्ला गृहस्थैः कर्त्तव्या भोगसन्तानवर्द्धिनी॥
मुमुक्षुभिस्तथा कृष्णा तेन तेनोपदर्शिता।

इति भविष्यपुराणाच्च। यानि तु—

यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चन।

इत्यादिसामान्यवचनानि तानि गृहस्थातिरिक्तविषय उपसंहर्त्तव्यानि। एवं च सामान्यवचनेन गृहस्थं प्रति उपवासप्राप्तेः शुक्लामेव सदा गृहीत्यनेन गृहस्थं प्रति शुक्लोपवासविधिरिति केचित्। अन्ये तु एवकारेण "न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्" ( अ० ९ पा० ४ अधि० २ ) इतिवत् विधिशक्तिप्रतिबन्धाद्वाक्यभेदापत्तेश्च गृहस्थं प्रति शुक्लोपवासविध्यसम्भवादन्यस्य च विधेरभावादनुवादत्वानुपपत्तेर्न सामान्योभयैकादश्युपवासविधीनां वनस्थयतिविषयत्वेनोपसंहारः, किन्तु यत् कृष्णाम-

श्युपवसेत्तद्वनस्थो यतिश्चेत्येवं तदन्तर्गतकृष्णोपवासस्यैव । एवं च सामान्यविहित एव गृहस्थस्य शुक्लामात्रप्राप्तेः शुक्लामेवेत्यनुवाद इत्याहुः । अपरे तु सामान्यवचनेभ्य एव गृहस्थं प्रत्यपि उपवासप्राप्तेः परिसङ्ख्यार्थं शुक्लामेवेति वचनम् "अत्र ह्येवावपन्त्यत एवोद्वपन्ति" इतिवदित्याहुः । सर्वथा तावद्गृहस्थस्य शुक्लैवेति सिद्धम् । यत्तु—

सङ्क्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही ॥

इत्यादि कृष्णैकादश्युपवासनिषेधकं वचनं तद् गृहस्थसामान्यपुरस्कारेण कृष्णानिषेधे सत्यपि पुत्रवद्गृहस्थस्य दोषाधिक्यज्ञापनार्थमिति माधवादयः । तन्न । सामान्यविधेर्गृहस्थव्यतिरिक्तप्रत्युपसंहृतत्वात् शुक्लामेव सदा गृहीत्यस्य च गृहस्थं प्रति शुक्लाविधानार्थत्वेनानुवादत्वेन वा सार्थक्यात् परिसङ्ख्यापक्षस्य च वाक्यभेदेनायुक्तत्वात् गृहस्थं प्रति कृष्णोपवासाप्राप्तेर्निषेधासम्भवात् पुत्रवद्गृहस्थं प्रति "कृष्णैकादशिवासर" इतिवचनस्य दोषाधिक्यज्ञापनार्थत्वायोगात् । वचनं तु—

शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

इति वचनेन गृहस्थं प्रति शयनीबोधिनीमध्यवर्त्तिन्याः कृष्णाया विहितत्वात्तत्र पुत्रवद्गृहस्थं प्रति पर्युदासार्थमिति हेमाद्रिप्रभृतयः । इदं च वैष्णवव्यतिरिक्तपरम् ।

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम् ॥ इति ।

तथा,

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा ।
तुल्ये ऽनुमन्यते यस्तु स वै वैष्णव उच्यते ॥

इति नारदीयतत्त्वसागरवचनाभ्यां तस्य सर्वकृष्णोपवासप्रतीतेः । एवं काम्यैकादशीव्रतं पक्षद्वये सर्वैः कार्यम् ।

पुत्रवांश्च गृहस्थश्च बन्धुयुक्तस्तथैव च ।
उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवम् ॥

इति हेमाद्र्युदाहृतवचनात् । यत्तु—

रविवारेऽर्कसङ्क्रान्त्यामेकादश्यां सितेतरे ।
पारणं चोपवासं च न कुर्यात् पुत्रवान् गृही ॥

इत्यादिवचनैर्निषेधेन पर्युदासेन वा रविवारादावुपवासनिवृत्तिः सा तत्प्रयुक्तोपवासस्य न तु तदधिकरणकस्यैकादश्युपवासस्यापि ।

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।
प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम् ॥

इति जैमिनिवचनात् । अत एव—

भृगुभानुदिनोपेता सूर्यसङ्क्रान्तिसंयुता।
एकादशी सदोपोष्या पुत्रपौत्रप्रवर्धिनी ॥

इति विष्णुधर्मोत्तरमपि सङ्गच्छते । रविवारादिप्रयुक्त उपवासश्च संवर्तेनोक्तः—

अमावास्या द्वादशी च सङ्क्रान्तिश्च विशेषतः।
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥
अत्र स्नानं जपो होमो देवतानां च पूजनम्।
उपवासस्तथा दानमेकैकं पावनं स्मृतम् ॥ इति ।

पारणं चोपवासं चेत्यत्र समाप्तिपर्यायपारणपदसमभिव्याहाराdुपवासपदमुपवासोपक्रमपरम् । तेनोपवासव्रतं रविवारादौ पुत्रवद्गृहस्थातिरिक्तः कुर्यादित्येव तात्पर्यार्थः । न तु तन्निमित्तपारणाया अपि पृथङ्निषेधः । रविवारादिप्रयुक्तपारणाया अभावात् । न च—

सप्त वारानुपोष्यैव सप्तधा संयतेन्द्रियः।
सप्तजन्मकृतात्पापात्तत्क्षणादेव मुच्यते ॥

इतिवचनविहितशनिवारप्रयुक्तोपवासपारणाया रविवारनिमित्तता । तथा,

नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम्।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥

इति सङ्क्रान्तिपूर्वदिवसविहितोपवासपारणायाश्च सङ्क्रान्तिनिमित्ततेति वाच्यम् । परेऽहनि तु पारयेदित्यादिवचनादुत्तरदिनत्वेन रविवारादेरधिकरणत्वं न तु तत्प्रयुक्ता पारणा । रविवारे पारयेदित्यादिवचनाभावात् । कृष्णैकादशीप्रयुक्तपारणायास्तु दशम्युपवासविध्यदर्शनेन कथमप्यसम्भवाच्च न च तर्हि तदधिकरणकपारणाया एव निषेधः अत एव तन्निमित्तोपवासस्येत्युपवासमात्रग्रहणमिति वाच्यम् । द्वादश्यां रविवारे एकादशीपारणाभावप्रसङ्गात् । तस्माद् यथोक्तैव व्याख्या युक्तेति । यदपि च—

व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही ।

इतिवचनेन श्राद्धदिने उपवासनिषेधनं तत् एकादशीव्यतिरिक्तविषय एव।

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्॥

इति वृद्धयाज्ञवल्क्योक्तेः।

यस्मिन् दिने पितुः श्राद्धं मातुर्वाथ भवेद्गुह!।
तस्मिन्नेव दिने तात! भवेदेकादशीव्रतम्॥
अन्यत्रापि व्रतं स्कन्द! तदा कार्यं च तच्छृणु।
न लुप्यते यथा श्राद्धं तूपवासोऽथवा गुह!॥
इति विप्रतिपन्नेऽर्थे उपायः परमो मतः।
इष्टो हितार्थं सर्वेषां नराणां शिखिवाहन!॥
श्राद्धदिनं समासाद्य उपवासो यदा भवेत्।
तदा कृत्वा तु वै श्राद्धं भुक्तशेषं च यद् भवेत्॥
तत्सर्वं दक्षिणे पाणौ गृहीत्वान्नं शिखिध्वज!।
अवजिघ्रेदनेनाथ तेन श्राद्धं शिखिध्वज!।
पितॄणां तृप्तिदं जातं व्रतभङ्गो न विद्यते॥

इति स्कन्दपुराणोक्तेश्च। यदपि च—

पत्यौ जीवति या नारी उपवासं व्रतं चरेत्।
आयुष्यं हरते भर्त्तुर्नरकं चैव गच्छति॥

इति वचनं तदपि भर्त्रननुज्ञाविषयम्।
भार्या भर्त्तुर्मतेनैव व्रतादीन्याचरेत् सदा॥

इति कात्यायनोक्तेः।

नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा।
निष्फलं तु भवेत्तस्या यत् करोति व्रतादिकम्॥

इति मार्कण्डेयपुराणाच्च। अत्र पित्रादिग्रहणं भर्त्रसन्निधानाविषयं विधवाविषयं च न स्त्री स्वातन्त्र्यमर्हतीति वचनात्। एतच्च विधवया पक्षद्वयेऽपि कार्यम्।

एकादश्या विना रण्डा यतिश्च सुमहामते!।
पच्यते ह्यन्धतामिस्रे यावदाभूतसम्प्लवम्॥

इति वचने रण्डायतिसमभिव्याहारात्। एवं च सधवाया गृहस्थवच्छुक्लायामेवाधिकार इत्यनवद्यम्।

अथ व्रते एकादशीद्वैधं निर्णीयते ।

सा च द्विविधा सम्पूर्णा विद्धा च । तत्र उदयात् प्राङ्मुहूर्त्तद्वयमारभ्य प्रवृत्तायाः पुनः सूर्योदयपर्यन्तसत्त्वे सम्पूर्णा ।

आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता ।
एकादशी तु सम्पूर्णा विद्धान्या परिकीर्त्तिता ॥

इतिर्भाविष्यपुराणात् । अत एव—

प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः ॥

इति स्कन्दपुराणे सामान्यत उक्तस्य सम्पूर्णत्वस्य हरिवासरपर्यायैकादश्यां पर्युदासः कृतः । अत्र च यत् सामान्यतः सिद्धं उदयादारभ्य प्रवृत्तत्वं उदयपर्यन्तं च सत्त्वमिति द्वयमभिहितं सम्पूर्णत्वं तन्मध्ये पूर्वमेव एकादश्यां पर्युदस्यते नोत्तरमपि भविष्यैकवाक्यत्वात् । तेन अरुणोदयमारभ्य पुनः सूर्योदयपर्यन्तं सत्त्व एव एकादशी सम्पूर्णेति सिद्धम् । यत्तु—

आदित्योदयवेलाया आरभ्य षष्टिनाडिका ।
सम्पूर्णैकादशी नाम

इतिवचनं तदनुकल्पभूतसम्पूर्णत्वविधायकमिति वक्ष्यते । विद्धा तु दशम्या अरुणोदयस्पर्शे सति । या तु कृत्स्ना अरुणोदयव्यापिनी द्वितीयसूर्योदयादर्वागेव समाप्ता सा न विद्धा न सम्पूर्णा किन्तु खण्डमात्रम् । तस्मादुदयादर्वाक् मुहूर्त्तद्वयान्विता सम्पूर्णेति युक्तम् । यत्तु—

अरुणोदयकाले तु दिशागन्धो भवेद् यदि ।

इत्यादिवचनेषु अरुणोदयपदं तदपि मुहूर्त्तद्वयपरमेव ।

यत्तु ब्रह्मवैवर्त्ते—

चतस्रो घटिकाः प्रातररुणोदय इष्यते ।

तथा—

अरुणोदयवेधः स्यात् सार्द्धं तु घटिकात्रयम् । इति ।

अत्रापि मुहूर्त्तद्वयोपलक्षणम् । एकमूलकल्पनालाघवात् । अयं चारुणोदयवेधो वैष्णवान् प्रत्येव ।

दशमीवेधसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्धि नैकादशीव्रतम् ॥

इतिगारुडोक्तेः । यत्तु—

सूर्योदयस्पृशाप्येषा दशम्या गर्हिता सदा ।

इतिसूर्योदयवेधवचनं तद्वैष्णवातिरिक्तविषयं परिशेषात् इति

माधवादयः । केचित्तु अरुणोदयवेधोऽपि सर्वसाधारणः । वेधसामान्यवचनात् । वैष्णवग्रहणं तु अरुणोदयवेधस्य वैष्णवान् प्रति अरुणोदयवेध एवेति नियमार्थम् । एवं च सामान्यप्राप्तं वेधद्वयमपि वैष्णवेतरान् प्रति प्रवर्त्तते । तत्रारुणोदयवेधश्रवणात् काम्यव्रतविषयः ।

उदयात् प्राक् त्रिघटिकाव्यापिन्येकादशी यदि ।
सन्दिग्धैकादशी नाम त्याज्या वै धर्मकाङ्क्षिभिः ॥
पुत्रराज्यसमृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥

इतिगारुडोक्तेः । न चैतद् वैष्णवान् प्रत्येवोपसंह्रियतामितिवाच्यम् । तेषां "नैवोपोष्यं" इत्यनेनोपवाससामान्यनिषेधात् । एकादशीवृद्धौ द्वादशीवृद्धौ सर्वेषां नित्योपवासविषयोऽपि सः ।

एकादशीं दिशा युक्तां वर्धमाने विवर्जयेत् ।
क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुताम् ॥

इतिभविष्योक्तेः । सोम=एकादशी ।

दशमीशेषसंयुक्ता उपोष्यैकादशी तदा ।
यदा न स्यात् त्रयोदश्यां मुहूर्तं द्वादशी तिथिः ॥

इतिविष्णुरहस्योक्तेः । अत्र यदा न स्यादित्युक्तेर्यदि स्यात्तदा दशमीविद्धा न कार्येत्यर्थादुक्तं भवति । एकादश्या द्वादश्या वा वृद्ध्यभावे तु अरुणोदयवेधो न प्रवर्त्तते किन्तु सूर्योदयवेध एव । अन्यथा सूर्योदयवेधानर्थक्यापत्तेः । तथा च वृद्ध्यभावे अरुणोदयविद्धैव शुद्धा । सूर्योदयवेधे तु वृद्ध्यभावे उत्तरैव ।

कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम् ।

इतिवचनात् । संयुक्ता=अरुणोदयविद्धा । प्रवेशिनी=सूर्योदयविद्धेत्याहुः । सर्वथारुणोदयविद्धा वैष्णवैः सर्वदा त्याज्येत्यविवादम् । शुद्धाप्येकादश्या द्वादश्या वा वृद्धौ त्याज्या ।

सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां च पारणम् ॥

इति नारदोक्तेः । सम्पूर्णा—

उदयात्प्राक् यदा विप्र ! मुहूर्त्तद्वयसंयुता ।

इति परिभाषिता । द्वादशीमात्रवृद्धौ तु सम्पूर्णां प्रकम्य व्यासः—

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिम् ॥ इति ।

न चैतत्स्मार्त्तविषयमिति वाच्यम् । तेषामीदृशे विषये शुद्धाया-

मेवोपवासविधानस्य वक्ष्यमाणत्वात्। वैष्णवस्तु विष्णुमन्त्रदीक्षावान्।

वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः।

इत्याद्युक्तेः। एवं च वैष्णवस्य पुत्रादयोऽवैष्णवाश्चेत्त तान् प्रत्ययं निर्णय इति ध्येयम्। अत्र च विद्धानिषेधः संयोगपृथक्त्वन्यायेन व्रतार्थः पुरुषार्थश्च। व्रतार्थता तावत् प्रकरणात्। पुरुषार्थता तु—

दशमीशेषसंयुक्ता गान्धार्या समुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्॥
दशम्यनुगता यत्र तिथिरेकादशी भवेत्।
तत्रापत्यविनाशः स्यात् परेत्य नरकं व्रजेत्॥

इत्यादिना पुरुषगतानिष्टस्मरणात्।

जम्भस्येयं पुरा दत्ता दशमीशेषसंयुता।
उपोष्य तां प्रमादेन प्रायश्चित्तं चरेद्द्विजः॥
कृच्छ्रपादं नरश्चीर्त्वा गां च दद्यात् सवत्सिकाम्।
सुवर्णस्यार्द्धकं देयं तिलद्रोणसमन्वितम्॥

इतिप्रायश्चित्तविधानाच्चेति केचित्। तत्त्वं तु "अङ्गे फलश्रुतिरर्थवाद" इति न्यायेन क्रत्वर्थनिषेधातिक्रमे नरकादिश्रवणं निन्दार्थवाद एव। प्रायश्चित्तमपि अनारभ्याधीतमपि अधिकारपशुन्यायेनोत्तरदिनक्रियमाणव्रतार्थमेवाभ्युदितेष्टिवदितियुक्तमित्यलं प्रसक्तानुप्रसक्त्या।

इति वैष्णवान् प्रत्येकादशीनिर्णयः।

अथ स्मार्त्तान् प्रति।

तत्र शुद्धाभेदेन द्विविधापि एकादशी प्रत्येकं नवविधा।

शुद्धा विद्धा तथा त्रेधा भिन्ना न्यूनसमाधिकैः।
त्रिधैकैका पुनर्भिन्ना द्वादश्यूनसमाधिकैः॥

इतिवचनात्। अत्र न्यूनसमेत्यादौ भावप्रधानो निर्देशः। द्वितीयसूर्योदयाव्यवहितप्राक्क्षणे समाप्ता समा ततोऽर्वाक्समाप्ता न्यूना उदयोत्तरभाविनी अधिका। अत्र च विद्धा सकलमते सूर्योदयवेधेनैव। अरुणोदयवेधमादायाष्टादशभेदासम्भवात्। तावद्ह्रासवृद्ध्योरसम्भवात्। ते च शुद्धन्यूनन्यूनद्वादशिका १ शुद्धन्यूनसमद्वादशिका २ शुद्धन्यूनाधिकद्वादशिका ३ शुद्धसमन्यूनद्वादशिका ४ शुद्धसमसमद्वादशिका ५ शुद्धसमाधिकद्वादशिका ६ शुद्धाधिकन्यूनद्वादशिका ७ शुद्धाधिकसमद्वादशिका ८ शुद्धाधिकाधिकद्वादशिका ९ एवं विद्धायामपीत्यष्टादश भेदाः। तत्र निर्णयसङ्ग्राहकश्लोकौ प्राच्यनिबन्धेषु—

आद्यासु षट्सु पूर्वैव व्यवस्थानन्तरद्वये।
गृहमेधियतीनां स्यान्नवम्यां स्यात् परेऽहनि॥
विद्धात्रये तु पूर्वा स्याद्व्यवस्थानन्तरद्वये।
अपरेऽहनि शेषाः स्युः सप्तमी तु व्यवस्थया॥ इति।

माधवस्त्वष्टौ भेदानाह—शुद्धानधिकानाधिकद्वादशिका १ शुद्धानधिकाधिकद्वादशिका २ शुद्धाधिकाधिकद्वादशिका ३ शुद्धाधिकानधिकद्वादशिका ४ एवं विद्धापि। उभयथापि निर्णयः समान एव। अनधिकत्वस्य साम्येन क्षयेण च सम्भवात्। तत्र प्रथमे पक्षे सन्देह एव नास्ति। द्वितीयेऽप्याद्यैव।

शुद्धा यदा समा हीना समा हीनाधिकोत्तरा।
एकादशीमुपवसेन्न शुद्धां वैष्णवीमपि॥

इतिस्कान्दोक्तेः। शुद्धैकादशी शुद्धा सतीत्यर्थः। समा हीना वा अनधिकेतियावत्। उत्तरा=वैष्णवी च द्वादशी। यानि तु—

एकादशी भवेत् पूर्णा परतो द्वादशी यदि।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत्॥

इत्यादिवचनानि तान्येकादश्या अप्याधिक्ये योज्यानि।

पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितयं यदि।

इति वाक्यान्तरैकवाक्यत्वात्, वैष्णवविषयाणि वा। तेषां द्वादशीमात्रवृद्धौ परेद्युरुपवासस्य साधितत्वात्। अनन्तभट्टमाधवादीनामत्र विवाद एव। हेमाद्रिस्तु अस्मिन् द्वितीये पक्षे शुद्धैकादश्युपवासविधायकानां वचनानां गृहस्थविषयकत्वं शुद्धद्वादश्युपवासविधायकानां तु यतिविषयत्वम्।

सम्पूर्णैकादशी यत्र द्वादशी च परेऽहनि।
तत्रोपोष्या द्वादशी स्याद् द्वादश्यामेव पारणम्॥
न गर्भे विशते जन्तुरित्याह भगवान् हरिः।

इति वचनात्। अत्र च न गर्भे विशते जन्तुरित्यतो यतिप्रतीतेरित्याह। अत्रार्थे स्पष्टमूलवचनं पृथ्वीचन्द्रोदये नारदीयनाम्ना लिखितम्।

सम्पूर्णैकादशी शुद्धा द्वादश्यां नैव किञ्चन।
द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्॥
पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तथा। इति।

तृतीयपक्षे तु सर्वेषां परैव।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदा॥

इति नारदोक्तेः। चतुर्थपक्षे तु गृहियतिभेदेन व्यवस्था।

प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्रमास्थिता।
द्वादश्यां च तथा तात! दृश्यते पुनरेव सा॥
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो!।

इति नारदोक्तेः। यतिग्रहणं गृहिभिन्नोपलक्षणम्। जघन्ये लक्षणाया न्याय्यत्वात्। सम्पूर्णा प्रकम्य—

पुनः प्रभातसमये घटिकैका यदा भवेत्।
तत्रोपवासो विहितो वनस्थस्य यतेस्तथा॥
विधवायाश्च तत्रैव परतो द्वादशी न चेत्।

इतिवचनाच्च। विधवायाश्चेति चकारात् विधुरग्रहणम्। एकाङ्गविकलत्वसाम्यात्। केचित्तु गृहस्थयतिग्रहणं सकामनिष्कामोपलक्षणम्।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
पूर्वामुपवसेत् कामी निष्कामस्तूत्तरां वसेत्॥

इति मार्कण्डेयोक्तेः। न च प्रागुदाहृतवचनानुसारात् सकामनिष्कामपदं गृहियतिपरमास्त्विति वाच्यम्।

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा।
प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम!॥

इति स्कन्दपुराणे गृहिणोऽपि निष्कामस्योत्तरत्रोपवासविधानादित्याहुः। विष्णुप्रीतिकामनायां तु एतादृशे विषये दिनद्वयेऽप्युपवासः कार्यः।

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
त्रयोदशी उषःकाले उपोष्या तत्र का भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः।

इति स्कन्दपुराणोक्तेः। केचित्तु द्वे उपोष्ये इत्यनेन नैकस्योपवासस्य आवृत्त्या विधानं किन्तु कैश्चित्पूर्वा कैश्चिदुत्तरेति तिथिद्वयोपोष्यत्वप्रतिपादनपरं पूर्वैकवाक्यत्वादित्याहुः। या तु विद्धानधिकानाधिकद्वादशिका तस्यां विद्धैवोपोष्या।

यदि दैवात्तु संसिद्ध्येदेकादश्यां तिथित्रयम्।
तत्र क्रतुशतं पुण्यं द्वादशीपारणं भवेत्॥

इति नारदोक्तेः।

एकादशी न लभ्येत द्वादशी सकला भवेत्।
उपोष्या दशमीविद्धा ऋषिरुद्दालकोऽब्रवीत्॥

इति ऋष्यशृङ्गोक्तेश्च। अत्र च विद्धाया अनाधिक्यं साम्येन क्षयेण च भवति। तत्र क्षयेण तस्मिन् पुत्रवद्गृहिभिन्नैः सर्वैर्विद्धैवोपोष्या।

एकादशीक्षयदिन उपवासं करोति यः।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा॥
इत्यादिवचने पुत्रवतामुपवासपर्य्युदासात्। एवं च–
एकादशी दिशाविद्धा परतोऽपि न वर्द्धते।
यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये तिथिः॥

इति पाद्मे गृहिपदं पुत्रवद्भिन्नगृहिपरं द्रष्टव्यम्। तेषां तु द्वादश्यामेव
दिनक्षये तु सम्प्राप्ते नोपोष्या दशमीयुता।
उपोष्या द्वादशी शुद्धा त्रयोदश्यां च पारणम्॥

इति भविष्योक्तेः। अत्र च दिनक्षये विद्धानिषेधस्य पुत्रवद्विषयत्वात् द्वादश्युपवासोऽपि तद्विषय एवेति ध्येयम्। साम्येन अनाधिक्ये तु पुत्रवतामपि पूर्वत्रैव "दिनक्षय" इत्यादिना क्षय एवैतेषां विद्धोपवासपर्युदासात्। अत एव–
एकादशी कलाप्येका परतो न च वर्द्धते।
गृहिभिः पुत्रवद्भिश्च विद्धोपोष्या तदा तिथिः॥

इति हेमाद्र्युदाहृतं भविष्यपुराणवचनं सङ्गच्छते। अत्र वृद्धिनिषेधात् साम्यप्रतीतिः। यतीनां तु साम्येनानाधिक्ये परैव।
दशमीमिश्रिता पूर्वा पूर्णा च द्वादशी परा।
शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः॥

इति विष्णुरहस्योक्तेः। क्षयेणानाधिक्ये तु पूर्वैव "यतिभिर्गृहिभिश्च" इति पाद्मानुसारात्। यत्तु—
दिनपर्ययेक्षऽपि शुद्धैव द्वादशी मोक्षकाङ्क्षिभिः।
उपोष्या दशमीविद्धा नोपोष्यैकादशी सदा॥

इति सुमन्तुवचनं तत् क्षयशब्देन वृद्ध्यभावलक्षणया साम्यपरमेव व्याख्येयम्। अन्यथा पाद्मस्य निर्विषयत्वापत्तेः। न चैतद्वचनानुरोधात् पाद्मस्यैव लक्षणया साम्यपरत्वमस्त्विति वाच्यम्। क्षये परा साम्ये पूर्वेत्यनौचित्यापत्तेः। मदनरत्नस्तु साम्ये क्षये च यतीनां परैव पूर्वोदाहृतसुमन्तुविष्णुरहस्यवचनाभ्याम्। पाद्मे यतिग्रहणं तु नियमपर्याययतियुक्तामुमुक्षुनैष्ठिकब्रह्मचारिवानप्रस्थपरमित्याह। यत्तु तिथितत्वादौ–
कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम्।

इति कूर्म्मपुराणवचनान्न कदाचिदपि विद्धोपवासविधिरित्युक्तम्। तदसत्। अस्य वचनस्याचार्यचूडामणिप्रभृतिभिरनुदाहृतत्वेन निर्म्मूलत्वात् समूलत्वे वामुमुक्षुविषयत्वेनोपपत्तिः। अन्यथा—
अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु।

मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः ॥

इति सूर्योदयविद्धाप्रतिप्रसवार्थकस्य ऋष्यशृङ्गवचनस्याचार्यचूडामणिप्रभृतिभिरपि उदाहृतस्यानर्थक्यापत्तेः। या तु विद्धानधिकाधिकद्वादशिका सा परैव।

एकादशी यदा लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी शुद्धा यदीच्छेत्परमं पदम् ॥

इति ब्रह्मवैवर्त्तोक्तेः। गौडास्तु—

पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम्।

इत्युत्तरार्द्धं पठित्वा शुक्लपक्षे दशमीविद्धा त्याज्या कृष्णपक्षे तु दशमीविद्धा ग्राह्येत्याहुः। तत्रेदं वक्तव्यम्। किमत्र विद्धानिषेधः शुक्लपक्ष एवेति विधीयते किं वा विद्धाविधिः कृष्णपक्ष एवेति। आद्ये कृष्णपक्ष एकादशीद्वादश्योर्वृद्धावपि विद्धाकर्त्तव्यतापत्तिः। द्वितीये तु शुक्लपक्षे तदनाधिक्येऽपि त्यागापत्तिः। न चेष्टापत्तिस्तेषामप्यसम्मतत्वात्।
यत्तु मदनरत्ने—

सर्वत्रैकादशी कार्या दशमीमिश्रिता नरैः।
प्रातर्भवतु वा मा वा यतो नित्यमुपोषणम् ॥

इति वचनं प्रातस्त्रयोदशीदिने द्वादशी भवतु वा मा वेति व्याख्याय त्रयोदश्यां द्वादशीसत्त्वेऽपि विद्धायामेवोपवास इत्युक्तम्। तदयुक्तम्। एकादशी यदा लुप्तेत्याद्युदाहृतवचनविरोधापत्तेः। प्रातःपदेन तृतीयप्रातःकालानुपस्थितेश्च। वचनस्य त्वयमर्थः। दशमीवेधे प्रातः सङ्कल्पकाले एकादशी भवतु वा मा वा सर्वथोपवासः कर्त्तव्य एवेति। वस्तुतस्तु हेमाद्र्यादौ "द्वादशीमिश्रिता नरैः" इत्येव वाक्यमुदाहृतमिति न कश्चिद्दोषः। या तु विद्धाधिकाधिकद्वादशिका सा सर्वेषां परैव विद्धानिषेधवाक्यानां निरङ्कुशं तत्रैव प्रवृत्तेः। या तु विद्धाधिकानधिकद्वादशिका सा सर्वैरपि परैवोपोष्या।

द्वादशीमिलिता कार्या सर्वत्रैकादशी तिथिः।
द्वादशी च त्रयोदश्यां विद्यते यदि वा नवा ॥

इति पाद्मोक्तेः।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां च पारणम् ॥

इति कूर्मोक्तेश्च। अस्मिंश्च क्षयेण द्वादश्या अनाधिक्ये कौर्मोक्तेः पुत्रवद्गृहस्थैर्नोपवासः कार्यः।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः ॥

इति कौर्मोक्तेः । किन्तु नक्तमेव ।

एकादशी यदा वृद्धा द्वादशी च क्षयं गता ।
क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र विधीयते ॥

इति वृद्धपराशरोक्तेः । केचित्तु दिनक्षयनिमित्तोपवासनिषेध "उपवासनिषेधे तु" इतिवचनात् किञ्चिद्भक्षयेदित्याहुः तन्न । नक्तादिविधेर्विशेषत आम्नानात् । यत्तु—

एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः ।
उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद्गृही ॥

इति प्रचेतोवचनं तत् शुद्धाविषयं "सम्पूर्णैकादशी यत्र" इत्यादिबहुवाक्यैकवाक्यत्वात् । माधवस्तु अस्माद्वचनात् विद्धायामपि इयं व्यवस्थेत्याह । अत्र च येषु पक्षेषु विद्धोपवासप्रसक्तिस्तत्र रात्रौ पूजाव्रतसङ्कल्पावनुष्ठेयौ ।

विद्धोपवासेऽनश्नंस्तु दिनं त्यक्त्वा समाहितः ।
रात्रौ सम्पूजयेद्विष्णुं सङ्कल्पं च तदाचरेत् ॥

इति अनन्तभट्टोदाहृतस्मृतिवचनात् । येषु तु शुद्धोपवासप्रसक्तिस्तत्र यदि पूर्वदिने मध्यरात्रात् पूर्वं दशमी तदा "प्रातः सङ्कल्पयेद्विद्वान्" "पूर्वाह्णे दैवकार्याणि" इत्यादिसामान्यवचनेभ्यः प्रातरेव तावनुष्ठेयौ । यदा तु मध्यरात्रोत्तरं दशम्या वेधस्तदा मध्याह्नोत्तरं पूजाव्रतसङ्कल्पावनुष्ठेयौ ।

दशम्याः सङ्गदोषेण मध्यरात्रात् परेण तु ।
वर्जयेच्चतुरो यामान् सङ्कल्पार्चनयोस्तथा ॥

इति अनन्तभट्टोदाहृतवचनात् । एवं च—

अर्धरात्रात् परा यत्र एकादश्यां तु लभ्यते ।
तत्रोपवसनं कर्तुं न चेच्छेद्दशमीकला ॥

इतिस्मृतिवचनेऽप्युपवासग्रहणं प्रातःसङ्कल्परूपोपवासनिषेधार्थमेव व्याख्येयं न तूपवासनिषेधार्थमित्यनन्तभट्टः । हेमाद्रिस्तु प्रथमारम्भविषयमित्याह । न चेच्छेदितीच्छानिषेधस्य प्रथमप्रयोग एवाङ्गत्वात् । अन्ये तु कपालवेधस्यापि अरुणोदयवेधवन्नित्यवदेव दूषकत्वम् अस्माद् वचनात् । अत एव कालनिर्णयदीपिकाविवरणकारेणापि एतन्न दूषितम् । अतश्च कपालवेधो देशाचाराद् व्यवस्थित इत्याहुः । वस्तुतस्तु

अर्धरात्रेऽपि केषाञ्चिद्दशम्या वेध इष्यते ।
अरुणोदयकाले तु नावकाशो विचारणे ॥

कपालवेध इत्याहुराचार्या ये हरिप्रियाः।
नैतन्मम मतं यस्मात् त्रियामा रात्रिरिष्यते ॥

इतिवचने कैमुतिकन्यायप्रदर्शनात् कपालवेधवचनानि अरुणोदयवेधस्तुत्यर्थान्येवेति युक्तम्।

अथ पारणानिर्णयः।

सा चाल्पाल्पतराल्पतमद्वादश्यामपि प्रातर्माध्याह्निकं कर्मोषःकालेऽपकृष्य कार्या।

यदा भवति अल्पा तु द्वादशी पारणादिने।
उषःकाले द्वयं कुर्यात् प्रातर्माध्याह्निकं तदा ॥

इति पाद्मोक्तेः। न चोषःकालस्याल्पत्वात् कथं तावत् कर्मानुष्ठेयमिति वाच्यम्। विधिबलात् सङ्ख्यादिबाधेन तदनुष्ठानोपपत्तेः। अत एव–

महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः।
करोति धर्म्महरणम्—

इति पाद्मे द्वादश्यतिक्रमे दोष उक्तः। अपकर्षश्च स्मार्त्तस्यैव न श्रौतस्य ततो बलीयस्त्वात्। श्रौतकर्म्मानधिकृतविषयत्वेन तस्य सावकाशत्वाच्च। एवं काम्यस्यापि नापकर्षः। अत्र च प्रातर्माध्याह्निकग्रहणान्न नैमित्तिकसङ्क्रान्तिव्यतीपातादियुक्तस्य तत्तत्काले विहितस्य स्नानादिकर्मणः सांवत्सरिकादेर्वाऽपकर्षः। एवं भूयस्यामपि द्वादश्यां माध्याह्निकापकर्षः प्रातः कार्य एव।

सर्वेषामुपवासानां प्रातरेव हि पारणा।

इति माधवोदाहृतवचनात्। यदा तु प्रातःकालो द्वादशीप्रथमपादान्तर्गतो भवति तदा तदन्ते पारणा कार्या।

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः।
तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः ॥

इति विष्णुधर्मोक्तेः।

इत्येकादशीपारणानिर्णयः। इत्येकादशीनिर्णयः।

अथ द्वादशीनिर्णयः।

सा तु एकादशीयुक्ता ग्राह्या "रुद्रेण द्वादशी युक्ता" इति युग्मवचनात्।

द्वादशी च प्रकर्त्तव्या एकादश्या युता प्रभो !।
सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥

इति स्कन्दपुराणाच्च।

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति गार्ग्यवचनाच्च । सकलकर्मोपलक्षणं चात्रोपवासग्रहणम् । यदा चैकादश्युपवासद्वादश्युपवासयोरेकस्मिन् दिने प्रसक्तिस्तदोपवासद्वयमपि तन्त्रेण कार्यम् । यदा तु सम्पूर्णयोस्तिथ्योर्भेदेनोपवासद्वयप्रसक्तिस्तदा एकादश्युपवाससंयुक्तां पारणां जलेन कृत्वा द्वादशीव्रतमारभेतेति माधवः । अयमेव च न्यायः सर्वत्र उपवासद्वयप्रसक्तौ ध्येयः । चैत्रशुक्लद्वादश्यां दमनोत्सव उक्तः—

द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।

इत्यादिना रामार्चनचन्द्रिकायाम् । तत्र च पारणाहमात्रं विवक्षितम् ।

पारणाहे न लभ्येत द्वादशी घटिकापि चेत् ।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे ॥

इति तत्रैवोक्तेः । पवित्रारोपणं च श्रावणशुक्लद्वादश्यां विहितम् ।

श्रावणस्य सिते पक्षे कर्कस्थे च दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥

इति विष्णुधर्म्मोक्तेः ।

## अथ श्रवणद्वादशीनिर्णयः ।

तत्र विष्णुधर्मोत्तरे—

या राम ! श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञो द्वादशद्वादशीफलम् ।

अयं च स्वल्पोऽपि योगः फलदः ।

तिथिनक्षत्रयोर्योगो योगस्यैव नराधिप ! ।
द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिकः ॥

इति श्रवणद्वादशीं प्रकृत्य नारदीयोक्तेः । योगः रोहिणीयोगादिः । तत्र या तावदेकस्मिन्नेव दिने श्रवणयोगवती शुद्धा शुद्धाधिका वा विद्धा विद्धाधिका वा तस्यां सन्देह एव नास्ति । यदा विद्धाधिकायां दिनद्वयेऽपि श्रवणयोगस्तदा एकादशीयुता ग्राह्या ।

द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥

इति मात्स्योक्तेः । हेमाद्रौ तु श्रवणास्पृष्टेति पाठः । श्रवणाशब्दश्च स्त्रीलिङ्ग इति व्याख्यातम् । तन्त्रेण च तदोपवासद्वयं कार्यम् । यदा तु शुद्धा-

धिकाया दिनद्वये श्रवणयोगस्तदोत्तरैव ।

उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते ।

इति बृहन्नारदीयात् । यदा तु द्वादश्यां श्रवणयोग एव नास्ति तदा एकादश्यामेव तद्वत्यां श्रवणद्वादशीव्रतं कार्यम् ।

यदा न प्राप्यते ऋक्षं द्वादश्यां श्रवणः क्वचित् ।

एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥

इति नारदीयोक्तेः । एतस्याश्च संज्ञाविशेषो—

भविष्ये—

एकादशी यदा शुक्ला श्रवणेन समन्विता ।

विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा ॥ इति ।

विद्धाधिक्येऽपि चोत्तरदिने श्रवणयोगाभावे तादृशी दशमीविद्धापि ग्राह्या ।

दशम्येकादशी यत्र सा नोपोष्या भवेत्तिथिः ।

श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा ॥

इति वन्हिपुराणात् । यदा चैकादशीश्रवणद्वादश्युपवासौ दिनभेदेन प्राप्नुतस्तदा शक्तेन द्वयमपि कार्यम् ।

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।

न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥

इति भविष्योक्तेः । स्वीकृतैकादशीव्रतश्रवणद्वादशीव्रतोभयकरणासामर्थ्ये तु एकादशीमुपोष्य द्वादश्यां पूजामात्रं कार्यम् ।

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।

उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥

इति मात्स्योक्तेः । अगृहीतैकादशीव्रतस्तु द्वादश्यामेवोपवसेत् ।

उपोष्य द्वादशीं पुण्यां वैष्णवर्क्षेण संयुताम् ।

एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम् ॥

इति नारदीयोक्तेः । अत्र च यदा कदाचिच्छ्रवणयोगेऽपि प्रातरेव सङ्कल्प इति हेमाद्रिः । इयं च भाद्रपदे महत्युक्ता ।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।

महती नाम सा ज्ञेया उपवासे महाफला ॥

इति स्कन्दपुराणात् । इयं च बुधयुक्तातिप्रशस्ता ।

श्रवणद्वादशीयोगे बुधवारो यदा भवेत् ।

अत्यन्तमहती नाम द्वादशी सा प्रकीर्त्तिता ॥

इति विष्णुधर्म्मोत्तरात् । श्रवणद्वादशीव्रतनिमित्तोपवासपारणं तु पा·

रणादिने उभयानुवृत्तौ तूभयान्ते कर्त्तव्यमिति मुख्यः कल्पः।

तिथिनक्षत्रसंयोगादुपवासो भवेद्यदा।
पारणं तु न कर्त्तव्यं यावन्नैकस्य सङ्क्षयः॥

इति नारदीयोक्तेरिति केचित्। मदनरत्नस्तु अत्र यद्यपि तिथिनक्षत्रयोरन्यतरान्ते पारणं प्रतीयते तथापि तिथ्यन्त एव कार्यम् न तु तिथिमध्येऽपि नक्षत्रमात्रान्ते।

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्॥

इति विष्णुधर्मोत्तरे श्रवणान्तस्य पारणायां पर्युदस्तत्वात्। नचैवं रोहिण्यन्तेऽपि सा न स्यादितिवाच्यम्। "भान्ते कुर्यात्तिथेर्वापि" इति रोहिणीयोगप्रयुक्तोपवासप्रकरणस्थवन्हिपुराणवचनात्तत्र सैवेव न त्वत्रैवं वचनमस्तीत्याह।

इति श्रवणद्वादशीनिर्णयः।

अथ तदितरमहाद्वादशीनिर्णयः।

तत्र ब्रह्मवैवर्त्ते,

उन्मीलिनी वञ्जुलिनी त्रिस्पृशा पक्षवर्द्धिनी।
जया च विजया चैव जयन्ती पापनाशिनी॥
द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज!।
तिथियोगेन जायन्ते चतस्रश्चापरास्तथा॥
नक्षत्रयोगात्प्रबलपापं प्रशमयन्ति ताः।
एकादशी तु सम्पूर्णा वर्द्धते पुनरेव सा॥
उन्मीलिनी भृगुश्रेष्ठ! कथिता पापनाशिनी।
द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम्॥
वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी।
अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम्।
अन्ते त्रयोदशी भद्रा त्रिस्पृशा सा प्रकीर्त्तिता॥
कुहूराके यदा वृद्धिं प्रयाते पक्षवर्द्धिनीम्।
विहायैकादशीं तत्र द्वादशीं समुपोषयेत्।
पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तु ताः॥
उपोषिताः समफला द्वादश्योऽष्टौ पृथक् पृथक्। इति।

चतस्रस्तिथियोगेन चतस्रो नक्षत्रयोगेनेत्यष्टौ। आद्या एकादशी। अरुणोदये सूर्योदय इति केचित्। पक्षवर्द्धिन्यां चोपवासद्वयासमर्थं प्रति द्वादश्युपवासमात्रविधानं श्रवणद्वादशीव्रतवत्। पुष्याद्यं पुनर्वसुः। अत्र च

तिथिप्रयुक्तासु न कोऽपि विचारः । श्रवणद्वादशी तु निर्णीतैव । इतरासु नक्षत्रप्रयुक्तासु तु न श्रवणद्वादशीवदल्पयोगेऽपि पूज्यत्वं किन्तु सूर्योदयादारभ्य पुनस्तत्पर्यन्तमस्तमयपर्यन्तं वा सत्त्व एव ।

कृत्तिकादिभरण्यन्तं तारावासरसप्तकम् ।
नैते संयोगमात्रेण पुनन्ति सकलां तिथिम् ॥

इति सामान्यवाक्यात् । श्रवणे विशेषवचनात्तथेत्युक्तम् । एताश्चाष्टौ महाद्वादश्यः काम्याः । महापुण्या इत्यादिना फलश्रवणात् । यत्तु—

न करिष्यन्ति ये लोके द्वादश्योऽष्टौ ममाज्ञया ।
तेषां यमपुरे वासो यावदाभूतसम्प्लवम् ॥

इत्यकरणप्रत्यवायबोधकं वचनं तद्नाकरम् ।

इति तदितरमहाद्वादशीनिर्णयः ।

कार्त्तिककृष्णद्वादश्यामुक्तायां वत्सपूजायां प्रदोषव्यापिनी तिथिर्ग्राह्या । तस्य तत्काल एव विधानात् । दिनद्वये तत्कालव्याप्तौ पूर्वैव ।

वत्सपूजा वटश्चैव कर्त्तव्या प्रथमेऽहनि ।

इति स्मरणात् ।

इति द्वादशीनिर्णयः ।

अथ त्रयोदशीनिर्णयः ।

तत्र शुक्लत्रयोदशी पूर्वविद्धा कार्या ।
त्रयोदशी तु कर्त्तव्या द्वादशीसहिता मुने ! ।

इति ब्रह्मवैवर्त्तोक्तेः । कृष्णपक्षत्रयोदश्यां निगमे—

षष्ठ्यष्टमी त्वमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः कार्याः पराः पूर्वयुतास्तथा ॥

इति विशेषोक्तेश्च । यत्तु वृद्धवशिष्ठेनोक्तम्—

द्वितीया पञ्चमी वेधात् दशमी च त्रयोदशी ।
चतुर्द्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥ इति,

तत्तु शुक्लत्रयोदशीविषयम् । निगमे 'कृष्णपक्षे त्रयोदशी' इतिकृष्णपक्षपुरस्कारेण विशेषाभिधानात् । यदा तु परदिने त्रयोदशी नास्ति तदा पूर्वविद्धा कार्या । तदाह--

वशिष्ठः,

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धापि कर्त्तव्या यदि न स्यात् परे ऽहनि ॥ इति ।

उपवासेऽप्ययमेव निर्णयः । यत्तु—

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्द्दशी ।

त्रयोदशी अमावास्या ता उपोष्याः परान्विताः ॥

इति विष्णुधर्मोत्तरवचनं तत् कृष्णत्रयोदशीविषयम्। अन्यथा—

द्वितीया पञ्चमी वेधात् दशमी च त्रयोदशी।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

इति वृद्धवासिष्ठवचनविरोधात्। अतः कृष्णशुक्लभेदेनोभयोराञ्जस्यम्। अत्र च पूर्वविद्धाया ग्राह्यत्वं न सायाह्नमात्रव्यापित्वे किन्तु अपराह्णव्यापित्वे।

त्रयोदशी प्रकर्त्तव्या भवेद्या चापराह्णिकी।

इति स्कन्दपुराणात्। चैत्रे मदनत्रयोदशी तु मध्याह्नव्यापिनी ग्राह्या। तत्प्रकरणे—

मध्याह्ने पूजयेद्भक्त्या गन्धपुष्पाक्षतादिभिः।

इत्युक्तेः। सा तु शुक्लपक्षगतत्वात् पूर्वविद्धा। तथा शनित्रयोदशी पूर्वविद्धा प्रदोषव्यापिनी कार्या। प्रदोषलक्षणं तु—

त्रिमुहूर्त्तं प्रदोषः स्याद्रवावस्तं गते सति। इति।

स्कन्दपुराणे—

ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती।
पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् ॥ इति।
दिनद्वये प्रदोषव्यापित्वे तदेकदेशस्पर्शे वा उत्तरा ग्राह्या।
प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम्।
इति सङ्कल्पकालमारभ्य प्रवृत्तेः।
सदैव तिथ्योरुभयोः प्रदोषव्यापिनी तिथिः ॥
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः।

इति जावालिवचनाच्च। एकदेशस्पर्शेऽपि यत्राधिक्यं तत्र ग्राह्या। आधिक्यं देवपूजनभोजनपर्याप्तकालव्यापित्वम्। साम्ये तूत्तरैव। मार्गशीर्षशुक्लत्रयोदशी अनङ्गत्रयोदशी। मार्गशीर्षेऽमले पक्षे इत्युपक्रम्य-

अनङ्गेन कृता त्वेषा तेनानङ्गत्रयोदशी।

इति विष्णुपुराणोक्तेः।

यद्यपि चात्र सामान्यनिर्णयादपराह्णव्यापिनी पूर्वविद्धा प्राप्यते तथापि—

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

इति संवर्त्तवचनात् सायाह्नव्यापिन्या अपि पूर्वविद्धाया ग्रहणम्। अन्यथा हि सामान्यनिर्णयादेव प्राप्तेरेतस्य वचनस्य निरर्थकत्वापत्तेः।

एवं कार्त्तिककृष्णत्रयोदशी सायाह्नव्यापिनी ग्राह्या।

कार्त्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति॥

इति स्कान्दोक्तेः।

इति त्रयोदशीनिर्णयः।

अथ चतुर्दशीनिर्णयः।

तत्र व्यासः—

शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते। इति।

पद्मपुराणे—

एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी।
एताः परयुताः कार्याः पराः पूर्वेण संयुताः॥ इति।

भविष्यपुराणे—

सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी।
पौर्णमासीयुता सा स्याच्चतुर्दश्या च पूर्णिमा॥ इति।

नारदीयपुराणे—

तृतीयैकादशी षष्ठी पौर्णमासी चतुर्द्दशी।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता॥ इति।

वाराहपुराणे—

एकादशी दशम्या तु सप्तम्या चाष्टमी तथा।
पञ्चम्या च यदा षष्ठी त्रयोदश्या चतुर्द्दशी॥
आसु क्रिया न कुर्वीत पूर्वविद्धासु मानवः।
नागविद्धा तथा षष्ठी भानुविद्धो महेश्वरः।
चतुर्द्दशी कामविद्धा मिश्रास्ता मलिनाः स्मृताः॥ इति।

महेश्वरोऽष्टमी। अष्टमीचतुर्द्दश्यौ शुक्ले। चैत्रश्रावणचतुर्द्दश्यौ शुक्ले अपि रात्रिव्यापिन्यौ ग्राह्ये। तथाच-

बौधायनः—

मधोः श्रावणमासस्य शुक्ला या तु चतुर्द्दशी।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी॥ इति।

परा=मासान्तरगता।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृत! यतः।
अतस्तस्यां चतुर्द्दश्यां सत्यां तत्पूजनं भवेत॥

इति हेमाद्रिलिखितवचनाच्च। भाद्रशुक्लचतुर्दशी तु त्रिमुहूर्त्तव्यापिनी। त्रिमुहूर्त्तव्यापिन्यपि सूर्योदयव्यापिनी ग्राह्या। "दैवे ह्यौदयिकी ग्रा-

ह्या" इति वचनात् । "चतुर्दश्या च पूर्णिमा" इति युग्मवाक्याच्च । एवं सकलशिष्टाचारः । केचित्तु मध्याह्नव्यापिनी ग्राह्येत्याहुः । भविष्योत्तरवचनगतं च लिङ्गं प्रमाणमुपन्यस्यन्ति ।

यथा-

मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे ।
ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक्पृथक् ॥ इति ।

तन्न । "मध्याह्ने पूजयेन्नृप" इति विनायकव्रतवत् अत्र विधायकाश्रवणात् । लिङ्गस्य च अर्थवादगतत्वात्, तदुपोद्बलकप्रमाणान्तरादर्शनात्, "दैवे ह्यौदयिकी ग्राह्या" इति प्रत्यक्षवचनाविरोधात् औदयिकी ग्राह्या न मध्याह्नगतेति सङ्क्षेपः । शिष्टा अपि औदयिक्यामेव व्रतमाचरन्ति । कृष्णचतुर्दशी तु पूर्वविद्धा ग्राह्या ।

आपस्तम्बः-

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥ इति ।

यत्तु नारदीये-

अष्टम्येकादशी षष्ठी कृष्णपक्षे चतुर्दशी ।
अमावास्या तृतीया च कर्त्तव्या परसंयुताः ॥ इति ।

तथा ब्रह्मवैवर्त्ते,

चतुर्दशी दर्शयुक्ता पौर्णमास्या युता विभो ! ।

इति, तदुपवासविषयम् ।

एकादश्यष्टमी षष्ठी उभे पक्षे चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

इति पद्मपुराणीयविशेषवचनैकवाक्यत्वात् पूर्वोदाहृतवचनाविरोधा । उभे पक्षे=उभयपक्षगतेत्यर्थः । शिवव्रते तु पक्षद्वयगते चतुर्दश्यौ त्रयोदशीयुते अपराह्णव्यापिन्यौ ग्राह्ये । तथा च-

स्कन्दपुराणे,

चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो ! ।
मम भक्तैर्महाबाहो ! भवेद्या चापराह्णिकी ॥
दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचन । इति ।

मम भक्तैरितीश्वरवचनात् लिङ्गात् तद्व्रतविषयता ज्ञायते ।

रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखी तिथिः ।

इति वचनाच्च । यदपि-

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।

पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥
उपवासादिकार्येषु ह्येष धर्म्मः सनातनः । इति,

तदपि रुद्रव्रतविषयम् पूर्वोदितवचनैकवाक्यतया । तदितरव्रतेषु "उभे पक्षे चतुर्दशी" इति प्रागुदाहृतपद्मपुराणात् तादृशवृद्धवाशिष्ठ-वचनाच्च उत्तरविद्धा ग्राह्येति ।

इति चतुर्द्दशीसामान्यनिर्णयः ।

अथ नृसिंहचतुर्द्दशीनिर्णयः ।

सा च प्रदोषव्यापिनी ग्राह्या । तदुक्तं हेमाद्रौ नृसिंहपुराणे—

वैशाखे शुक्लपक्षे तु चतुर्दश्यां निशामुखे ॥
मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् ।
वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारणम् ॥

दिनद्वये तद्व्याप्तौ अंशतः समव्याप्तौ वा परैव । विषमव्याप्तौ त्वधिकव्याप्तिमती । दिनद्वयेऽव्याप्तौ परा । परदिने गौणव्याप्तेः सत्वात् पूर्वदिने च तदभावात् । यत्तु—

ततो मध्याह्नवेलायां नद्यादौ विमले जले ।

इत्युपक्रम्य—

परिधाय ततो वासो व्रतकर्म्म समारभेत् ॥

इति तत्रोक्तम् । तत् सङ्कल्परूपव्रतोपक्रमविषयं न तु प्रधानस्य मध्याह्नकालत्वज्ञापकम् । पूर्वोदाहृतवचनविरोधात् । इयं च योगविशेष-णातिप्रशस्ता ।

स्वातीनक्षत्रयोगे च शनिवारे च मद्व्रतम् ।
सिद्धियोगस्य संयोगे वणिजे करणे तथा ॥
पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः ।
एभिर्योगैर्विनापि स्यात् मद्दिनं पापनाशनम् ॥

इति तत्रैवोक्तेः । इदं च नृसिंहोपासकानामेव नित्यम् ।

सर्वेषामेव वर्णानामधिकारोऽस्ति मद्व्रते ।
मद्भक्तैस्तु विशेषेण कर्त्तव्यं मत्परायणैः ॥

इति तत्रैवोक्तेः ।

इति नृसिंहजयन्तीनिर्णयः ।

अथात्रैव प्रसङ्गादन्या अपि जयन्त्योऽभिधीयन्ते । पुराणसमुच्चये-

मत्स्योऽभूद्‌हुतभुग्दिने मधुसिते कूर्म्मो विधौ माधवे
वाराहो गिरिजासुते नभसि यद्‌भूते सिते माधवे ॥

सिंहो भाद्रपदे सिते हरितिथौ श्रीवामनो माधवे
रामो गौरितिथावतः परमभूद्रामो नवम्यां मधोः॥
कृष्णोऽष्टम्यां नभसि सितपरे चाश्विने यद्दशम्यां
बुद्धः कल्की नभसि समभूच्छुक्लषष्ठ्यां क्रमेण ॥
अह्नो मध्ये वामनो रामरामौ
मत्स्यः क्रोडश्चापराह्णे विभागे।
कूर्म्मः सिंहो बौद्धकल्की च सायं
कृष्णो रात्रौ कालसाम्ये च पूर्वं ॥ इति।

इति जयन्तीनिर्णयः

ज्येष्ठशुक्लचतुर्दश्यां सर्वस्मिन् दिने पञ्चाग्निसाधनं कृत्वा प्रदोषे हेमधेनुर्देया।

ज्येष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम्।
यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम्॥

इति मात्स्योक्तेः। कार्त्तिककृष्णचतुर्दशी दीपावली।

कार्त्तिके कृष्णपक्षे तु चतुर्दश्यां दिनोदये।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः॥

इति भविष्योक्तेः। कार्त्तिकोऽत्र पूर्णिमान्तः। अत्र दिनोदय इति श्रवणात् प्रातःकालव्याप्तिरिति गौडाः। दाक्षिणात्यास्तु विधूदय इति पाठमाहुः। तन्मते चन्द्रोदयव्यापिनी ग्राह्या। दिनद्वये तद्व्याप्तौ तदव्याप्तौ वा पूर्वैव।

पूर्वविद्धचतुर्दश्यां कार्त्तिकस्य सितेतरे।
प्रत्यूषसमये स्नानं कुर्यात्तत्र प्रयत्नतः॥

इति पृथ्वीचन्द्रोदयोदाहृतवचनात्। अस्यामेव च रात्रौ दीपदानं कार्यम्

ततः प्रदोषसमये दीपान् दद्यान् मनोहरान्।

इति वचनात्। कार्त्तिकशुक्लचतुर्दश्यां पाषाणचतुर्दशीव्रतम्।

कार्त्तिके शुक्लपक्षे तु या पाषाणचतुर्दशी।
तस्यामाराधयेद्गौरीं नक्तं पाषाणभक्षकः॥

इति देवीपुराणोक्तेः। इयमेव वैकुण्ठचतुर्दशी। सा रात्रिव्यापिनी ग्राह्या।

कार्त्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप!।
सोपवासस्तु सम्पूज्य हरिं रात्रौ जितेन्द्रियः॥

इति भविष्योक्तेः। अस्या एव विश्वेश्वरप्रतिष्ठादिनत्वात् तत्प्रयुक्तपूजादावरुणोदयव्यापिनी ग्राह्या।

वर्षे च हेमलम्बाख्ये मासे श्रीमति कार्त्तिके।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति॥
महादेवतिथौ ब्राह्मे मुहूर्त्ते मणिकर्णिके।
स्नात्वा विश्वेरी देवी विश्वेश्वरमपूजयत्॥

इति सनत्कुमारसंहितोक्तेः। माघशुक्लचतुर्दशी आरटन्त्याख्या। सा अरुणोदयविद्धा ग्राह्या।

माघशुक्लचतुर्दश्यां विष्णोर्देहान्मरीचयः।
निश्चेरुस्तिलकाकाराः शतशोऽथ सहस्रशः॥
अनर्काभ्युदिते काले सत्सु तारांशुकेष्वपि।
राजा च तत्र सम्पूज्यो यमः प्रलयभास्करः।

इति ब्रह्मपुराणात्।

अथ शिवरात्रिनिर्णयः।

तत्स्वरूपं शिवरहस्ये—

तत्प्रभृत्यथ देवर्षे! माघकृष्णचतुर्दशी।
शिवरात्रिः समाख्याता प्रियेयं त्रिपुरद्विषः॥ इति।

अत्र च रात्रिशब्दस्तिथिलक्षकः शिवशब्दश्च शिवव्रतलक्षकः प्रकरणात्। अतश्चायं शिवरात्रिशब्दो शिवव्रतविशेषयोग्यतिथिपरः।

स्कन्दपुराणे तु—

माघफाल्गुनयोर्मध्ये असिता या चतुर्दशी।
शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमा॥ इति।

यत्तु भविष्यपुराणे—

चतुर्दश्यां तु कृष्णायां फाल्गुने शिवपूजनम्।
तामुपोष्य प्रयत्नेन विषयान् परिवर्जयेत्॥ इति।

तत् पौर्णमासान्तमासाभिप्रायं पूर्वोदाहृतवचनैकवाक्यत्वात्। तदेतत् शिवरात्रिव्रतमुपवासपूजाजागरणात्मकं ज्ञेयम्।

तथा च नागरखण्डे—

उपवासप्रभावेण बलादपि च जागरात्।
शिवरात्रेस्तथा तस्यां लिङ्गस्यापि प्रपूजया॥
अक्षयान् लभते भोगान् शिवसायुज्यमाप्नुयात्।

तथा ब्रह्मखण्डे—

स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः।
अजानन्नपि निष्पापो निषादो गणतां गतः॥ इति।

ब्रह्मपुराणे—

माघे कृष्णचतुर्दश्यां कर्त्तव्यं व्रतमुत्तमम् ।
उपोषितो वरारोहे ! चतुर्दश्यां वरानने ! ।

इत्याद्यभिधाय प्रतिप्रहरं पूजाजागरणाद्युक्तम् ॥

तथा स्कान्दे—

कृष्णपक्षे चतुर्दश्यां न कश्चिन्मृगमाप्तवान् ।
अद्यापि प्राणयात्रार्थं क्षुधासम्पीडितोऽवसत् ॥

इत्याद्युक्त्वा—

धनुष्कोट्या हतान्येव बिल्वपत्राणि मानद ! ।
पतितानि महाराज ! शम्भोः शिरसि भूतले ॥
तत्रैव तस्थौ राजेन्द्र ! सर्वरात्रमतन्द्रितः ।
रात्रिशेषं स्थितो व्याधः स्तब्धदृष्टिरनामिषः ॥
प्रभाते विमले जाते दृष्ट्वा तत्रैव शङ्करम् ।
बिल्वपत्रैर्नरश्रेष्ठ ! कन्दमूलैश्च पारितः ॥ इति ।
यत्तु क्वचित् एकस्य द्वयोर्वा श्रवणम् ।

यथा,

अथवा शिवरात्रिं तु पूजाजागरणैर्नयेत् । इति ।

तथापि अथवेत्यनुकल्पोपक्रमणाशक्तविषयतयोपपाद्यम् । एवमन्यत्रापि-

अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत् ।
सर्वान् कामानवाप्नोति शिवेन सह मोदते ॥

तथान्यत्र—

कश्चित् पुण्यविशेषेण जलहीनोऽपि यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥

इत्यादीनि तानि अशक्तविषयाणि । तदेतत् शिवरात्रिव्रतं जन्माष्टमी-वत् संयोगपृथक्त्वन्यायेन नित्यं काम्यं च तत्र नित्यत्वं तावत् स्कन्दपुराणे—

परात्परतरं नास्ति शिवरात्रिः परात्परम् ।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेण भ्रमते नात्र संशयः ।

इत्यकरणे प्रत्यवायश्रवणात् ।

वर्षे वर्षे महादेवि ! नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥

इति वीप्साश्रुतेः,

अर्णवो यदि वा शुष्येत् क्षीयेत हिमवानपि ।
मेरुमन्दरलङ्काश्च श्रीशैलो विन्ध्य एव च ॥

चलन्त्येते कदाचिद्वै निश्चलं हि शिवव्रतम् ।

इति वचनाच्च । निश्चलं नित्यकर्त्तव्यमित्यर्थः । फलश्रवणात्काम्यतापि स्कन्दपुराण एव—

शिवं च पूजयित्वा यो जागर्त्ति च चतुर्दशीम् ।
मातुः पयोधररसं न पिबेत्स कदाचन ॥
यदीच्छेदक्षयान् भोगान् दिवि देव ! मनोरथान् ।
आगमोक्तविधिं कृत्वा प्राप्नोति परमं पदम् ।
मम भक्तस्तु देवेशि ! शिवरात्रिमुपोषकः ॥
गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् ।
सर्वान् भुक्त्वा ततो भोगान् मृतो भूपोऽभिजायते ॥

काम्यव्रते ईशानसंहितायां विशेषः ।

एवमेतद्व्रतं कुर्यात् प्रतिसंवत्सरं व्रती ।
द्वादशाब्दिकमेव स्याच्चतुर्विंशाब्दिकं तु वा ॥
सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः । इति ।

सर्वाधिकारिकत्वं चास्य तत्रैवोक्तम्—

शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ।
आचाण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ॥ इति ।

अधिकारिनियमाः स्कन्दपुराणे—

माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी ।
सा च पुण्या तिथिर्ज्ञेया सर्वपातकनाशिनी ॥
अहिंसा सत्यमक्रोधो ब्रह्मचर्य्यं क्षमा दया ।
शान्तात्मा क्रोधहीनश्च तपस्वी ह्यनसूयकः ॥
तस्मै देयमिदं देवि ! गुरुपादानुगो यदि ।
अन्यथा यो ददातीह स दाता नरकं व्रजेत् ॥ इति ।

सा चेयं शिवरात्रिरर्द्धरात्रव्यापिनी त्रयोदशीयुता प्रशस्ता ।

त्रयोदशी यदा देवि ! दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्द्दशी ॥

इति शिवरहस्योक्तेः । अत एवात्र वेधोऽपि न दिवावेध एव किन्तु जन्माष्टमीवद्रात्रिवेधोऽपि भवत्येव । तथा च स्कन्दपुराणे—

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तस्यां चतुर्द्दश्यां सत्यां तत्पूजनं भवेत् ॥ इति ।

भूतानि शक्तयो योगिन्योऽपि शूलभृच्छङ्करश्च यतो रात्रौ भ्रमन्ति

अतः सत्यां तस्यां पूजनं भवेदिति हेमाद्रिः । यदा दिनद्वये निशीथव्यापिनी तदा पूर्वैव ग्राह्या । तथाच स्कन्दपुराणे—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

तत्रैव—

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ॥ इति ।

तत्रैव—

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी तु या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम ॥
जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते ।
माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी ॥
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः । इति ।

तथा,

आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी ।
तद्रात्रिः शिवरात्रिः स्यात् सा भवेदुत्तमोत्तमा ॥ इति ।

वायुपुराणे-

त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा च या तत्र शिवरात्रिव्रतं चरेत् ॥ इति ।

माधवोदाहृतस्मृत्यन्तरे-

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥ इति ।

अत्र रात्रौ जागरणं यस्मादिति हेतुवशात् प्रदोषशब्दो रात्रिपरोऽवगन्तव्यः ।

नारदीयसंहितायाम्—

अर्द्धरात्रयुता यत्र माघकृष्णा चतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥ इति ।

माधवतिथितत्त्वकारौ तु ईदृशविषये बहुकालव्यापित्वात् परैवेत्याहतुः ।
तदेतत्—

अर्धरात्रात्परस्ताच्च जयायोगो यदा भवेत् ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

इति पद्मपुराणादिवचनानां निर्विषयत्वापत्तेरयुक्तम् । यदा तु निशीथादूर्ध्वगा त्रयोदशी परेऽहनि च निशीथाव्यापिन्यपि चतुर्दशी भवति तदा परैव ग्राह्या । तथाच हेमाद्रिमाधवोदाहृतपुराणवचनम्—

माघासिते भूतदिनं हि राजन्नुपैति योगं यदि पञ्चदश्या ।
जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ इति ।

जयाप्रयुक्तां जयया त्रयोदश्या प्रकर्षेण निशीथादूर्ध्वं युक्तां न कुर्यात् नोपवसेत् किन्तु सकलदिनभूयोरात्रिलाभात् परामेवेत्यर्थः। तथाच यत्

शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् ।

इतिवचनं, यच्च कामिकवचनम्—

निशाद्वयचतुर्दश्यां पूर्वा त्याज्या परा शुभा। इति,

तदेतादृशविषयमेव ज्ञेयम्। अन्यथा पूर्वापादकबहुवचनविरोधः स्यात्। पूर्वस्या एव निशीथव्याप्तौ उत्तराया एव वा निशीथव्याप्तौ तत्कालव्यापिनी ग्राह्येत्युक्तम्—

नारदीयेशानसंहितयोः,

माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ।
अर्द्धरात्रियुता यत्र माघकृष्णचतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥

तत्रेत्यत्र कुर्वन् इत्यध्याहारः ।

पूर्वेद्युर्वा परेद्युर्वा महानिशि चतुर्दशी ।
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्यात् व्रतं नरः ॥ इति ।

महानिशास्वरूपं तु देवलेनोक्तम्—

महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः । इति ।

यदपि स्कन्दपुराणे—

आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा ।
गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् ॥

इति काम्यं प्रतिमासं शिवरात्रिव्रतं तत्रापि पूजोपवासजागरण-विधानात् तस्य च सकलरात्रिसाध्यत्वात् बहुरात्रिव्यापिन्यामनुष्ठानम्। उभयत्र रात्रिव्याप्तिसाम्ये तु—

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः ।
अन्यथा व्रतकल्पेषु यथोद्दिष्टामुपावसेत् ॥

इति पूर्वोदाहृतवचनानुगुण्याच्च पूर्वैव ग्राह्या। अस्याश्च महाशिवरात्रेः रविभौमवारान्यतरयोगे प्रशस्ततरत्वं शिवयोगयोगे प्रशस्ततमत्वं च स्कन्दपुराणे—

माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमो वाथ भवेद्देव ! कर्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगे च तद्भवेदुत्तमोत्तमम् । इति ।

तथा त्रिस्पृशातिप्रशस्ता पुराणान्तरे--

त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी ।
अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत् ॥ इति ।

शिवरात्रिपूजाप्रकारश्च रुद्रव्रतेषूक्त इति न लिख्यते । अथैतत्पारणं तु स्कन्दपुराण एव द्विधोक्तम्--

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इतिवचनात् परदिने यदि दिवा तिथ्यन्तस्तदा तत्रैव । नो चेत् दिवैव । तथा च स्कन्दपुराणे--

उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाथवा नवा ॥
ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथा ह्यहम् ।
सिक्थे सिक्थे फलं तस्य वक्तुं शक्तो न पार्वति ! ॥
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्थितानि भवन्तीह भूतायां पारणे कृते ॥

इतिवचनात् ।

सा त्वस्तमयपर्यन्तव्यापिनी चेत्परेऽहनि ।
दिवैव पारणं कुर्यात् पारणान्नैव दोषभाक् ॥

इति शिवरात्रिप्रकरणपठितकालादर्शमदनरत्नमाधवादिलिखितस्मृतिवचनात् ।

अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा ।
तामसे पारणं कुर्वन् तामसीं गतिमाप्नुयात् ।

इत्यादिनिन्दावचनाच्च । माधवाचार्यास्तु यामत्रयोर्ध्वगामिन्यां प्रातरेव पारणमाहुः ।

इति शिवरात्रिनिर्णयः ।

अथ पौर्णमासीनिर्णयः ।

सा च सावित्रीव्रतातिरिक्ते कार्ये परैव ।

भूतविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ ! सावित्रीव्रतमुत्तमम् ।

इतिब्रह्मवैवर्तोक्तेः । एवं यत् "चतुर्दश्या च पूर्णिमा" इतियुग्मवाक्यं

तन्न सावित्रीव्रतविषयम्। यत्तु "प्रतिपद्यप्यमावास्या" इत्यमायुग्म-वाक्यं तत् सावित्रीव्रतातिरिक्तविषयं द्रष्टव्यम्। अत्र च न पूर्वविद्धा-निषेधस्तस्यास्त्रिमुहूर्त्तसत्त्वे किं त्वष्टादशनाडीमितचतुर्दशीसत्त्वे।

भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम्।

इतिविशेषवचनात्। माधवस्तु इदं वचनं यत्र भूतविद्धा कर्त्तव्या यथा सावित्रीव्रते तत्राष्टादशनाडीमिता न ग्राह्येत्येवंपरमित्याह। तत्तु निरस्तं प्राक्। ज्येष्ठपञ्चदश्योर्वटसावित्रीव्रतम्। तत्र पूर्वविद्धा ग्राह्या।

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः॥

इति निगमोक्तेः। सावित्री=तद्व्रतसम्बन्धिनी पौर्णमासी। वटपैतृकी=तत्सम्बन्धिन्येवामावास्या।

ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम्।
चीर्णं पुरा महाभक्त्या कथितं ते मया नृप!॥

इति सावित्रीव्रतं प्रक्रम्य स्कान्दोक्तेः।

अमायां च तथा ज्येष्ठे वटमूले तथा सती।
त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत्॥

इति भविष्योक्तेश्च। हेमाद्रौ तु भाद्रपदपूर्णिमायामपीदमुक्तम्। गौडास्तु—

मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत्।
ज्येष्ठकृष्णचतुर्दश्यां सावित्रीमर्चयन्ति याः॥
वटमूले सोपवासा न ता वैधव्यमाप्नुयुः।

इति पराशरवाक्याच्चतुर्दश्यामित्याहुः।

श्रावणी पौर्णमासी प्रकृत्याम्नाते रक्षाबन्धने तु अपराह्णव्यापिनी ग्राह्या।

ततोऽपराह्णसमये रक्षापोटलिकां शुभाम्।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः॥

इतिभविष्योक्तेः। अत्र च तत इति श्रवणात्पूर्वानुष्ठितोपाकर्माङ्गत्वमेतस्य। अतश्च यथा तत्र ग्रहसङ्क्रात्यादिवर्जनमेवमत्रापीति केचित्। अन्ये तु अङ्गत्वे प्रमाणाभावात् तत इत्यस्य चाखण्डपर्वाणि अर्थसिद्धत्वेनाविधेयत्वाच्च ग्रहसङ्क्रान्त्यादिवर्जनमित्याहुः। इदं च भद्रायां न कार्यम्।

भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा।

इति सङ्ग्रहोक्तेः। अस्यामेव हयग्रीवोत्पत्तिः।

श्रावण्यां श्रवणे जातः पूर्वं हयशिरा हरिः।

इति वचनात्। अस्यामेव श्रवणाकर्म्मोक्तम्। तत्रास्तमयव्यापिनी

ग्राह्या । "श्रावण्यां पौर्णमास्यां श्रवणाकर्म" इति तत्प्रकृत्य "अस्तमिते स्थालीपाकं श्रपयित्वा' इत्याश्वलायनसूत्रात् । याज्ञिकास्तु एतस्य विकृतित्वाच्छेषपर्वणि अनुष्ठानमाहुः । अस्यामेवोपाकर्म्म । तत्र—

याज्ञवल्क्यः,

अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

अधीयत इत्यध्यायो वेदः । उपाकर्मेति वेदसंस्कारकर्म्मणो नामधेयम् । श्रावण्यां श्रावणपौर्णमास्याम् । यद्यपि "नक्षत्रेण युक्तः काल" ( ४।३।२ ) इत्यतः सूत्रात् या काचिच्छ्रवणयुक्ता तिथिर्लभ्यते तथापि श्रावणपौर्णमास्येवात्र विवक्षिता । पारस्करादिवाक्येषु विशिष्योपादानात् । तथा च पारस्करः,

अथातोऽध्यायोपाकर्म ओषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां श्रावणस्य पञ्चमीं हस्तेन वेति ।

श्रवणेनेति श्रवणस्य पृथगुपादानाच्च । एवम् आषाढ्यां प्रौष्ठपद्यामित्यादिष्वपि बोध्यम् । हस्तेनेति । हस्तयुक्ते कस्मिंश्चिद्दिवसे । केचित्तु हस्तेनेत्यतो नक्षत्ररूपकालज्ञानेऽपि तिथेराकाङ्क्षितत्वात्तत्र यावदनिर्णीतं किञ्चिद्दिनमित्युपस्थितं भवति तावत्सन्निधानात् पञ्चम्येवोपस्थिता त्वेति । तेन हस्तयुक्तपञ्चम्यामित्याहुः । ओषधिभावे इति श्रावणस्य त्विति च सर्वत्र सम्बध्यते । कालान्तरमप्याह—

बौधायनः,

श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य छन्दांस्यधीयीत ।

मनुरपि—

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥ इति ।
अपिशब्दाद्भाद्रपदश्रवणहस्तपञ्चमीनामुपादानम् ।

कात्यायनोऽपि—

उपाकृत्योदगयने ततोऽधीयीत धर्म्मवित् । इति ।

गोभिलोऽपि–प्रौष्ठपदीं हस्तेनेति ।

प्रौष्ठपदीमित्यतः प्राप्येतिशेषः । तेन भाद्रपदमासि हस्तयुक्ते कस्मिंश्चिद्दिन इत्यर्थः ।

आश्वलायनस्तु—अथातोऽध्यायोपाकरणमोषधीनां प्रादुर्भावे श्रावणस्य पञ्चम्यां हस्तेन वा ।

इत्युपाकर्म प्रकृत्य—

सप्तार्षिकमित्याचक्षत इति ।

अनेन वर्षासम्बन्धिनोः श्रावणभाद्रपदयोर्मध्ये श्रावणस्य पूर्वं विहितत्वात् संज्ञाकरणासिद्धं भाद्रपदेऽनुष्ठानं स्तवयति। भाद्रपदेऽपि श्रवणहस्तपञ्चमीष्वेव यत आश्वलायनसूत्रे मासनक्षत्रतिथीनभिधाय मासान्तराभिधाने पूर्वोक्तमासस्यैव बाधो युज्यते अवान्तरसाजात्येन तस्य शीघ्रोपस्थितिकत्वात् न नक्षत्रादीनाम्। आकाङ्क्षितत्वाच्च तेषामेव ग्रहणम्। एते च कालाः स्वस्वगृह्यानुसारा व्यवस्थिताः। येषां च शाखायामनेके काला उक्तास्तेषामाकाङ्क्षावशात् पाठक्रमेणोपादानम्। पाठक्रमस्य प्रयोजनान्तराभावात्। तथा च बह्वृचैः श्रावणमासे श्रवणयुक्ते कस्मिंश्चिद्दिने। (१)तत्र च सङ्क्रान्तिग्रहणसूतकादौ हस्तयुक्तपञ्चम्यां तदसम्भवे केवलपञ्चम्यां केवलहस्ते वा तदसम्भवे औषधिप्रादुर्भावाभावे च ईदृशनक्षत्रादियुक्ते भाद्रपदेऽपि कर्त्तव्यम्। तथा च बह्वृचगृह्यकारिकायाम्—

अवृष्ट्यौषधयस्तस्मिन् मासे तु न भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते॥ इति।

एवं श्रावणे ग्रहणादिसत्त्वे भाद्रेण प्रथमारम्भः। तस्य तदभावे विहितत्वेन गौणत्वात्। याजुषैस्तु श्रावणपौर्णमास्यादिक्रमेण। सामगानां हस्तादिक्रमः। सूत्रे क्वचिद्विपर्यासेनोपादानेऽपि—

उपाकर्म प्रकुर्वन्ति क्रमात् सामर्ग्यजुर्विदः।
ग्रहसङ्क्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु॥
इतिवचनादेष एव क्रम उपादेयः।

सङ्क्रान्तौ ग्रहणे आशौचे च दोषो मदनरत्नादिबहुनिबन्धोदाहृतस्मृतौ—

सङ्क्रान्तौ ग्रहणे चैव सूतके मृतके तथा।
गणश्राद्धं न कुर्वीत नारदस्य वचो यथा॥
प्रथमे दोषसंयुक्ते पर्वणि स्यादुपाक्रिया।
दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः॥ इति।

अत्र विशेषो गार्ग्ये—

अर्धरात्रादधस्ताच्चेत् सङ्क्रान्तिग्रहणं तथा।
उपाकर्म प्रकुर्वीत परतश्चेन्न दोषकृत्॥

तथा—

यद्यर्धरात्रादर्वाक् चेत् ग्रहः सङ्क्रम एव च।
नोपाकर्म तदा कुर्यात् श्रावण्यां श्रवणेऽपि वा॥

---

(१) तत्र च तस्मिन् दिने चेत्यर्थः।

यानि तु—

त्रयोदश्यादिकं वर्ज्यं दिनानां नवकं ध्रुवम् ।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥

तथा—

द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्डग्रहे तयोः प्रोक्त उभयत्र दिनत्रयम् ।

इत्यादीनि निषेधवचनानि तानि माङ्गल्यकर्मान्तरविषयाणि । तथाच स्मृतिः,

नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहभेदो न विद्यते ॥ इति ।

एवं च ग्रहणपूर्वोत्तरदिने श्रवणसत्त्वे तत्रोपाकर्म न त्याज्यम् । यदा च ग्रहणसङ्क्रान्तिदुष्टं पर्व तदा कालनियम उक्तः स्मृतिमहार्णवे—

सङ्क्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते ।
तन्मासे हस्तयुक्तायां पञ्चम्यां च तदिष्यते ॥

तथा—

सङ्क्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥ इति ।

वाजसनेयिभिरित्यनेन येषां पञ्चमी गृह्य उक्ता त उपलक्ष्यन्ते । 'सङ्क्रान्तिर्ग्रहणं वा पि' 'यदि पर्वणि'इत्यादिसामान्यवाक्यैकवाक्यतालाभात् । अन्यथा वाजसनेयिभिः पञ्चम्यामेवेति चेत्युभयविधाने वाक्यभेदः स्यात् । न च "सङ्क्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते" इत्यस्यानेनोपसंहारो युक्तो नतु लक्षणा लक्षणात उपसंहारस्य न्याय्यत्वात्, अन्यथा "पुरोडाशं चतुर्धा करोति"इत्येतत्समानार्थकत्वार्थमाग्नेयवाक्येऽपि लक्षणा स्यादिति वाच्यम् । प्रकृते हि उपसंहारे शुद्धपञ्चम्या अपि विधेयत्वेन वाक्यभेदापत्त्या लक्षणैव युक्ता तस्माद्येषां गृह्ये पञ्चमी उक्ता ते वाजसनेयिपदेनोपलक्ष्यन्त इति सिद्धम् । येषां तु गृह्ये पञ्चमी नोक्ता तैः पूर्वोदाहृतमनुवाक्यात्,

श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तम ! ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम् ॥

इति कूर्मपुराणाच्च प्रौष्ठपद्यामाषाढ्यां वा कार्यम् । बौधायनैस्तु आषाढ्यामेव । तेषां केवलाया एवाषाढ्या उक्तत्वात् । सामगैस्तु सिंहस्थे सूर्ये हस्तनक्षत्रे कार्यम् । प्रौष्ठपदीं हस्तेनेति पूर्वोदाहृतगोभिलात् । प्रौष्ठपदीमित्यत्र प्रोष्ठपदः सौर एव सिंहार्करूपः ।

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम् ॥
शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकम् ।

इति गार्ग्यवचनात् । इदं च छन्दोगानामेव । यदपि

उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव हि । इति,

तदपि छन्दोगविषयमेव । अन्येषां तु दैवकर्मत्वात् पूर्वाह्ण एव ।

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ।

इति प्रचेतोवचनेन पूर्वाह्णस्यापि विहितत्वात् । युज्यते चास्य गार्ग्यवाक्यपर्यालोचनया च्छन्दोगातिरिक्तविषयत्वम् । प्रयोगपारिजाते तु सर्वैरपराह्ण एवेत्युक्तम् । अत्र पर्वणः सखण्डत्वे औदयिकस्यैव ग्रहणम् । तथा च—

कालिकापुराणे,

चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान् स्वीकुर्वतः पद्मयोनेस्तौ जह्रतुः श्रुतीः ॥
हत्वा तावसुरौ देवः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
अभूल्लब्धश्रुतिर्ब्रह्मा पर्वण्यौदयिके पुनः ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ॥
आसुरं वर्जयेत् कालं वेदाहरणशङ्कया ।

भविष्योत्तरेऽपि—

सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
ततो देवान् पितॄंश्चैव तर्पयेत् परमाम्भसा ।
उपाकर्म द्विवैवोक्तमृषीणां चैव तर्पणम् ॥

श्रावणस्यान्त इति गौणचान्द्राभिप्रायेण । हस्तश्रवणे अपि सखण्डे औदयिके एव ग्राह्ये । तथा च—

गृह्यपरिशिष्टे,

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीत ऋग्यजुःसामपाठकः ॥

त्वाष्ट्रं चित्रा । न च श्रावणमिति नैतस्य कर्म्मणो नामधेयं किन्तु श्रवणाकर्मण इति वाच्यम् । व्यासेनैव तस्यापि संज्ञाकरणात् । तथा च—

व्यासः,

श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥

धनिष्ठासंयुतं कुर्यात् श्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरणसंज्ञितम् ॥ इति ।

इदं च कर्मकालव्याप्त्यसम्भवे औदयिकशास्त्रम् । अत्र च पर्वौदयिकत्वविधिः सर्वयजुःशाखिविषयः । पूर्वोक्तैर्धनिष्ठाप्रतिपद्युक्तामित्यादिवचनैर्यजुःशाखिमात्रं प्रति औदयिकपर्वण उक्तत्वात् । न च—

पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसङ्क्रान्तिवर्जिते ॥

इत्यनेन बह्वृचपरिशिष्टवाक्येन तैत्तिरीयाणामेवोक्तत्वात्तैत्तिरीयमात्रपरत्वमिति वाच्यम । अत्र तैत्तिरीयग्रहणस्य उपलक्षणार्थत्वात् । कथमन्यथाऽतुल्यकक्षतया बह्वृचानामुपादानं क्रियेत तुल्यकक्षाणामेव हि समभिव्याहारो युज्यते । न हि सम्भवति ब्राह्मणैरिदं कर्त्तव्यं क्षत्रियैरिदं कठैरिदमिति युज्यते च वैश्यैरिदं कर्त्तव्यमिति । एवं च बह्वृचैः श्रवण इति समभिव्याहारो युज्यते याजुषैः पर्वणीति । किं च बह्वृचगृह्यपरिशिष्टकारो बह्वृचानामेव कर्मसम्बन्धिधर्मविधानार्थं प्रवृत्तो न तु तैत्तिरीयाणाम् । एवं च यत् तत्र तैत्तिरीयसम्बन्धितत्कालादिकं श्रूयते तदंशेऽनुवाद एव । अनुवादश्च यथाप्राप्तस्यैव प्राप्तिश्च प्रकृते पर्वौदयिकत्वविधायककालिकापुराणादिवाक्यात् । कालिकापुराणमपि स्वस्वगृह्यप्राप्तपर्वण्येवौदयिकत्वं विदधाति । पर्वप्राप्तिश्चाविशेषेण सर्वयाजुषाणामेवेति । एवं च तेषामेवानुवादो युज्यते । यदपि—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति ।

तदपि न तैत्तिरीयातिरिक्तानां पूर्वविद्धाविधायकं किन्तु उपाकर्मातिरिक्तविषयम् । अथवा छन्दोगकर्त्तृकोपाकर्मविषयम् । अपि चात्र पर्वगतविशेषस्यैवौदयिकस्य विधानं युक्तम् अपेक्षितत्वात् समभिव्याहाराच्च । न च यदौदयिके पर्वण्युपाकुर्युः तैत्तरीयका एवेति वचनव्यक्तिरस्त्विति वाच्यम् । एवं हि विशिष्टानुवादे वाक्यभेदः स्यात् । न च यदौदयिके तैत्तिरीयका इत्येव वचनव्यक्तिः पर्वौदयिकत्वं च सन्निधिलभ्यमिति वाच्यम् । उपाकर्मणः सन्निहितत्वेऽपि पर्वणः सन्निधिलभ्यत्वासम्भवात् । तथा सति सन्निधित एव श्रवणोपस्थित्या तत्राप्यौदयिकत्वलाभे उत्तरार्द्धं निरर्थकं स्यात् । न च तत्रापि पर्वौदयिकत्वग्रहणसङ्क्रान्तिराहित्वरूपविशेषणद्वयविधाने वाक्यभेदापत्तिरितिवाच्यम् । एकहायनीत्वपिङ्गाक्षित्वयोर्द्वयोरपि यौगिकत्वेन द्रव्यवचनयोर्विशिष्टद्रव्यविधिवत्त्रापि यौगिकाभ्यामन्यतः प्रसिद्धार्थाभ्यां

पदाभ्यां विशिष्टं पर्वैव विधीयते इति न किञ्चिदनुपपन्नम्। अन्ये तु तैत्तिरीयकर्त्तृकपर्वौदयिकत्वविशिष्टोपाकर्म्मविधिमवेच्छन्ति। न च विशिष्टविधौ गौरवापत्तेस्तैत्तिरीयकपदे लक्षणा। तथा सति "राजा राजसूयेन यजेत" इत्यादावपि त्रैवर्णिकलक्षणाप्रसङ्गादिति। गृह्योक्तस्य च पुनर्विधिः कर्त्तृभेदात्, अन्यथा एकविषयानेकस्मृत्युच्छेदापत्तेरिति वदन्ति। तन्न। स्मृतयो हि स्वातन्त्र्येणैव प्रवृत्ताः युक्तं यत् प्रति स्मृतिविधिरिति, परिशिष्टं पुनः शेषपूरणरूपं शेषिणमुपजीव्यैव प्रवृत्तमिति न तत्र तदननुवादेन विधायकत्वमिति। अत्र औदयिकमपि सङ्गवप्रापि ग्राह्यम्। तथा च—

गार्ग्यः—

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्॥

निगमेऽपि—

श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् षण्मुहूर्तकैः।
विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्॥ इति।
पर्वेति हस्तश्रवणयोरुपलक्षणम्।
उदये सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे।
कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात्॥

इति पृथ्वीचन्द्रोदयधृतवचनात्। एतच्चोपाकर्म मलमासे न कार्यम् तथा च—

कात्यायनः,

उत्कर्षः कालवृद्धौ स्यादुपाकरणकर्मणि। इति।

एवं च—

दशहारासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।
उपाकर्ममहाषष्ठ्योर्ह्येतदुक्तं वृषादितः॥

इति वाक्ये सौरमानविहितत्वरूपहेतूपन्यासपूर्वकमनुत्कर्षविधानाच्छन्दोगानां सौरमानेन विहितत्वात् तद्विषयमिदमृष्यश्रृङ्गवचनमिति। केचित्तु शुक्रमौढ्यादिवत् द्वितीयोपाकर्म्मविषयत्वमिति। तथा च-

स्मृतिसङ्ग्रहे,

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा।
तथाधिमाससंसर्पमलमासादिषु द्विजाः॥
प्रथमोपाकृतिर्न स्यात् कृता कर्मविनाशकृत्। इति

आदिपदात् वक्रातिचारसङ्ग्रहः। विस्तरस्तु मलमासनिरूपणे द्रष्टव्यः। अत्र विशेषो माधवीये—

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म न कर्त्तव्यं कर्तव्यं सिंहयुक्तके॥ इति।

ननु—

श्रावण्यां श्रावणीकर्म यथाविधि समाचरेत्।
उपाकर्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे॥

इत्यनेन निगमवचनेन कर्कटस्थे विधानात् कथं निषेध इति। सत्यम्। नायं निषेधः। किन्तु सिंहविधिविशेष एव "न गिरागिरेतिब्रूयात्" इतिवत्(१) ( अ० ९ पा० १ अधि० १८ )। एवं च सिंहकर्कटयोरुभयोरपि प्राप्तत्वादव्यवस्थायां देशभेदेन व्यवस्थामाह—

प्रयोगपारिजाते बृहस्पतिः,

नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके।
कर्कटे संस्थिते भानावुपाकुर्याच्च दक्षिणे॥ इति।

अस्यार्थः। सर्वत्रोपाकरणे प्राप्त दक्षिणदेशेऽपि उपाकरणं प्राप्तम् एवं सति तत्रानेन वाक्येन यद्दक्षिणे उपाकुर्यात् तत् कर्कटे यदुत्तरे तत् सिंहे। यत्तु—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विच्चरेद्बहिः(२)।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वच्छन्दसाम्॥
शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम्।

इत्यत्र सिंहे रवावित्येतस्योभयत्र सम्बन्धेन यत् सामगानां सिंहार्कविधानं तद्देशभेदप्रापककर्कसिंहव्यवस्थानिवृत्तिफलकतया नित्यवत् प्राप्त्यर्थमिति न किञ्चिदनुपपन्नम्। एतच्चोपाकर्म ब्रह्मचारिगृहस्थवानप्रस्थैः कार्यं नित्यत्वात्। नित्यत्वं च ब्रह्मयज्ञरूपनित्यकर्माङ्गमन्त्राप्या-

( १ ) ज्योतिष्टोमे श्रूयते "यज्ञायज्ञीयेन स्तुवीत" इति। तत्र यज्ञायज्ञीयमित्यनेन "यज्ञायज्ञा वो गिरागिरा च दक्षसे" इति यज्ञायज्ञापदघटितायामृचि समुत्पन्नं सामाभिधीयते। तत्र च गिराशब्दस्य पाठः। तत्र योनिगानमधीयानैः सामगैर्गकारेण सहितं 'गायीरा गिरा इति गीयते। "ऐरं कृत्वोद्गेयम्' इति ब्राह्मणवाक्येन तु गिराशब्दे गकारलोपपूर्वकमिराशब्देन गानं विधीयते। तथा च योनिगानब्राह्मणगानयोस्तुल्यबलत्वेन विशेषाभावाद्विकल्पेन प्रयोगे प्राप्ते "न गिरा गिरेति ब्रूयात्, यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत्" इति गकाररहितगाने बाधमुक्त्वा गकाररहितमिरापदं गेयत्वेन विधीयते। एवमत्रापि 'वेदोपाकरणे' 'श्रावण्यां' इति वचनयोः समानबलत्वेन सिंहे कर्कटे च विकल्पेनोपाकर्मणः प्राप्तौ 'नर्मदोत्तर' इति वचनेन देशभेदाद्व्यवस्थाप्यत इत्याशयः।

( २ ) पूर्वाह्णेऽविवरे बहिः इति पाठो निर्णयसिन्ध्वादौ। अविवरे ग्रहणादिदोषरहिते इति च व्याख्यातम्।

यकत्वात् । आध्यायकत्वं चोक्तम्—

कात्यायनेन,

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत् कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम् ॥

उपाकृत्याधीयीतेत्यतो नित्याध्ययनार्थत्वेनापि सर्वेषामवश्यकर्त्तव्यत्वम् । अध्ययनं च सर्वेषाम् । तत्र ब्रह्मचारिणां ब्रह्मचर्यस्य तदर्थत्वादेव सिद्धम् । गृहस्थानां तु ग्रहणाध्ययनमुक्तमाश्वलायनेन—

समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयीत्येके प्राजापत्यं तदिति ।

ब्रह्मचारिकल्पेन=येन नियमविशेषेण ब्रह्मचार्यधीयीत तेनैव युक्तः समावृत्तोऽप्यधीयीत । इतरे ब्रह्मचारिणस्तु यथान्यायं=स्वविध्युक्तप्रकारेण अधीयीरन् । तथा जायोपेयी=गृहस्थोऽपि ब्रह्मचारिकल्पोक्तनियमेन न तु भिक्षादिधर्मेणेत्यर्थः । धारणाध्ययनार्थत्वादपि सर्वान् प्रति नियतानुष्ठानमुक्तम्—

गोभिलेन,

उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ॥ इति ।

ब्रह्मचारिणो नैष्ठिकाः । उपकुर्वाणानामध्ययनार्थत्वादेव प्राप्तत्वात् । "अध्याप्येरन्वारब्ध" इत्यतोऽप्यध्यापकस्य गृहस्थस्यानुष्ठानमुक्तमिति।

इत्युपाकर्मकालः ।

अथोत्सर्जनम् ।

तत्र मनुः—

पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥ (अ० ४ श्लो० ९६)

पुष्ये=पौषे । बहिः ग्रामादिति शेषः । उत्सर्जनं कृष्णपक्षाध्ययनराहित्यम् । न तु सर्वथानध्ययनम् ।

यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत् पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ॥ ( ४।९७ )
अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु सम्पठेत् ॥ ( ४।९८ )

इति मनूक्तेः । प्रथमेऽहनीति पुष्य इत्यत्रापि सम्बध्यते । यदा श्रा·

वण्यामुपाकर्म तदा पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्णे, यदा प्रौष्ठपद्यां तदा माघ इति व्यवस्थितो विकल्पः ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ ( ४।९५ )

इति मनुनैव अर्द्धपञ्चममासाध्ययनस्य विहितत्वात् । अर्द्धपञ्चमान् इति अर्धः पञ्चमो येषु ते सार्द्धांश्चतुर इति यावत् । याज्ञवल्क्यस्तु कालान्तरेऽप्याह—

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ इति ।

पौषमासरोहिणी च शुक्लपक्षगतैव । मनुविहितशुक्लपक्षबाधे प्रमाणाभावात् । अष्टकायामित्यत्रापि पौषमासस्येति सम्बध्यते । तेन पौषकृष्णाष्टम्यामित्यर्थः ।

आपस्तम्बः—

तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् ।

तैष्यामिति रोहिण्यामित्यनेनापि सम्बध्यते पूर्वोक्तयाज्ञवल्क्यवाक्यात् ।

बौधायनः— श्रावण्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोत्सृजेत् । आषाढ्यामुपाकृत्य तैष्यां श्रावण्यामुपाकृत्य माघ्यामिति बोध्यम् । एतच्च "षण्मासानधीयीत" इति आश्वलायनोक्तमुररीकृत्य । उत्सर्जनं प्रकृत्य आश्वलायनः—

मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वापोऽभ्यवयन्तीति ।

अनेन यद्यपि माघकृष्णाष्टमी प्रतीयते । तथाप्यत्र सामीप्यसप्तमीविवक्षया माघ्येवोक्ता "अग्नीषोमीयेण चरन्त्युत्तरवेद्याम्" इति वदिति वृत्तिकृता व्याख्यातम् । अत एव बह्वृचगृह्यकारिकायां माघ्येवोक्ता ।

अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते । इति ।

एते च पक्षाः स्वस्वगृह्यानुसाराद्व्यवस्थिताः । सामगानां तूत्सर्जनकालमाह—

गार्ग्यः

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वच्छन्दसाम् ॥ इति ।

यदा तु सिंहस्थे सूर्ये हस्त एव प्रथमस्ततः पुष्यस्तदा कर्कटस्थे पुष्ये उत्सर्जनं कार्यमित्युक्तम्—

छन्दोगगृह्यपरिशिष्टे,

मासे प्रौष्ठपदे हस्तात् पुष्यः पूर्वो भवेद्यदा ।
तदा तु श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः ॥ इति ।

प्रौष्ठपदे यो हस्तस्तस्मात् पूर्वः पुष्यो यदि श्रावणगतो भवेत् तदा श्रावण एवोत्सर्गं कुर्यादित्यर्थः। प्रौष्ठपदश्रावणौ मीनादिसौरमासाभिप्रायेण कर्कसिंहयोरेवाभिधायकौ। तेषां सौरमानेनैवोपाकर्मविधानात्। अत्यन्ताध्ययनशीलानां तु कालान्तरमुक्तम्—

खादिरगृह्ये,

पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथ वा। इति।

एष च पक्षो "यत् स्वाध्यायमधीतेऽब्दम्" इतिमाधवोपदर्शितश्रुतेः श्रौतः। एतच्च दैवत्वात्पूर्वोदाहृतवचनेभ्यश्च सर्वैः पूर्वाह्ण एव कार्यम्। पर्वणः सखण्डत्वे सङ्गवव्याप्त्यैव ग्राह्यमित्युक्तमुपाकर्मकालनिरूपणे। अस्य वेदाध्ययनार्थं प्रत्यब्दकर्त्तव्यतामाह—

कात्यायनः,

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवत् द्विजैः।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत्॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम्॥ इति।

इत्युत्सर्जनकालनिर्णयः।

दर्शान्ताश्विनामावास्या तु अभ्यङ्गे प्रातःकालव्यापिनी ग्राह्या।

इषे भूते च दर्शे च कार्त्तिकप्रथमे दिने।
यदा स्वाती तदाभ्यङ्गस्नानं कुर्यादिनोदये॥

इति ब्राह्मोक्तेः। दीपदाने तु प्रभातव्यापिनी ग्राह्या।

एवं प्रभातसमये त्वमावास्यां नराधिप!।
कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः॥
दीपान् दत्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि।
स्वलङ्कृतेन भोक्तव्यं सितवस्त्रोपशोभिना॥

इतिभविष्योक्तेः। दिनद्वयसत्त्वे परा।

दण्डैकरजनीयोगे दर्शः स्यात्तु परेऽहनि।
तदा विहाय पूर्वेद्युः परेद्युः सुखरात्रिका।

इतिज्योतिर्वचनात्। अस्यामेवापररात्रावलक्ष्मीनिःसारणं कार्यम्।

एवङ्गते निशीथे तु जने निद्रार्द्धलोचने।
तावन्नगरनारीभिः शूर्पडिण्डिमवादनैः॥
निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात्।

इति भविष्योक्तेः। कार्त्तिकपौर्णमासी त्रिपुरदाहे सन्ध्याव्यापिनी ग्राह्या।

पौर्णमास्यां तु सन्ध्यायां कर्त्तव्यस्त्रिपुरोत्सवः।

इतिब्राह्मोक्तेः। फाल्गुनपौर्णमास्यां होलाका। तस्यां च प्रदोषव्यापिनी ग्राह्या।

निशागमे तु पूज्येत होलाका सर्वतोमुखी।

इतिवचनात्। इयं च भद्रायां न कर्त्तव्या "भद्रायां द्वे न कर्त्तव्ये" इतिपूर्वोदाहृतवचनात्। एवं च—

भद्रायां विहितं कार्यं होलायाश्च प्रपूजनम्।

इतिनिबन्धाभासवचनं हेयम्। तत्र दिनद्वये प्रदोषसत्त्वे परा पूर्वस्य भद्रायुक्तत्वात्। यदा तु पूर्वस्यामेव प्रदोषव्याप्तिर्भद्रायोगश्च भवति, सूर्योदयात् पूर्वं च यदि होलाकादीपनाय कियानपि भद्रारहितः कालोऽवशिष्यते। तदा प्रदोषातिक्रमेऽपि तत्रैव कार्यम्।

एका यामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत्।
होलां भद्रावसाने च निशीथान्तेऽपि दीपयेत्॥

इति भविष्योत्तरात्। यानि—

मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत्।
प्रदोषे ज्वालयेद्वह्निं सुखसौभाग्यदायकम्॥

इत्यादिवाक्यानि तानि निर्मूलानि। यदा तु पूर्वत्र भद्रारहितः कालो न लभ्यते परतोपि च न प्रदोषव्याप्तिः तदा पूर्वत्रैव भद्रापुच्छे कार्यम्।

पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः॥

इति लल्लवचनात्। इदं च यदोत्तरत्र सार्द्धयामात्रयात् पूर्वमेव पौर्णमासिसमाप्तिस्तदा ज्ञेयम्। यदा तु तन्मिता ततोऽधिका वा पौर्णमासी प्रतिपच्च द्वितीयदिने वृद्धिगामिनी तदा प्रतिपत्प्रदोषेऽपि सा कार्या।

सार्द्धयामत्रयं पूर्णा द्वितीये दिवसे यदा।
प्रतिपद् वर्द्धमाना तु तदा सा होलिका स्मृता॥

इतिभविष्योक्तेः। यानि तु—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिबलेर्दिनम्॥

इत्यादीनि पूर्वविद्धाविधायकानि तानि पूर्वदिने भद्राभावे ज्ञेयानि। यदा तु पूर्वदिने भद्रा द्वितीयदिने चन्द्रग्रहणं तदा पूर्वत्रैव भद्रापुच्छे होलाका कार्येति दिवोदासः। अन्ये तु ग्रहणकाल एव कार्या।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्म्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥
इति वचनेन स्नानोत्तरकर्तव्यत्वप्रतीतेरित्याहुः ।

इति होलाकानिर्णयः ।

अथ पर्वनिर्णयः ।

यद्यपि "पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेत" इतिवाक्याभ्यां साङ्गौ दर्शपूर्णमासौ पर्वणि विहितौ इति प्रतीयते तथापि "पूर्वमहर्देवता गृह्णन्त्युत्तरमहर्यजेत" "पक्षादयो यष्टव्याः पक्षान्ता उपवस्तव्या" इतिवाक्यान्तरैकवाक्यतया पर्वण्युपक्रममात्रं ताभ्यां विधीयते समाप्तिस्तु प्रतिपद्येव । अत्र देवताग्रहणमन्वाधानं देवतासङ्कल्पश्च । पक्षान्ताः=पौर्णमास्यः पक्षादयः=प्रतिपदः । व्यक्त्यभिप्रायं बहुवचनम् । उपवासः क्रत्वङ्गभूतयमनियमसङ्कल्पः। अथवा पौर्णमास्यमावास्याशब्दयोः सन्धिवाचित्वस्य वक्ष्यमाणत्वात् तस्य चातिसूक्ष्मत्वेनोपक्रमस्यापि तत्र कर्त्तुमशक्यत्वात्त्र लक्षणया पौर्णमास्यमावास्याशब्दाभ्यां पर्वप्रतिपद्रूपं सन्धिपार्श्वद्वयवर्त्ति तिथिद्वयं कृत्स्नप्रयोगार्थत्वेन विधीयते । एवं च "सन्धौ यजत" इत्यत्रापि सन्धिशब्देन तादृशतिथिद्वयमेव लक्ष्यते । तथा च सन्धिमभितो यजेतेत्यप्यनुगृह्यते । एतदेवाभिप्रेत्याह—

बौधायनः,

सूक्ष्मत्वात् सन्धिकालस्य सन्धेर्विषय उच्यते ।
सामीप्यं विषयं प्राहुः पूर्वेणाह्ना परेण वा ॥ इति ।

उभयथा पर्वण्यन्वाधानम् । तत्रापि न सम्पूर्णं पर्वान्वाधानकालः किन्तु आद्यं भागत्रयम् । यागकालस्तु पर्वचतुर्थांशः प्रतिपद आद्यमंशत्रयं च । तथाच—

लौगाक्षिः,

त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्म्मणि ॥ इति ।

औपवस्तस्यान्वाधानस्य । अन्त्यौ=पर्वप्रतिपदोरन्त्यौ भागौ । यागे प्रतिपदोऽन्त्यो भागो वर्ज्यः, व्रतकर्म्मणि अन्वाधाने पर्वणोऽन्त्यो भागो वर्ज्य इत्यर्थः । एतच्च द्व्यहसाध्यत्वे । सद्यस्कालत्वे तु पर्वचतुर्थेऽशेऽप्यन्वाधानमिति वक्ष्यते । तच्चान्वाधानं प्रातरेव । "यदहरुपवसथो भवति तदहः पूर्वाह्ण एव प्रातराहुतिं हुत्वा" इति गोभिलोक्तेः । एवं यागोऽपि प्रातरेव ।

पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः॥

इतिवचनात्। प्रातर्यजध्वमित्यादिश्रुतेश्च। प्रातःकालश्च पञ्चधाविभागेन।

लेखाप्रभृत्यथादित्ये घटिकास्त्रय एव तु।
प्रातःकाल इति प्रोक्तो भागश्चान्हः स पञ्चमः॥

इतिवचनात्। चतुरादिविभागेषु--

स एवाध्यर्द्धसंयुक्तः प्रातरित्यभिधीयते॥ इति।

आधुनिकानां तच्छब्दव्यवहारस्तु भाक्तोऽनेकार्थत्वस्यान्याय्यत्वात्। एवं यागान्वाधानकाले निरूपिते यदा तावत् पर्वप्रतिपदोः सम्पूर्णत्वं तदा न कश्चित् सन्देहः। यदा तु तयोः खण्डत्वं तदा प्रकारचतुष्टयम्। आवर्त्तनात् प्राक् आवर्त्तने वा तदूर्द्ध्वं वा रात्रौ वा। तत्राद्ये पक्षद्वये तद्दिने यागस्तत्पूर्वेद्युरन्वाधानम्।

पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते॥

इतिलौगाक्षिवचनात्। अत्र पूर्वाह्णमध्यान्हशब्दावावर्त्तनपूर्वभागावर्त्तनपरौ।

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः।
मध्याह्नस्तु तयोः सन्धिर्यदावर्त्तनमुच्यते॥

इति तत्प्रकरणपठितवचनात्। एवं चैतत्प्रकरणपठितोऽपराह्णशब्दोऽप्यावर्त्तनोत्तरभागवचनोऽस्माद्वचनादवगन्तव्यः। अन्त्यपक्षद्वये तु यद्यपि--

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते॥

इतिलौगाक्षिवाक्यात् सन्धिदिनेऽन्वाधाय प्रातर्याग इति अविशेषेण प्रतीयते तथापि अपराह्णसन्धौ तावत्परेद्युश्चन्द्रदर्शनाभावे सन्धिदिनेऽन्वाधानं प्रातर्यागः।

द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी।
अन्वाधानं चतुर्द्दश्यां परतः सोमदर्शनात्॥

इतिबौधायनवचनेन चन्द्रदर्शने सन्धिदिने यागस्य विहितत्वात्। अत्र चतुर्द्दश्यामन्वाधानं चतुर्दशीदिने किञ्चिदमावास्याप्रवेश एव बोध्यम्।

यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते॥

इति बौधायनोक्तेः। आद्यमन्वाधानस्याप्युपलक्षणम्। अत एव माधवेन—

चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते।
श्वोभूते प्रतिपद् यत्र भूते कव्यादिकी क्रिया॥

इति बौधायनवाक्ये अमा सम्पूर्णा न दृश्यते किन्तु स्वल्पा दृश्यत इति व्याख्यातमिति केचित्। हेमाद्रिस्तु—

चतुर्दशी च सम्पूर्णा द्वितीया क्षयगामिनी।
चरुरिष्टिरमायां स्याद्भूते कव्यादिकी क्रिया॥

इतिवचनाच्चतुर्दश्याममावास्याननुप्रवेशेऽपि प्रतिपदि चन्द्रदर्शने चतुर्दश्यामन्वाधाय परेद्युरिष्टिरित्याह। द्वितीया क्षयगामिनीति चन्द्रदर्शनोपलक्षणम्। रात्रिसन्धौ तु सर्वदान्वाधानमेव। "अपराह्णेऽथवा रात्रौ" इतिलौगाक्षिवचनात्। न चैतस्यापराह्णसन्धेरिव चन्द्रदर्शनाभावविषयत्वम्। चन्द्रदर्शनाभावे सति अपराह्णसन्धावन्वाधानं चेत् किमु वक्तव्यं रात्रिसन्धाविति कैमुतिकन्यायेनैव प्राप्ते रात्रिसन्धिशास्त्रानर्थक्यापत्तेः। अत एव न पौर्णमासीमात्रविषयत्वमपि। अपराह्णग्रहणेनैव सिद्धेः। अत्र च सन्धिस्तिथिसाम्ये तावद्यथास्थित एव। वृद्धिक्षययोस्तु पर्वसन्धिमुपक्रम्य विशेषमाह—

लौगाक्षिः,

तिथेः परस्या घटिकास्तु याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम्।
अर्द्धं वियोज्यं च तथा प्रयोज्यं ह्रासे च वृद्धौ प्रथमे दिने तत्॥ इति।

अस्यार्थो माधवेन स्पष्टीकृतः।

वृद्धिः प्रतिपदो यास्ति तदर्द्धं पर्वणि क्षिपेत्।
क्षयस्यार्द्धं तथा क्षिप्त्वा सन्धिर्निर्णीयतां सदा॥ इति।

क्षिप्त्वा न्यूनं कृत्वेत्यर्थः। ननु एवं यदा पूर्वेद्युरपराह्णसन्धिः परेद्युश्च प्रतिपदश्चतुर्थ एव भागोऽवशिष्यते तदा कथं सन्धिशास्त्रान्निर्णयः परेद्युर्यागकालाभावात् इतिचेत्, सत्यम्।

सन्धिर्यत्रापराह्णे स्याद्यागं प्रातः परेऽहनि।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति॥

इतिवृद्धशातातपेन दोषाभावोक्त्या चतुर्थेऽपि भागे प्रयोगविधानात्। एतच्च पौर्णमास्याम्। अमावास्यायां तु चन्द्रदर्शने यागस्य निषेधादपराह्णसन्धौ याग एवेत्युक्तम्।

हेमाद्रिस्तु "सन्धिर्यत्रापराह्णे स्यात्" इत्येतन्नार्षवचनं किन्तु मण्डनकारिकेयमिति कृत्वा पौर्णमास्यामपि अपराह्णसन्धौ यदि परेद्युर्यागका-

लोऽस्ति तदैव तत्र यागस्तदभावे तु पूर्वेद्युरेवेत्युक्तवान् । अमावास्यायां तु चन्द्रदर्शनेनेष्टिरिति सर्वसम्मतम् । अत एव तत्र प्रायश्चित्तमुक्तम्—कात्यायनेन,

यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥ इति ।

न चैवं चतुर्दश्यामपि चन्द्रदर्शनसम्भवात्तत्र च "यदैवैनं न पुरस्तात् पश्येत्, तर्ह्येवोपवसेत्" इति गोभिलेनान्वाधानस्य पर्युदस्तत्वात् कथं तत्र तदनुष्ठानमिति वाच्यम् । "अङ्गगुणविरोधे च तादर्थ्यात्" ( अ० १२ पा० २ अधि० ९ ) इति न्यायेनैतादृशे विषये तत्राप्यङ्गभूतान्वाधानानुष्ठानौचित्यात् । अत एव श्रुतिः "तद्धैके दृष्ट्वोपवसन्ति" इति ।

आपस्तम्बोऽपि उपवसेदित्यनुवृत्तौ—

यदहर्न दृश्यते तदहरमावास्यां श्वो न द्रष्टार इति वेति ।

न च तैत्तिरीयब्राह्मणे,

एषा वै सुमनानामेष्टिर्यमभियजानं पश्चाच्चन्द्रमाभ्युदेत्यास्मिन्नेवास्मै लोकेऽर्धुकं भवति इति ।

तथा ऐतरेयिब्राह्मणे—

पुरस्तादमावास्यायां चन्द्रमसं यदुपैति तद्यजते ।

इति चन्द्रोदये यागविधानस्य प्राशस्त्यावगमात् कथं तत्र यागनिषेध इति वाच्यम् । अत्राभ्युदयमात्रश्रवणात्तस्य च प्रतिपद्यपि सम्भवान्नैतस्य चन्द्रदर्शनदिने यागकर्त्तव्यतापरत्वमिति केचित् । तन्न । अभिपूर्वस्य उदयतेः प्रत्यक्षदर्शनपरत्वात् । अत एव श्रुत्यन्तरेऽपि "स एष आहुतिभ्यो जातः पश्चाद्ददृशे" इतिस्पष्ट चन्द्रदर्शनेऽपि यागप्रतीतिस्तस्माच्छास्त्रीयदर्शनाभिप्रायाण्येतानीति हेमाद्रिः । वस्तुतस्तु रात्रिसन्धौ चन्द्रदर्शनदिनेऽपि यागानुष्ठानस्य पूर्वं साधितत्वात्तद्विषयाणीति युक्तम् ।

माधवापस्तम्बभाष्यार्थसङ्ग्रहकारादयस्तु पूर्वोदाहृततैत्तिरीयैतरेयिवाक्याभ्यामापस्तम्बाश्वलायनशाखिनामपराह्णसन्धौ चन्द्रदर्शन एव यागः । तदन्येषां तु बौधायनकात्यायनादीनां चन्द्रदर्शने यागो न भवत्येवेत्याहुः ।

स्मृत्यर्थसारे तु सन्धिशास्त्रेणैव सर्वदा निर्णयस्तेनापराह्णसन्धावपि सर्वदाऽन्वाधानमेव । यानि तु चन्द्रदर्शनदिने यागनिषेधवचनानि तानि तस्यैवोपोलद्बकानि न तु निर्णायकानीत्युक्तम् । नन्वेवं यागकालनिर्णये

क्रियमाणे तिथिवृद्ध्या कदाचित् पक्षवृद्धौ पूर्वयजनीयदिनात्सप्तदशेऽहन्यपि यागः प्रसज्येत । तच्च—

षोडशेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि ।
चतुर्दशे जघन्येष्टिः पापा सप्तदशेऽहनि ॥

इत्यापस्तम्बवचनेन विरुद्धमिति चेत्, न । इष्टिग्रहणस्यान्वाधानपरत्वात् । यागपरत्वे चतुर्दशेऽहनि यागाप्राप्तेस्तत्र जघन्योक्त्यनुपपत्तेः । अतश्च वृद्धिसामान्यक्षयेषु षोडशपञ्चदशचतुर्दशदिनेषु क्रमेणान्वाधानमितिवाक्यार्थः । सप्तदशेऽन्वाधाननिषेधस्तु नित्यानुवादस्तत्र तस्य कथमप्यप्राप्तेः । अत एव बौधायनः—

अत्रोपवसथस्य स्थानानि चतुर्दशी पञ्चदशी षोडशी न तु त्रयोदशी सप्तदशीति ।

यत्रौपवसथं कर्म यजनीयात् त्रयादशम् ।
भवेत् सप्तदशं वापि तत्प्रयत्नेन वर्जयेत् ॥ इति ।

इदं षोडशादिदिनेषु अन्वाधानं द्व्यहकालत्वे बोद्धव्यम् । सद्यस्कालत्वे तु सप्तदशेऽपि दिनेऽन्वाधानं भवत्येव । तच्च सद्यस्कालत्वं पौर्णमसीविशेषे इत्युक्तं—

कात्यायनेन,

सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥
इदं च सद्यस्कालत्वं वैकल्पिकम् ।

अन्वाहितिश्चास्तरणोपवासौ पूर्वेद्युरेते खलु पौर्णमास्याम् ।
आवर्त्तनात् प्राक् यदि पर्वसन्धिः सद्यस्तदा वा क्रियते समस्तः ॥

इति सङ्ग्रहोक्तेः । एवं च "पूर्वां पौर्णमासीमुत्तरां वोपवसेत्" इत्युपक्रम्य "सद्यो वा प्रातः" इति सामान्यतः पौर्णमास्यामुक्तं सद्यस्त्वमावर्त्तनप्राक्सन्धिविषयमेवोपसंहर्त्तव्यम् एकश्रुतिकल्पनालाघवात् । एतच्च वाजसनेयिव्यतिरिक्तविषयम् । तेषां तु—

मध्यन्दिनात् स्यादहनीह यस्मिन् प्राक् पर्वणः सन्धिरियं तृतीया ।
सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः ॥

इति भाष्यार्थसङ्ग्रहकारेण तत्रापि द्व्यहकालतोक्तेः । इयं तृतीयेति । अत्रेयमिति पौर्णमास्येवोच्यते न त्वमावास्या अस्या एवापराह्णरात्रिसन्धिभ्यां पूर्वं द्वैविध्याभिधानात् । अत एव पौर्णमासीमेवोपक्रम्य—

खर्विकां तृतीयां वाजसनेयिनः समामनन्ति ।

इत्यापस्तम्बेनोक्तम् । इदमपि द्व्यहकालत्वं प्रतिपत्तृतीयांशलाभ एव न

चतुर्थांशलाभे तस्यापराह्णसन्धावेव "सन्धिर्यद्यपराह्णे स्यात्" इति-वाक्येन विहितत्वादिति । अत्र च यदा पर्वसन्धौ इष्टिस्तदा अन्तिमः पदार्थः प्रतिपद्येव अनुष्ठेयः ।

प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्त्तव्या यागवित्तमैः ॥

इति गार्ग्योक्तेः । प्रणीय अग्निमितिशेषः ।

इति प्रकृतेः कालनिर्णयः ।

अथ विकृतेः ।

तत्र दर्शपूर्णमासविकृतीनामिष्टिपशुबन्धादीनामतिदेशतो द्व्यहकालप्राप्तौ—

यदिष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यां पौर्णमास्यां वा यजेत ।

इति वचनेन सद्यस्कालता विधीयते । तथा दर्शविकृतौ पौर्णमास्यपि पूर्णमासविकृतावमावास्यापि इत्यव्यवस्था च विधीयत इति व्युत्पादितं पञ्चमोपान्त्ये । बौधायनस्तु नक्षत्रे वेत्यधिकं नक्षत्रमप्याह । तच्च कृत्तिकादिविशाखान्तम् ।

कृत्तिकाः प्रथमं विशाखे उत्तमं तानि देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् ।

इति तैत्तिरीयश्रुतेः । रेवती च । "यत्किञ्चार्वाचीनं सोमात्तद्रेवत्यां कुर्वीत" इति तत्रैवोक्तेः । एतच्च न दर्शपूर्णमासौ प्रति प्रवर्त्तते प्राकरणिकेन निरवकाशेन पौर्णमास्यादिकालेनानारभ्याधीतस्य सावकाशस्य नक्षत्रस्य पाञ्चदश्येन साप्तदश्यस्य दीक्षणीयास्वरेणोपांशुत्वस्येव बाधितत्वात् । तत्र पर्वणि विशेषः । पौर्णमास्यमावास्याशब्दयोः ।

यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परः सन्निकर्षः सामावास्या ।

इति गोभिलवचनात् परमसन्निकर्षविप्रकर्षक्षणवाचित्वागतेः, तत्र च साङ्गप्रयोगानुष्ठानासम्भवाद् "यदिष्ट्या" इति वाक्येन पौर्णमास्यमावास्यापदलक्षितयोः सन्धिमदहोरात्रयोर्विकृतेर्विधानादावर्त्तने ततः प्रागवा । पर्वसन्धौ च प्रकृतेरपि तत्रैव विधानाद्युगपत्प्रकृतिविकृत्योः प्रसक्तौ प्रकृतेः पूर्वेद्युः प्रारब्धत्वादन्तरा कर्मान्तरानुष्ठानासम्भवात् प्रकृतौ च प्रातःकालस्योपदेशिकत्वात् प्रकृतिं कृत्वा विकृतिः कर्त्तव्येति याज्ञिका आहुः । न्यायमूलकमेव वाक्यं चोदाहरन्ति—

आवर्त्तनात्प्राक् यदि पर्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।

तदैव यागः परतो यदि स्या-
त्तस्मिन् विकृत्याः प्रकृतेः परेद्युः ॥ इति ।

न चावर्त्तनात् परतः सन्धौ विकृतेः प्राथम्ये प्रकृतेरौपदेशिकान्वाधानकालबाधः स्यादिति वाच्यम् । अन्वाधानस्याङ्गत्वेन तत्कालस्य प्रधानाश्रितेन विकृतिकालेन "अङ्गगुणविरोधे च तादर्थ्यात्" (अ० १२ पा० २ अधि० ९) इतिन्यायेन बाधस्योचितत्वात् । एवं सुत्या यद्यप्यपूर्वा तथापि तदहरेव कर्त्तव्या यदीष्ट्येतिवचनात् । आग्रयणं तु पौर्णमासात्प्राक् दर्शात्तु परम् ।

यस्मिन् कालेऽमावास्या सम्पद्येत तयेष्ट्वाथैतया यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पूर्णमासेन यजते ।

इति श्रुतेः ।

एतया आग्रयणेष्ट्या । पौर्णमासात्प्राक् आग्रयणं तु सद्यस्कालपौर्णमासीविषयमिति हेमाद्रिः । मीमांसकास्तु विकृतिकालमन्यथा वदन्ति । तथा हि—

सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् तासाममावास्यां पौर्णमासीं च नोपैत् ।

इतिश्रुतौ तच्छब्दानिर्दिष्टराज्योः पौर्णमास्यमावास्याशब्दप्रयोगाद्यागोपालाङ्गनं तथाप्रसिद्धेश्च तिथिवाचकत्वावगतेः । गोभिलसूत्रस्य स्वैकदेशवृत्तिनिमित्तप्रतिपादनार्थत्वेनाप्युपपत्तेः क्षणाभिधानपरत्वाभावादावर्त्तनतत्पूर्वसाध्यौदयिकपर्वणः प्रकृत्यवरुद्धत्वात् पूर्वपर्वणि प्रातस्तदभावेऽपि औदयिकप्रधानकालेनातिदेशिकप्रातःकालबाधस्योचितत्वात् पूर्वपर्वण्येव विकृत्यनुष्ठानमिति ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल–श्रीमन्महाराजाधिराजप्रतापरुद्रतनुजश्रीमन्मधुकरसाहुसूनुचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीमन्महाराजाधिराजश्रीवीरसिंहोद्योजितहंसपण्डितात्मजपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयनिबन्धे समयप्रकाशे पर्वनिर्णयः ।

अथ ग्रहणकालनिर्णयः ।

तत्र ग्रहणस्वरूपं सूर्यसिद्धान्ते—

छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत् ।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ ॥

अस्य=भास्करस्य । असौ=उपरागः । यदाधोऽवस्थित इन्दुर्भास्करस्य छादको भवेत्तदा सूर्योपरागः । यदा प्राच्यां गच्छंश्चन्द्रः प्रत्यगवस्थित-सूर्यप्रयुक्तभूच्छायां प्रविशति तदा चन्द्रोपराग इत्यर्थः ।

वराहसंहितायामपि,

भूच्छायां स्वग्रहणे भास्करमर्कग्रहे च प्रविशतीन्दुः । इति ।

स्वग्रहणे=चन्द्रग्रहणे । भास्करं प्रविशति=भास्करं छादयतीत्यर्थः । ग्रहण-कालमाह—

वृद्धगार्ग्यः,

पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलः ।
ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ॥ इति ।

कालविभागो ब्रह्मसिद्धान्ते—

यावान् कालः पर्वणोऽन्ते तावान् प्रतिपदादिमः ।
रवीन्दुग्रहणानेहा सुपुण्यो मिश्रणाद्भवेत् ॥ इति ।

ग्रहणमर्धं पर्वान्तभागे अर्धं प्रतिपदादिभागे भवति । पर्वप्रतिपत्सन्धौ ग्रहणस्य मध्य इत्यर्थः । अनेहा=कालः । अत्र स्नानमावश्यकम्—

चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

इति लैङ्गात् ।

ग्रहणे सङ्क्रमे चैव न स्नायाद्यदि मानवः ।
सप्तजन्मानि कुष्ठी स्यात् दुःखभागी च जायते ॥

इति वृद्धवशिष्ठेनाकरणे दोषोक्तेश्च । स्नानजलनियमो—

महाभारते,

गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्रसूर्ययोः ।
महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि ॥ इति ।

अत्र यथाविधीतिग्रहणात् यत् स्मृतिरत्नावल्यामुक्तमेतदमन्त्रकं स्नान-मिति तद् परास्तम् । गङ्गास्तिस्रः ।

तिस्रो नद्यो महापुण्या वेणी गोदा च जाह्नवी ।
(१)गां हरीशाङ्कतः प्राप्ता गङ्गा इति हि कीर्त्तिताः ॥

---

(१) कालमाधवे तु गां हरीशाङ्घ्रिकात् इति पाठः । हरिश्चेशश्च हरीशौ । अङ्घ्रिः

इति ब्रह्मपुराणात्। गां पृथ्वीम्। गङ्गाधरांशत इति क्वचिदुत्तरार्द्धादिः। महानद्यः=समुद्रगामिन्यः सरस्वतीनर्मदाद्याः। महानद्यः समुद्रगाः इति वचनात्।

शङ्खः—

वापीकूपतडागेषु गिरिप्रस्रवणेषु च।
नद्यां नदे देवखाते सरसीषु धृताम्बुनि॥
उष्णोदकेन वा कुर्याद्ग्रहणे चन्द्रसूर्ययोः। इति।

उष्णोदकमातुरस्य।

आदित्यकिरणैः पूतं पुनः पूतं च वह्निना।
अतो व्याध्यातुरः स्नायाद्ग्रहणेऽप्युष्णवारिणा॥

इति व्यासोक्तेः। अपिर्भिन्नक्रमः। उष्णवारिणापीत्यर्थः। अथ वा वक्ष्यमाणयमवचने उपरागप्राक्पठितजननादिसमुच्चयार्थः। यत्तु—

मृते जन्मनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा॥

इति यमवचनं तदनातुरविषयम्।

व्यासः—

सर्वं गङ्गासमं तोयं सर्वे ब्रह्मसमा द्विजाः।
सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः॥ इति।

अत्र जलमात्रस्य गङ्गासमत्वोक्त्या प्राशस्त्याभिधानेनाविहितस्य स्तुत्यानर्थक्यादर्थवादेन येन केनापि जलेन स्नायादिति विधिरुन्नेयः। जले पुण्यातिशयक्रममाह—

मार्कण्डेयः,

भूमिष्ठमुद्धृतात् पुण्यं ततः प्रस्रवणोदकम्।
ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्॥
तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम्।
ततस्तु परमं गाङ्गं पुण्यं पुण्यस्ततोऽम्बुधिः॥
शीतमुष्णोदकात् पुण्यमपारक्यं परोदकात्। इति।

अत्र भूमिष्ठादेः पुण्यातिशयत्वस्तुतिर्भूमिष्ठाद्यसम्भव उद्धृतादिविध्युन्नयनार्था न तु गुणफलसम्बन्धः। स्नानफलमात्रार्थिनो गङ्गाकूपसमवाये कूपेऽपि स्नानप्रसङ्गात्। मासविशेषे तीर्थविशेषात् पुण्या-

पादः कं शिरः। अङ्घ्रिश्च कं च अङ्घ्रिकम्। हरेः पदादीश्वरस्य शिरसो गां भूमिं प्राप्ता गङ्गा। यद्यपि जाह्नव्येव तादृशी, न तु वेणीगोदे। तथापि 'छत्रिणो यान्ति' न्यायेन जाह्नव्या सहनिर्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्धमिति व्याख्यातं च।

तिशयो—

देवीपुराणे,

कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे।
मार्गे तु ग्रहणं शस्तं देविकायां महामुने!॥
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा।
फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा।
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी॥
श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी।
आश्विने सरयूः श्रेष्ठेति।

गङ्गायमुनमित्यत्रैकवद्भावः "सर्वो द्वन्द्वो विभाषैकवद्भवति" इति वचनात्। देविका देवहेति अयोध्यामण्डले प्रसिद्धा। सन्निहत्या=कुरुक्षेत्रम्। यद्यपि पौषे तु नर्मदा पुण्येत्यादौ देशप्राधान्यं प्रतीयते तथापि "कार्त्तिके ग्रहणं श्रेष्ठं" इत्युपक्रमानुरोधात् सर्वत्र ग्रहणस्यैव प्राधान्यमनुसन्धेयम्। उपरागविशेषे तीर्थविशेषस्तत्रैव—

गोदावरी महापुण्या चन्द्रे राहुसमन्विते।
सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने!॥
नर्मदातोयसंस्पर्शात् कृतकृत्या भवन्ति ते। इति।

मात्स्ये—

गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे॥

तत्रैव—

दशजन्मकृतं पापं गङ्गासागरसङ्गमे
जन्मनां तु सहस्रेण यत्पापं समुपार्जितम्।
तन्नश्येत् सन्निहत्यायां राहुग्रस्ते दिवाकरे। इति।

वारविशेषे ग्रहणे चूडामणियोगमाह—

व्यासः,

सूर्यवारे रवेर्ग्रासः सोमे सोमग्रहस्तथा।
चूडामणिरिति ख्यातस्तत्रानन्तफलं लभेत्॥

प्रभासखण्डे—

गावो नागास्तिला धान्यं रत्नानि कनकं महीम्।
सम्प्रदाय कुरुक्षेत्रे यत्फलं लभ्यते नरैः॥
तदिन्दुग्रहणेऽम्भोधौ स्नानाद्भवति षड्गुणम्।

अत्र कुरुक्षेत्रे यत् फलं लभ्यते इति सिद्धवन्निर्देशानुपपत्त्या कु-

कुरुक्षेत्रे गवादि दद्यादिति विधिरुन्नेयः । उपरागे च श्राद्धमावश्यकम् ।

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति ॥

इति महाभारतोक्तेः । यत्तु—

विशिष्टे ब्राह्मणे प्राप्ते सूर्येन्दुग्रहणेऽयने ।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वन्ति चेच्छया ॥

इति वचनं तदुक्तवचनविरोधादिच्छया चेत्यन्वयेन "श्राद्धं प्रति रुचिश्च" इत्येतत्स्वतन्त्रेच्छाकालप्रतिपादकवचनसमानार्थमित्यविरोधः। श्राद्धं प्रकृत्य—

कूर्मपुराणेऽपि,

नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्ययोः ।
बान्धवानां च मरणे नारकी स्यात्ततोऽन्यथा ॥ इति ।

दानमप्यावश्यकम्—

अयनादौ सदा देयं द्रव्यमिष्टं गृहे च यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥

इतिशातातपीये सदाश्रुतेः । एतच्च स्नानादि रात्रावपि कार्यम् ।

यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

इतिदेवलोक्तेः । दानं च श्राद्धस्याप्युपलक्षणम् ।

नक्तं तु वर्जयेच्छ्राद्धं राहोरन्यत्र सूतके ।

इति वायुपुराणात् ।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥
सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
द्वयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥

इतिशातातपविष्णुवचनाभ्यां च । एतच्च मलमासेऽपि कार्यम् ।

चन्द्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् ॥

इति मात्स्योक्तेः । अत्र च काम्यमपि स्नानादिकं कार्यम् ।

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।
चन्द्रसूर्योपरागे च प्राजापत्येन तत्समम् ॥

इति दक्षोक्तेः ।

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।
गुणवत् सर्वकामीयं पितॄणामुपतिष्ठते॥

इति विष्णूक्तेः।

भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम्।
तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता॥

इतिमहाभारतोक्तेश्च। एतेषां कालविशेषः स्मृत्यन्तरे—

ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते।
मुच्यमाने भवेद्दानं मुक्तौ स्नानं विधीयते॥ इति।

होमः सुरार्चनस्याप्युपलक्षणम्।

स्नानं स्यादुपरागादौ मध्ये होमसुरार्चने।

इति ब्रह्मवैवर्तात्। श्राद्धं च होमोत्तरं कार्यम्।

स्नानं विधाय गङ्गादौ प्राणायामं च तर्पणम्।
गायत्र्याश्च जपं कृत्वा तिलहोमं समाचरेत्॥
व्याहृतिग्रहमन्त्रैश्च स्वशाखोक्तैस्तु शक्तितः।
आमश्राद्धं ततः कार्यं षड्दैवत्यं विशेषतः॥
दानं दद्याद्यथाशक्ति हिरण्यान्नगवां भुवः।

इति चन्द्रप्रकाशे स्मृत्यन्तरोक्तेः। यत्तु ब्रह्मपुराणे स्नानादि प्रकृत्य—

उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम्॥ इति।

तत् आदिमध्यावसानेषु यद्यद् विहितं तस्य तस्य फलातिशयार्थमिति माधवः। यत्तु व्यासवचनम्—

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥ इति।

तत् स्नानाद्यपेक्षयोत्तममध्यमाधमकालपरम्। उपमर्दे लक्षगुणमिति कालान्तरमित्यन्ये। स्नानाकरणे कर्मान्तरानधिकारो ब्रह्मपुराणे—

आशौचं जायते नृणां ग्रहणे चन्द्रसूर्ययोः।
राहुस्पर्शे द्वयोः स्नात्वा दानादौ कल्पते नरः॥ इति।

कल्पते=अधिकारीभवतीत्यर्थः।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने।

स्नात्वा कर्माणि कुर्वीत—

इतिषट्त्रिंशन्मताच्च। स्नानं च सचैलम्।

सर्वेषामेव वर्णानां सूतकं राहुसूतके।
सचैलं तु भवेत्स्नानम्—

इतिवृद्धवशिष्ठोक्तेः । राहुसूतके=उपरागे । सचैलत्वं मुक्तिस्नानेऽप्यविशेषात् ।

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम् ।
तयोः सम्पर्कमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इति ब्रह्माण्डपुराणे संस्पर्शविमुक्त्योः शावजननाशौचोक्त्या तन्निमित्तसचैलस्नानादिधर्मप्राप्त्यवगतेश्च । एतेन मुक्तिस्नानमेव सचैलमिति मदनरत्नमतं प्रत्युक्तम् । रजस्वलापि तीर्थोद्धृतवारिणा स्नायात् ।

न सूतकादिदोषोऽस्ति ग्रस्ते होमजपादिषु ।
ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृत्य वारिणा ॥

इतिभार्गवार्चनदीपिकायां सूर्योदयनिबन्धवचनात् । स्नानविधिस्तु—

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥

इत्यादिर्मिताक्षरायाम् । तदहः प्रत्याब्दिकप्राप्तौ मदनपारिजाते—गोभिलः,

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ॥ इति ।

अत्र दर्शरविपितृसुतशब्दाः प्रदर्शनार्थाः । न्यायसाम्यात् । तेन चन्द्रग्रहणेऽपि सपिण्डादिवार्षिकमन्नादिना तद्दिन एव कार्यमिति मदनपारिजात एव व्याख्यातम् । एवमेव पृथ्वीचन्द्रोदयनिर्णयामृतप्रयोगपारिजातेषु । यानि तु कैश्चित्पठ्यन्ते—

ग्रस्तोदये यदा चन्द्रे प्रत्यब्दं समुपस्थितम् ।
तद्दिने चोपवासः स्यात् प्रत्यब्दं तु परेऽहनि ॥

तथा—

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
प्रत्यब्दं तु तदा कार्यं परेऽहन्येव सर्वदा ॥
ग्रहणात्तु द्वितीयेऽन्हि रजोदोषात्तु पञ्चमे । इति ।

तेषां दृश्यमानस्मृतिषु निबन्धेषु चादर्शनाद्यावन्मूलोपलम्भमननुष्ठानलक्षणमप्रामाण्यम् । दर्शसङ्क्रान्त्यादिश्राद्धकाले उपरागे तु उपरागश्राद्धेनैव सिद्धिः प्रसङ्गात् काम्येन च नित्यस्य । एतच्चोपरागनिमित्तं स्नानादि जननाद्याशौचमध्येऽपि कार्यम् ।

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

इति लैङ्गोक्तेः । न चैवम्—

चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि वा ।

अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

इति लैङ्ग एव पूर्ववचनानर्थक्यमिति वाच्यम्। गोबलीवर्दन्यायेन वा जननमरणयोरपि पृथङ्निमित्तत्वप्रतिपादनपरतया वा स्नानाकरणेऽनिष्टविशेषप्रतिपादनपरतया वा सार्थकत्वात्। एतेनाशौच उपरागे स्नानमेव कार्यं न दानश्राद्धादीति जीमूतवाहनमतमपास्तम्। अविशेषेण शुद्ध्यभिधानात्। यावत्तावच्छब्दाभ्यां स्पर्शादिमोक्षान्तव्यापिशुद्ध्यभिधानं स्नानमात्रार्थत्वेऽनर्थकं स्यात् स्नानस्य स्पर्शकालीनत्वात्।

सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने।
स्नात्वा श्राद्धं प्रकुर्वीरन्दानं शाठ्यविवर्जितम् ॥

इतिकालादर्शमदनपारिजातचन्द्रप्रकाशलिखितवचनाविरोधाच्च।

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम्।
तयोः सम्पर्कमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इत्यनेकसापेक्षक्रमाविध्यनुपपत्तेश्च। यत्तु संवत्सरप्रदीपादिषु वचनम्—

सूतके मृतके चैव न दोषो राहुदर्शने।
स्नानमात्रं तु कर्त्तव्यं दानश्राद्धविवर्जितम् ॥ इति।

तद् यदि समूलं तर्हि विकल्पः। वस्तुतो निर्मूलम् प्रयोगपारिजातेऽप्यलिखनात् दानश्राद्धविवर्जितमितिवैयर्थ्याच्च। काम्यं महादानादि आशौचे न भवति। तस्यानैमित्तिकत्वात्। न ह्युपरागे निमित्ते महादानादि विधीयते किन्तु सङ्क्रान्त्यादाविवाङ्गभूत उपरागकाले। कालसन्दंशप्रायपाठादुपरागस्य। "सर्वे वर्णा" इत्यङ्गिरोवचनेन सूतकमृतकनिमित्ताशुद्धिव्युदासेन शुद्धेः कर्मविशेषार्थत्वावधारणाच्च। अत्र विशिष्टसम्प्रदानाभावे जातिमात्रब्राह्मणेऽपि देयमित्याह—

बौधायनः,

अश्रोत्रियः श्रोत्रियो वा पात्रं वापात्रमेव वा।
विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हति ॥ इति।

अश्रोत्रियोऽनधीतवेदः। "श्रोत्रियंश्छन्दोऽधीत" (५।२।८४) इति तदध्येतरि श्रोत्रियमितिनिपातनात्। पात्रं "न विद्यया" इत्यादि प्रसिद्धम्(१)। विप्रब्रुवलक्षणं षड्त्रिंशन्मते—

गर्भाधानादिसंस्कारवेदोपनयनैर्युतः।
नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥ इति।

---

(१) न विद्यया केवलया तपसा वापि पात्रता।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ इतियाज्ञवल्क्योक्तम्।

वेदग्रहणोत्तरमाविसंस्कारलोपादध्यापनादावनियमाच्चास्य श्रोत्रियाज्जघन्यत्वम्। अत्र विप्रो जातिमात्रब्राह्मणः।

गायत्रीसारमात्रा ये सन्ध्यामात्रयुताश्च ये।
अज्ञानाः कृषिकर्माणो ब्राह्मणा नामधारकाः॥

इति चतुर्विंशतिमतात्। अत्र च न तुल्यवद्विकल्पः।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते॥

इति दक्षेण फलतारतम्योक्तेः। यत्तु—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।
पात्रभूताय विप्राय भूमिं दद्यात् सदक्षिणाम्॥

इत्युपरागे पात्रविधानं तत् काम्यदानपरम्। काम्यदानं प्रक्रम्याभिधानात् भूमिग्रहणस्योपलक्षणत्वात्। भूमिदानं पात्र एवेति नियमपरं वा वचनम्। अन्यथा लक्षणापत्तेः। उपरागकाले पक्वमन्नं परित्याज्यम्। "सूतकान्नं च वर्जयेत्" इति ग्रहणं प्रकम्य वृद्धवशिष्ठोक्तेः। अन्नम्=पक्वम्।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्॥

इति षट्त्रिंशन्मतात्। उपरागान्तरितमपि वर्ज्यम्।

नवश्राद्धेषु यच्छिष्टं ग्रहपर्युषितं च यत्।

इति मिताक्षरायां स्मृतेः। क्वचित् प्रतिप्रसवमाह—
मेधातिथिः,

आरनालं पयस्तक्रं कीलाटं घृतसक्तवः।
स्नेहपक्वं च तैलं च न कदाचित् प्रदुष्यति॥ इति।

अत्र सक्तुस्नेहपक्वयोः प्रतिप्रसवः। अन्यत्तु नित्यप्राप्तानुवादः। धर्मविशेषो वचनान्तरे—

आरनालं च तक्रं च ह्यादेयं घृतपाचितम्।
उदकं च कुशच्छन्नं न दुष्येद्राहुदर्शने॥ इति।

क्वचित्तु पाठः—

वारितक्रारनालादि तिलदर्भैर्न दुष्यति। इति।

अत्र युक्तमित्यध्याहारः। तिलदर्भाः समुच्चिता उपादेयत्वात्। तेन राहुदर्शने वारितक्रादि तिलकुशयुतं कुर्यादिति विधीयते न दुष्यतीति दोषाभावस्तु नित्यनुवादः तिलकुशायोगे दोषः स्यादितिख्यापनार्थः। वर्जनं च भोजने।

प्रेतश्राद्धे यदुच्छिष्टं ग्रहे पर्युषितं च यत् ।
दम्पत्योर्भुक्तशेषं च न भुञ्जीत कदाचन ॥

इति वचनात् । तत्रैव प्रायश्चित्ताम्नानाच्च । अत एव विहितकर्मण्यपि वर्जनीयम् । "यदार्याणामभोजनीयं स्यान्न तेन यजेत" इत्यापस्तम्बवचनात् । यजिर्विहितकर्मोपलक्षणम् । ग्रहणे स्वापभोजननिषेधः ।

शिवरहस्ये—

सूर्येन्दुग्रहणं यावत्तावत् कुर्याज्जपादिकम् ।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥ इति ।

अत्र शातातपे विशेषः ।

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा । इति ।

महानिशा मार्कण्डेयेनोक्ता—

महानिशा द्वे घटिके रात्रिमध्यमयामयोः । इति ।

उभयतो द्वे द्वे मिलित्वा वा द्वे एकैकमुभयत इत्यर्थः । सार्द्धप्रहरोत्तरं मुहूर्त्तचतुष्टयं महानिशेति कल्पतरुः । भोजनं स्वगृह एव ।

नाश्नीयादथ तत्काले ग्रस्तयोश्चन्द्रसूर्ययोः ।
मुक्तयोश्च कृतस्नानः पश्चाद् भुञ्ज्यात् स्ववेश्मनि ॥

इति ब्रह्मपुराणात् । तेन परान्ननिवृत्तिः । उपरागात् प्रागपि भोजनं निषेधति—

वृद्धगौतमः,

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥ इति ।
पूर्वत्वं चोपरागयामावधिकम् ।
ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः ।
भुञ्जीतावर्त्तनात् पूर्वं प्रथमे प्रथमादधः ॥

इति मार्कण्डेयेनेन्दुग्रहे तथोक्तेः । प्रथमादधि=प्रथमयामादूर्ध्वं द्वितीये प्रहर इत्यर्थः । प्रथमे=रात्रिप्रथमयामे । प्रथमादधः दिवसस्य प्रथमयाम इत्यर्थः । कालादर्शे तु ग्रहणं तु भवेदिन्दोरित्यस्यानन्तरम्—

रवेस्त्वावर्त्तनादूर्ध्वमर्वागेव निशीथतः ।
चतुर्थप्रहरे चेत्स्यात् चतुर्थप्रहरादधः ॥

इति च वाक्यं वसिष्ठनाम्ना पठितम् । ऊर्ध्वं चेद्ग्रहणं रात्रेश्चतुर्थप्रहरादधो भुञ्जीतेत्यर्थः । अत्र च न भोजनं विधीयते किन्तु रागतः प्राप्ते भोजने कालो नियम्यते । न वा सोऽपि । माध्याह्निकाक्रियापकर्षापत्तेः । किन्तु मूलकल्पनालाघवादुक्तकालादूर्ध्वं भोजनं निषिध्यते । अथ वा

"नाद्यात् सूर्यग्रहात् पूर्वं" इति निरवधिकभोजननिषेधस्यावधिसमर्पणमेतत्। "रथन्तरे प्रस्तूयमानेऽक्षिणी सम्मीलयेत्" इति विहितसम्मीलनस्य "स्वर्दृशं प्रति वीक्षेत" इति स्वर्दृशपदावधिसमर्पणवत्। (अ० १० पा० ६ अधि०२) भुजिस्त्वनुवादो वीक्षणवत्। बालादीनामन्नं विनास्थातुमशक्तानां विशेषो मात्स्यमार्कण्डेययोः।

सायाह्ने ग्रहणं चेत् स्यादपराह्णे न भोजनम्।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे।
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भोजनक्रिया। इति।

ग्रहणं चेदिति अपराह्ण इत्यादौ, भोजनमिति न मध्याह्न इत्यादावनुषञ्जनीयम्। सायाह्नादौ ग्रहणेऽशक्तानां क्रमेणापराह्णादावेव भोजननिषेधस्ततोऽर्वाङ् न दोष इत्यर्थः। एतच्च सूर्योपरागे न चन्द्रोपरागे तस्यापराह्णादावसम्भवात्। अनेनैव न्यायेन चन्द्रोपरागेऽपि बालादीनां शक्तिविरोधो माभूदिति रात्रिं पञ्चधा विभज्य पञ्चमभाग उपरागे चतुर्थे न भोक्तव्यं चतुर्थ उपरागे तृतीये नेत्येवं कल्पनीयम्। सूर्योपरागे तथा दर्शनात्। (१)"अर्थाद्वा कल्पनैकदेशत्वात्" (अ० १ पा० ४ अधि० २० सू० ३०) इति न्यायात्। यत्तु माधवे स्कान्दे—

यदा चन्द्रग्रहस्तावन्निशीथात् परतो भवेत्।
भोक्तव्यं तत्र पूर्वाह्णे न मध्याह्ने कथञ्चन॥
पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्।
तदा दिवा न कर्त्तव्यं भोजनं शिखिवाहन!॥ इति।

यच्च हेमाद्रिणा ब्रह्मवैवर्ते—

चन्द्रसूर्यग्रहे नाद्यादर्वाग् यामचतुष्टयम्।
केचित्त्रितयमित्याहुर्मुनयो भृगुनन्दन!॥ इति।

तच्छक्ताशक्तपरतया व्यवस्थापनीयम्। ग्रस्तचन्द्रोदये नाहर्भोजनम्।

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्।

---

(१) स्रुवेणावद्यति, स्वधितिनावद्यति, हस्तेनावद्यति, इत्यादिष्ववदेयेषु आज्यपशुपुरोडाशेषु हविःषु अवदानहेतवः स्रुवाद्या अव्यवस्थिता अविशेषश्रवणादिति प्राप्त उच्यते—अशक्यार्थविध्यसम्भवादवश्यं विधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्तव्यं तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति। ततश्च द्रवद्रव्यस्याज्यस्य स्रुवो योग्यः छेदनीयमांसस्य स्वधितिः शस्त्रविशेषः, संकृतस्य पुरोडाशस्य हस्त इति व्यवस्था। तद्वदत्रापि। अर्थात्=सामर्थ्यात् विधेः कल्पना=व्यवस्थितार्थत्वकल्पना स्यात् एकदेशत्वात्=सामर्थ्यकल्पितशब्दस्य विधिवाक्यैकदेशत्वादिति सूत्रार्थः।

इति वृद्धवाशिष्ठोक्तेः । यत्तु–

सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।

तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून्विना ॥

इति चन्द्रग्रहेऽहर्भोजननिषेधकं तद् ग्रस्तोदयविषयम् । एकमूलकल्पनालाघवात् । अत्राप्यातुरादीनां पूर्ववदेव व्यवस्था ज्ञेया । द्वयोर्ग्रस्तास्ते––

शातातपः,

ज्ञात्वा दृष्ट्वा परेऽह्न्यद्याद्ग्रस्तास्तमितयोस्तयोः । इति ।

तयोः=चन्द्रसूर्ययोः । यत्तु–

अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा ।

मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥ इति ।

तदपि ग्रस्तास्तविषयमेव । किन्तु चन्द्रग्रहे सा रात्रिस्तदुत्तरं दिनमित्यहोरात्रमिति द्रष्टव्यम् । अत्र दृशिरुदयलक्षणार्थः ।

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।

तदा परेद्युरुदये स्नात्वाभ्यवहरेन्नरः ॥

इति भृगुणोदये भोजनोक्तेः । कालादर्शेऽपि—

गार्ग्यः,

सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।

तदहर्नैव भुञ्जीत रात्रावपि कदाचन ॥ इति ।

अत्र कदाचनेति धारणपारणव्रतस्य पौर्णमास्यादितिथिनक्षत्रादिप्रयुक्तोपवासपारणस्य च निषेधार्थम् । उपरागकाले तद्वेधे च भोजने प्रायश्चित्तमुक्तं माधवीये—

कात्यायनेन,

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति ।

तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेण विशुध्यति ॥ इति ।

अत्र दिनग्रहणमुपरागातिरिक्तभोजननिषेधकालोपलक्षणम् । ग्रस्तास्तसमये भोजनं विना सर्वमाह्निकं कार्यम् ।

ग्रस्ते चास्तङ्गते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम् ।

स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः ॥

इति मदनरत्ने शातातपोक्तेः । अत्रेन्दुग्रहणमविवक्षितं ग्रस्तास्तमात्रेणोद्देश्यपर्यवसानात् । एवं च रवेरपि ग्रस्तास्ते प्रातःकालीनं स्नानादि कार्यम् । अत्रोपवासः काम्यो ब्रह्मपुराणे—

नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः ।

चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥

अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥ इति ।

लैङ्गेऽपि—

एकरात्रिमुपोष्यैव स्नात्वा दत्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निवृत्तिः पापकोशतः ॥ इति ।

अत्रोपोषित इति निष्ठयोपोष्येति च पूर्वकालविहितप्रत्ययाच्च पूर्वेद्युरुपवास इति केचित् । अपरे त्वयनादिप्रायपाठात् क्त्वादिकर्मणि(१)ल्यपं च 'मुखं व्यादाय स्वपिति' इतिवत् समानकर्तृकतामात्रेऽभिप्रेत्य तदहरेवोपवासमाहुः । एतदेव युक्तम् ।

ग्रहणेऽर्कस्य चन्द्रस्य वा भुजिः पूर्वमुपोषितः ।

इति पुरश्चरणे पूर्वमुपवासविधानात् । अयं च पुत्रवद्गृहस्थाभिन्नस्य ।

सङ्क्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही ॥

इति नारदेन पर्युदासोक्तेरिति । अत्रेदं वक्तव्यम् । नायं पर्युदासः । "न होतारं वृणीत" इतिवदेकवाक्यत्वाभावात् । ( अ० १० पा० ८ अधि० २ ) प्रत्युत "न तौ पशौ करोति" इतिवदसन्निहितत्वाच्च । ( अ० १० पा० ८ अधि० ३ ) भवतु वा पर्युदासस्तथापि सङ्क्रान्त्यादिप्रयुक्ते स्वतन्त्रोपवास एव युक्तः । अन्यथा शुक्लैकादश्यादावचनपात एकादश्युपवासे उपरागे महादानाङ्गभूतोपवासे चान्द्रायणाद्युपवासेऽपि पर्युदासः स्यात् । अङ्गत्वं चास्याहोरात्रोषित इतिकर्तृसंस्कारतयोपवासावगमात् । "यो दीक्षितो यदग्नीषोमीयं पशुमालभते" इत्यत्र पूर्वपक्षे दीक्षाया इव कर्तृसंस्कारद्वारा स्नानार्थत्वावगमात् । अत एवैकादशीप्रकरण उक्तं सङ्क्रान्त्यादावुपवासनिषेधस्तु तत्प्रयुक्तोपवासस्येति । अत एव पुरश्चरणाङ्गभूतमुपवासं पुत्रवन्तोऽपि गृहस्था आचरन्तो दृश्यन्ते शिष्टा अविगानेन । तस्मादहोरात्रोषितः स्नात्वेत्याद्यङ्गभूत उपवासः पुत्रवद्गृहस्थस्यापि भवत्येव । यस्त्वेकादश्यादाविव

एकरात्रमुपोष्यैव राहुं दृष्ट्वाऽक्षयं नरः ।
पुण्यमाप्नोति कृत्वा च स्नानश्राद्धं विधानतः ॥

इति मार्कण्डेयोक्तः स्वतन्त्रस्तत्प्रयुक्त उपवासस्तत्रैवास्य पर्युदास इति । ग्रहणप्रयुक्तो भोजननिषेधस्त्वस्य कृष्णैकादश्यामिव भवत्येव बाधकाभावात् । एतच्च स्नानादि सर्वं चाक्षुष एवोपरागे । न त्वभ्रादिच्छन्ने न चान्धानाम् ।

---

( १ ) क्त्वम् क्त्वाप्रत्ययमित्यर्थः ।

चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरे । इति ।
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।

दृष्ट्वा स्नायादित्यादिनैमित्तिकविधिषु चाक्षुषज्ञानवाचिदृशेः प्रयोगात् । अन्यथा तदानर्थक्यात् निमित्तोक्त्यैव ज्ञानमात्रलाभात् नैमित्तिके निमित्तनिश्चयवतोऽधिकारात् । दर्शनं च स्नानादिकर्तृगतं, क्त्वाश्रुतेः । यत्रापि "राहुदर्शने" इत्यादौ न क्त्वाश्रुतिः किन्तु स्वपरसाधारणदर्शनमात्रवाची दृशिस्तत्रापि "एकत्र दृष्ट" इति न्यायेन कर्तृगतदर्शनलाभः । अत एव रात्रौ रवेर्दिने चन्द्रस्य ग्रहणे न स्नानादिप्राप्तिः । अत एव—

रात्रौ रविग्रहः स्याच्चेद्दिवा चन्द्रग्रहस्तथा ।
नादेश्यमुभयं राज्ञे यच्च सूक्ष्मतमं भवेत् ॥

इति ज्यौतिषिकाणामनादेश्यत्वोक्तिः । अन्यथा दृशेर्ज्ञानमात्रवाचित्वे देशान्तरीयोपरागे स्नानादिप्रसङ्गो दुर्वारः स्यात् । "नादेश्यमुभयं राज्ञे" इत्यत्रानादेशवचनमदृष्टार्थकं स्यात् । मन्मते तु दृष्टार्थम् अयोग्यस्य राजनिवेदनमफलमित्यर्थलिङ्गानादेश्यत्वानुवादात् । नच—

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं च न क्वचित् ॥

इति वचनान्निवृत्तिरिति वाच्यम् । निषेधपर्युदासयोर्विकल्पलक्षणापत्तेः । तेन नित्यानुवादः सः । अथ दर्शनशब्देन चाक्षुषज्ञानविषयत्वयोग्यता विवक्ष्यते तथा च न रात्रिदिनोपरागेऽतिप्रसङ्गस्तथापि ग्रहणदेशीयचाक्षुषत्वेन देशान्तरीयाणामधिकारापत्तिः । समानकर्तृकत्वस्य परमतेऽविवक्षितत्वात् । न च यस्मिन् देशे यश्चन्द्रसूर्योपरागश्चाक्षुषज्ञानयोग्यः स तस्मिन् देशे उदितहोमे सूर्योदयवत् कर्मनिमित्तमिति वाच्यम् । अशाब्ददेशस्यावच्छेदकत्वकल्पनातः शाब्दस्य समानकर्तृकत्वस्य तदौचित्यात् । अथ समानकर्तृकचाक्षुषज्ञानविषयत्वयोग्यता विवक्ष्यते तर्हि तद्विषयतैवास्तु विशेषणत्वेन पूर्वोपस्थितेः किं योग्यतया जघन्योपस्थितया, तावतैव देशान्तरीयोपरागेऽतिप्रसङ्गवारणात् । तस्माच्चाक्षुष एवोपरागे स्नानादि कार्यं नान्धादिभिरप्रच्छन्ने वोपराग इति प्राच्याः ।

त एवं वाच्याः । 'दृष्ट्वा स्नायात्' इत्यत्र धातुसम्बन्धाधिकारविहितक्त्वाप्रत्ययेन दर्शनस्नानयोः 'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र णमुला जीवनहोमयोरिव साक्षात्सम्बन्धः प्रतीयते । स न तावन्निमित्तत्वे-

न घटादिदर्शनेऽतिप्रसङ्गाद्दार्शिवत् । (अ०६पा०४अधि०६) न च "मृष्यामहे हविषा विशेषणम्" इतिन्यायेन हविषार्त्तिरिवोपरागेण दर्शनं विशेष्यत इतिवाच्यम् प्रतिवसन्तं सोमयागावृत्तिवत् "अमेध्यं दृष्ट्वा जपत्यवद्धमन" इत्यमेध्यदर्शनावृत्तौ जपावृत्तिवच्च प्रतिदर्शनं स्नानाद्यावृत्तिप्रसङ्गात् । नोपरक्तमादित्यमीक्षेतेत्यनीक्षणव्रतपालयितॄणां बह्वायासस्नानादिभिया बुद्धिपूर्वं दर्शनमकुर्वतां दुष्टग्रहणमपश्यतां चानधिकारप्रसङ्गाच्च। किञ्च 'नाशुची राहुतारका' इति अशुचेर्दर्शननिषेधान्न तस्य निमित्तता । अशुचित्वं च सर्वेषामुपरागकाले ।

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम् ।
तयोः सम्पर्कमात्रेण उपस्पृश्य क्रियाक्रमः ॥

इति ब्रह्माण्डोक्तेः । न च निषेधस्य रागप्राप्तविषयत्वेनोपपत्तेर्न वैधे दर्शने प्रवृत्तिरिति वाच्यम् । निमित्तस्याविधेयत्वात् । ननु न ब्रह्माण्डपुराणादुपरागस्वरूपमशुचित्वापादकं वक्तुं शक्यं देशान्तरीयोपरागेण देशान्तरीयाणामाशौचापत्तेः । किन्तु दर्शनमेव ।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।

इतिवचनात् । ब्रह्माण्डवचनं तु सम्पर्कमात्रेणाशुचित्वं किमुत तद्दर्शनेनेत्येवंपरम् अत एव मात्रच्प्रयोगः । तथा चाशुचित्वस्यापि स्नानादेरिव दर्शननिमित्तकत्वात् प्राक् दर्शनादशुचित्वाभावान्निषेधाप्रवृत्त्याऽस्ति दर्शनप्रसक्तिरिति स्यादेव निमित्ततेतिचेत्, तथापि जननमरणनिमित्ताशौचवतो दर्शननिषेधात् स्नानादावनधिकारस्य दुष्परिहरत्वात् । न चेष्टापत्तिः ।

चन्द्रसूर्यग्रहे स्नायात् सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥

इति लैङ्गवचनविरोधात् । ननु "नाशुची राहुतारका" इति आशौचसामान्ये निषिद्धस्यापि दर्शनस्य—

सूतके मृतके चैव न दोषो राहुदर्शने ।

इत्यनेन जननमरणाशौचे दर्शनप्रतिप्रसवदर्शनादाशौचेऽपि अधिकाराविघात इति चेत्, न । न ह्येतेन दर्शनं प्रतिप्रसूयते किन्तु तन्निमित्तं स्नानादि ।

तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ।

इति वाक्यशेषे कर्माधिकाररूपशुद्धिप्रतिपादनात् । एवं च जननाद्याशौचे निषेधप्रवृत्त्या दर्शनाप्रसक्तेर्न दोषो राहुदर्शने इत्यनुवादानुपपत्तिरनधिकारश्च पूर्वोक्त एव । न चाशौचिनो दर्शननिषेधेऽपि—

चन्द्रसूर्यग्रहे स्नायात् सूतके मृतकेऽपि च ।

इतिवचनादधिकारो भविष्यतीतिवाच्यम् । मेघच्छन्नेऽन्धकारे रपि अशुचिनस्तदापत्तेः । शूद्रस्पर्शादिनाऽशुचेस्तादृशवचनाभावात्तदप्रसक्तेश्च देशान्तरीयेऽतिप्रसङ्गाच्च । तत्र समानदेशीयदर्शनयोग्यत्वादिना विशेषणे तत्र तत्रोपरागस्वरूपस्य निमित्तत्वावगतेः सर्वत्र तदेवास्तु किमर्धजरत्या । किञ्च क्वचिदुपरागस्य क्वचिद्दर्शनस्य निमित्तता श्रूयते तत्रावश्यम्भाविन्यन्यतरस्य निमित्तत्वे उपरागस्य दर्शनादर्शनयोरनुगतत्वेन नित्यस्य "य एतेन" इतिन्यायेन (अ० ५ पा० ३ अधि० १३ सू० ३७) निमित्तत्वं युक्तं न त्वनित्यस्य दर्शनस्य। अत एव "इडान्त आतिथ्य" इत्यत्र नित्यया पूर्वेडयैव तदन्तता नानित्ययोत्तरयेडयेत्युक्तम्। (अ० १० पा० ७ अधि० १३) किञ्च ग्रहणस्यासम्बन्धिकत्वान्निमित्तता युक्ता न तु दर्शनस्य ससम्बन्धिकस्य। उक्तं चैतदुत्तराधिकरणे उत्तराशब्दे। (९ पा० २ अधि० ५) किञ्चोपरागस्वरूपस्य निमित्तत्वे "न दोषो राहुदर्शने" इत्यनुवादानुपपत्तिः। न च प्रमादाद्बुद्धिपूर्वं वा निषेधातिक्रमात् सञ्जाते दर्शने नैमित्तिकं स्नानादि विधीयत इति वाच्यम् । निषेधातिक्रमजनितप्रत्यवायपरिहारस्योपायापेक्षत्वात् स्नानादेश्च प्रयोजनापेक्षत्वात् अश्वप्रतिग्रहेष्टिमन्त्रानुवचनयोः "न केशरिणो ददाति" ( अ० ३ पा० ४ अधि० १४ ) "यूपं नोपस्पृशेत्" ( अ० ९ पा० ३ अधि० ३ ) इति निषेधातिक्रमजनितप्रत्यवायपरिहारार्थत्ववत् स्नानादेरपि तदर्थत्वापत्तेः। तथाच निषेधैकवाक्यत्वेन तदतिक्रम एव स्नानादिविध्यापत्त्योपरागसामान्ये स्नानादिविधिर्दुर्लभः स्यात्। ननु द्वितीयपूर्वपक्षे अश्वप्रतिग्रहेष्टेरर्थवादेन दोषनिर्घातार्थत्वावगमाद्दोषस्य च निषिद्धविषयत्वान्मन्त्रवचनस्य च "तस्माद्यूपो नोपस्पृश्य" इति प्रक्रम्य विधानाद्युक्तं प्रत्यवायपरिहारार्थत्वम्। इह तु निषेधमनारभ्य दर्शने निमित्तनैमित्तिकविधानान्निषेधैकवाक्यत्वाभावान्न तदतिक्रमजन्यप्रत्यवायपरिहारार्थता। किन्तु कथञ्चिदपि विधितो निषेधाभावाद्वा निषेधातिक्रमाद्वा प्रसक्तं दर्शनमनूद्य यो दर्शनवान् स स्नायादितिविधानात् सुलभतरः सामान्यविधिः स्यादिति चेत्, न। तथाप्यनतिक्रान्तनिषेधस्याशौचिनोऽनधिकारस्य दुष्परिहरत्वात्। तथा च लैङ्गवचनविरोधः।तस्माद् यदि दर्शनमाशौचजनकं तत आशौचिनोऽनधिकारः, यदि स्वरूपसन्नुपराग आशौचजनकस्ततः सर्वेषामनधिकारप्रसङ्गः। किं बहुना बुद्धिपूर्वकारी बलान्निमित्तं सम्पाद्य न कोऽपि दुःखाकरे स्नानादौ प्रवर्त्ततेति सकलो

विधिरप्रमाणीकृतः स्यात्। किञ्च सङ्क्रमे पूर्वोत्तरकालयोः पुण्यत्वम् उपरागे तु यावद्दर्शनविषयता तावदेव। चाक्षुषज्ञानविषयतासमकालं स्नानाद्यनुष्ठेयमित्यर्थः सम्पद्यते। न चैतत् सम्भवति दर्शनस्नानयो-रूर्ध्वाधोमुखसाध्यत्वेन विरोधात्। न च दर्शे भ्रमप्रमासाधारणत्वाज्जले प्रतिबिम्बभ्रमवतः स एवायं चन्द्र इति बिम्बप्रत्यभिज्ञाप्रमावतो वा स्नानाविरोध इति वाच्यम्। श्राद्धादिविरोधस्य दुष्परिहरत्वात्। "नो-परक्तं न वारिस्थम्" इति निषेधाच्च। अत एव नोपघातान्निवद्दर्श-नाविशिष्ट उपरागो निमित्तं पूर्वोक्तदोषानातिवृत्तेः। विशिष्टोद्देशे वा-क्यभेदाच्च। न चोद्देश्यविशेषणं दर्शनं विवक्षितं ग्रहविरुभयत्ववदवि-वक्षितत्वात्।

नन्वित्थं व्याकुलयतो दर्शनस्य मास्तु निमित्तत्वं किन्तु नी-हारकर्तृकसन्ध्याहरणे दर्शनविशिष्टजपविधिवदुपराग एव निमित्ते दर्शनविशिष्टं स्नानादि तत्तद्वाक्यविहितस्नानाद्यनुवादेन दर्शनमात्रं वा विधीयते। निमित्तनिश्चयस्तु भवदिष्ट एवास्तु। नैमित्तिकस्वरूपालोच-नेनैव चान्धादिनिवृत्तिः एकैकाग्न्यादिनाश इवाग्न्याधानस्य भविष्यति। अथ वावगतेऽङ्गत्वे दृष्टार्थत्वादारुण्यस्यैकहायनीपरिच्छेदकतयेव दर्श-नस्यैव निमित्तनिश्चयत्वेनाधिकारसम्पादनोपयोगिता भविष्यति, नो-परक्तमित्यादिनिषेधस्य वैधेऽप्रवृत्तेर्नाशुचौ राहुतारका इति निषेधस्यै-तन्मते दर्शनोत्तरं प्रवृत्तेः सर्वेषामधिकारो भविष्यतीति युक्तोऽयं पन्था इति चेत्, न युक्तः। तत्र तावन्न दर्शनशब्दश्चाक्षुषज्ञानवचनः षड्दर्श-नानि याज्ञिकदर्शनमित्यादेर्निश्चयमात्रेऽप्यभियुक्तप्रयोगात्। "आत्मा वारे द्रष्टव्य" इति श्रुतेश्च। "स ईक्षाञ्चक्रे" "ईक्षतेर्नाशब्दम्" इतीश्व-रज्ञानस्य दृश्यर्थेक्षतिनाभिधानाच्च।

ऐतरेयेऽपि–ऋता वा यस्य रोदसी इति शंसति चक्षुर्वाऋतं तस्माद्य-स्तरो विवदमानयोराहाहमनुष्ठया चक्षुषादर्शमिति तस्य श्रद्दधाति।

इत्यत्र चक्षुर्ग्रहणानर्थक्याच्च। अदर्शमित्येतावतैव चाक्षुषज्ञानला-भात् इत्थम्भूतलक्षणे तृतीयाविधानात् छात्रेणोपाध्यायमद्राक्षीदित्युदा-हरणात्। तस्मात् ज्ञानमात्रमपि दृश्यर्थः। अत एव—

रजसो दर्शने नारी त्रिरात्रमशुचिर्भवेत्।

इति धर्मशास्त्रम्। चाक्षुषप्रयोगप्राचुर्यं तु पूर्वपूर्वप्रयोगात् गोशब्द-स्येव पशुगवि। अस्तु वा चाक्षुषज्ञानवाचिता तथापि न दर्शने विधिः स-म्भवति तस्य पक्षप्राप्तत्वेऽपूर्वाविध्यसम्भवात्, अनेकोद्देशेन विधाने वा-क्यभेदाच्च। अथ दर्शनानियमविशिष्टस्नानादि विधीयत इति मतम्,

तथापि नान्धादिनिवृत्तिः सुवचा। तान् प्रत्यपि नैमित्तिकविधिप्रवृत्तेः। न हि काम्य इव नैमित्तिकेषु सर्वाङ्गोपसंहारः निमित्तत्वव्याघातात्। तदेव हि निमित्तं यत् स्वसत्तायामवश्यमनुष्ठापयति। अननुष्ठापकस्य निमित्तत्वानुपपत्तेः। न हि सर्वदा सर्वः साङ्गमनुष्ठातुं समर्थः। तस्मात् किञ्चिदङ्गहानेनापि नैमित्तिकाधिकारादन्धादीनां मेघच्छन्ने वा दर्शनरूपाङ्गलोपेऽपि स्नानाद्यधिकारो दुर्निवारः। अत एव न नैमित्तिकानुरोधेन निमित्तसङ्कोचः निमित्तश्रुतिव्याघातात्। "यस्योभावग्नी" (अ० ६ पा० ४ अधि०८) इत्यत्र तु अग्न्यनुगमनमात्रस्य निमित्तत्वे उभयाग्निनिष्पादकतया कॢप्तस्याग्न्याधेयस्यैकैकाग्निजननसामर्थ्याभावेन प्रधानस्यैव विध्ययोगादाख्यातासमानाधिकरणसुबन्तस्य च व्यवहितपरामर्शकत्वेन प्रकरणान्तराभावेन कर्मभेदाभावादगत्या निमित्तसङ्कोचः। न चेह प्रधानभूतस्नानादिनान्धादेर्विरोधो येन तदतिरिक्तविषयता कल्प्येत। न चैवमन्धादेरप्याधानाधिकारः स्यादिति वाच्यम्। तस्य स्वरूपतो नित्यत्वाभावात्तथात्वे चेष्टापत्तेः। व्युत्पादितं चैतद्भट्टसोमेश्वरेण। किञ्च प्रतिप्रधानन्यायेन स्नानश्राद्धाद्यर्थं दर्शनावृत्तिप्रसङ्गः। उपरागमहाकालैक्येऽपि ग्रहकालाम्नातसाकमेधावयवानामनीकवत्यादीनां प्रातरादिकालेषु साङ्गप्रयोगविधिवत् "ग्रस्यमाने भवेत् स्नानं" इत्यादिकालभेदभिन्नस्नानादिप्रयोगविधिपरिगृहीतत्वात्। न चाधानयूपन्यायेन तन्त्रता। "वसन्ते ब्राह्मणोऽग्नीनादधीत" "दीक्षासु यूपं छिनत्ति" इतिवत् (अ०११पा०२ अधि०३) स्वतन्त्रकालानाम्नानात्। न च यूपाहुतिवत्तन्त्रं (अ०११पा०२ अधि०७) "यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति" इत्यत्र यूपैकादशिन्यामन्तिकदेशैक्येन तथा, इह तु प्रधानदेशभेदाद्वैषम्यम्। न च स्वरुन्यायः। (अ०११पा०३अधि०५) तत्र यूपस्य तन्त्रत्वेन तदनुनिष्पादिप्रथमशकलस्यैकत्वात् तद्रूपत्वात् स्वरोस्तन्त्रता युक्ता। इह तु न तथा हेत्वभावात्। तस्मादावृत्तिर्दुष्परिहरा। न च दर्शनस्य स्नानमात्राङ्गत्वाच्छ्राद्धादौ च तदुत्तरकालत्वस्य स्नानोत्तरत्वेनार्थसिद्धत्वादनावृत्तिरिति वाच्यम्।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।

इति श्राद्धाद्यङ्गत्वावगमात्। ननु दर्शनस्य निमित्तनिश्चयत्वेनाधिकारसम्पादनोपयोगितयाङ्गत्वात् सकृद्दर्शनेऽपि तन्निश्चयस्य जातत्वादनावृत्तिरितिचेत्, न,। अनुष्ठानकालीनस्य निमित्तनिश्चयस्यापेक्षितत्वादनुष्ठेयार्थस्मरणवत्। अन्यथा मध्याह्नकालीनजीवनवतोऽप्यग्निहोत्राधिकारापत्तेः। अथ तत्र सायङ्कालावच्छिन्नजीवननिश्चयवतोऽधिका-

रस्तदा प्रकृतेऽपि अस्यमानादिकालावच्छिन्नोपरागदर्शनवतः स्नाना-दावधिकार इति तुल्यः। किञ्च स्पर्शस्य भक्ताश्लेषनिमित्तज्यायां पूर्व-कर्त्तव्यावाहन इव ज्योतिःशास्त्रादिना प्रयत्नानपनेयप्रतिबन्धकराहि-त्यरूपयोग्यताया अनिश्चयात्तद्विशिष्टदर्शननिश्चयाभावादुपरागपूर्वका-लकर्त्तव्यमहादानाङ्गभूताधिवासनादौ त्रिरात्रोपवासादौ च निष्कम्पं न कोऽपि प्रवर्त्तेत। किञ्च दर्शनस्य निमित्तत्वे उपरागे स्नायादित्यादौ उपरागादिपदे दर्शनलक्षणाप्रसङ्गः। उपरागस्य निमित्तत्वे दर्शनेऽपि सा तुल्यैवेतिचेत्, सत्यम्। राहुदर्शने स्नायादिति सप्तमीयुक्तवाक्येषु "यस्य च भावेन भावलक्षणम्'(२।३।३७)इति भावलक्षणविहितसप्तम्या 'गोषु दुह्यमानासु गत' इत्यत्र दोहनस्य गमनकाललक्षकत्ववत् दृशेः काललक्षणार्थत्वावश्यम्भावात्तत्काले च स्नानादेः कर्त्तुमशक्यत्वात् "सकृत्प्रवृत्ताया" इतिन्यायेन योग्यतालक्षणाया अपि तत्रैव उचितत्वा-त्। यस्य गोर्भावेन दोहनक्रियारूपधात्वर्थेन भावस्य गमनस्य लक्षण-मुपलक्षणं गमनपरिच्छेदकालादिप्रतिपादनं तत्र सप्तमी स्यादिति सू-त्रार्थः। अत एव सप्तम्यन्तदृशियुक्तेषु न दर्शनविधिः प्रसिद्धस्य लक्ष-णत्वादप्रसिद्धस्य तद्योगात् अभिशब्दादिवद्भावलक्षणविहितसप्तम्या विधिशक्तिप्रतिबन्धात्। एवं च क्त्वान्तेष्वप्युपरागदर्शनपदयुक्तवाक्य-क्लृप्तन्यायेन योग्यताविशिष्टोपरागलक्षणा सुलभा एकमूलकल्पना-लाघवात्। किञ्च न क्त्वान्तेषु दर्शनविधिः क्त्वोऽविधायकत्वात्स्ना-त्यादेः परस्य तु विधेः स्नानादिविधायकत्वाद्विशिष्टविधौ च लक्षणा पत्तेरार्थिकानेकदर्शनतदुत्तरकालत्वसमानकर्तृकत्वविध्यन्तरकल्पनाप-त्तेश्च। उपरागलक्षणायां तु लक्षणैव केवला। निमित्तबलादेवोत्तरकाल-त्वादिलाभात्। ततश्चायमर्थः, अनुवादस्यात्यन्तानर्थक्यपरिहाराय—

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित्॥

इतिदेशान्तरीयोपरागस्य पर्युदासात् समाने देशे चाक्षुषत्वयोग्य-मुपरागं शास्त्रतो ज्ञात्वा तत्तत्काले स्नानादि कुर्यादिति।

जन्मराश्यादौ ग्रहणे दोषस्तत्र च शान्तिकानि शान्तिप्रकाशे द्रष्टव्यानि। अत्र मन्त्रदीक्षाग्रहणे मासर्क्षादि न शोध्यम्।

सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्॥
चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते॥

इति सारसङ्ग्रहादौ वचनात्। अत्र पुरश्चरणविधिः पुरश्चरणचन्द्रिकायाम्—

ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः।
तथा समुद्रगामिन्या नाभिमात्रे जले स्थितः॥
यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः।
ग्रहणादिविमोक्षान्तं जपेन्मत्रं समाहितः॥
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत्।
तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम्॥
ततो मन्त्रप्रसिद्ध्यर्थं गुरुं सम्पूज्य तोषयेत्।
एवं च मन्त्रसिद्धिः स्याद्देवता च प्रसीदति॥ इति।

तत्रैव—

होमाशक्तौ जपं कुर्याद्धोमसङ्ख्याचतुर्गुणम्।
षड्गुणं चाष्टगुणितं यथासङ्ख्यं द्विजातयः॥

होमस्थानापन्नो जपो होमकाल एव स्थानापत्तिधर्मलाभात्। ग्रहणादिमोक्षान्तकालपरिच्छिन्नस्य जपस्य चातुर्गुण्यविधानात्तस्य च तत्रासम्भवाच्च। पुरश्चरणं च न ग्रस्तोदये ग्रस्तास्ते च भवति। स्पर्शादिमोक्षपर्यन्तत्वासिद्धेः। स्पर्शमोक्षयोश्च दर्शनयोग्ययोरेव प्रयोजकत्वात्। "यावद्दर्शनगोचर" इति वचनात्। अत एव तच्छ्राद्धाद्यपि पुरश्चरणानुष्ठातृणा भवति काम्येन नित्यस्य बाधाच्चेति कश्चित्। वस्तुतस्तु काम्यविधेः श्राद्धाद्यनधिकारिणं प्रत्यपि चारितार्थत्वान्न नित्यबाधकत्वम्। गोदोहनोक्थ्यादिस्तु प्रणयनज्योतिष्टोमाश्रितत्वाच्चमसाग्निष्टोमसंस्थाबाधं विना निवेशासम्भवाद्बाधकेति वैषम्यम्। अत्र मङ्गलकृत्ये कालनिषेधो हेमाद्रौ—

त्रयोदश्यादिकं वर्ज्यं दिनानां नवकं ध्रुवम्।
मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः॥

तथा—

द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः॥ इति।

अयं चावश्यकानावश्यककार्यविषयतया व्यवस्थापनीयः।

इति ग्रहणकालनिर्णयः।

## अथैकभक्तनिर्णयः।

तत्स्वरूपं चोक्तं स्कन्दपुराणे—

दिनार्धसमयेऽतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि॥

अत्र एकभक्तमितियौगिकेन नाम्ना द्वितीयभोजननिवृत्तिः । नियमेनेति सामान्यतो विहितव्रतधर्मप्राप्त्यर्थम् । तेन द्वितीयभोजनाभावसहकृतं दिवाभोजनम् एकभक्तशब्दार्थः । अत्र विशेषमाह—

देवलः,

दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तं तु तत्प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥ इति ।
अस्य च मध्याह्नो मुख्यः कालः ।
मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ॥

इति पाद्मोक्तेः । सोऽपि न सम्पूर्णः । किन्तु दिनार्द्धोत्तरसमय एव "दिनार्द्धसमयेऽतीते" इतिवचनात् । मध्याह्नोऽत्र त्रेधाविभागेनेति हेमाद्रिः पञ्चधाविभागेनेति तु माधवः । अन्येतु विनिगमनाविरहात् पञ्चधात्रेधाविभागान्यतरविभागेनावच्छिन्नोत्तरकालो मुख्यकाल इत्याहुः । गौणकालस्तु ततोऽस्तमयावधि दिवैवेत्यभ्यनुज्ञानात् । तत्र दिनद्वये तद्व्याप्तौ तत्स्पर्शे वा पूर्वैव । गौणकालव्याप्तेः सत्त्वात् । मुख्यकालास्पर्शेऽपि चैकभक्तानुष्ठानं मुख्यकाल एव—

तिथ्यादिषु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।
तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मसु ॥

इति हेमाद्रिधृतवचनात् । पूर्वेद्युः पूर्वतिथ्यादिषु । क्षयवृद्धिसाम्यानि च सर्वत्र षष्टिघटिकापेक्षया न तु पूर्वतिथ्याद्यपेक्षयेति कश्चित् । हेमाद्रिस्तु दिनद्वये कर्मकालव्याप्तौ युग्मवाक्यान्निर्णयः ।

द्वितीयादिकयुग्मानां पूज्यतानियमादिषु ।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥

इतिवचनेन नियमादिष्वत्यादिशब्देनैकभक्तोपादानादेकभक्तेऽपि युग्मवाक्यप्रवृत्तेर्वक्तुं शक्यत्वात् । अस्पर्शैकदेशसमव्याप्त्योस्तु गौणकालव्याप्त्या निर्णय इत्याह । तन्न । अर्द्धजरतीयतापत्तेः । न चायं युग्मवाक्यस्य विषयः । कालशास्त्रस्य प्राबल्यात् । यथा हि मुख्यकालव्याप्त्यनुरोधेन निर्णयः सम्भवति न युग्मवाक्यादरः । एवं गौणकालव्याप्तावपि । अन्यथा हि—

स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः ।

इति सामान्यवाक्यादेव गौणकालप्राप्तौ पुनरेकभक्ते तद्विधानानर्थक्यापत्तेः । तेन यत्र विशिष्य गौणकालविधिस्तत्र तद्व्याप्त्यापि निर्णय इति सिद्धम् । यत्तु अन्याङ्गभूतमेकभक्तं तत प्रधाने निर्णीतायां तिथौ मध्याह्ने कार्यम् । यत्तु प्रधानं मध्याह्नकालिकं तत्रैकभक्तं गौणकालेऽपि

कार्यम्। "अङ्गगुणविरोधे च तादर्थ्यात्" इतिन्यायात्। (अ० १२ (पा० २ अधि० ९ सू० २५) अत एव यत्र प्रधानं सायाह्नादिकालिकं तत्र रात्रावप्येकभक्तानुष्ठानमविरुद्धम्। यत्तूपवासप्रतिनिधिभूतमेकभक्तं तत् तद्योग्यतिथौ मध्याह्ने कार्यम्।

इत्येकभक्तनिर्णयः।

अथ नक्तनिर्णयः।

तच्च दिवाभोजनाभावविशिष्टरात्रिभोजनरूपम्। केचित्तु न नक्तस्य भोजनरूपत्वनियमः। किन्तु प्रायिकं तस्य भोजनरूपत्वम्। अत एव नवरात्रव्रतस्यापि नक्तव्रतत्वं माधवाद्युक्तं सङ्गच्छत इत्याहुः। तत्र च प्रदोषव्यापिनी ग्राह्या।

प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा।

इति वत्सवचनात्। प्रदोषश्च सूर्यास्तोत्तरत्रिमुहूर्त्तात्मकः।

त्रिमुहूर्त्तः प्रदोषः स्याद्भानावस्तं गते सति।
नक्तं तत्र प्रकुर्वीत इति शास्त्रविनिश्चयः॥

इति व्यासोक्तेः। यस्तु—

यदा तु द्विगुणा च्छायां कुर्वंस्तपति भास्करः।
तत्र नक्तं विजानीयान्न नक्तं निशि भोजनम्॥

इति सौरधर्म्मादिषु दिनान्त्यमुहूर्त्तात्मको द्विगुणच्छायोपलक्षितः कालो विहितः स गौणः।

मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप!॥

इति भविष्यवचने नक्षत्रदर्शनरूपकालस्य स्वसम्मतत्वेन मुख्यत्वप्रतीतेः। अन्तिममुहूर्त्तपूर्वभाविमुहूर्त्तद्वयं च गौणतरः कालः।

प्रदोषव्यापिनी यत्र त्रिमुहूर्त्ता दिवा यदि।
तदा नक्तव्रतं कुर्यात्।

इति कौर्म्मोक्तेः। एतस्यापि गौणत्वं पूर्वोक्तयुक्तेरेव। गौणतरत्वं तु मुख्यकालविप्रकर्षात्। मुख्यकालेऽपि आद्यमुहूर्त्तद्वयं मुख्यतरम्।

निशानक्तं तु विज्ञेयं यामार्द्धे प्रथमे सदा।

इति वचनात्। यस्तु—

चत्वारीमानि कर्म्माणि सन्ध्यायां परिवर्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम्॥

इति सन्ध्यायां भोजननिषेधस्तत्र सन्ध्याशब्दो नक्षत्रदर्शनपर्यन्त-

कालपरः ।

नक्षत्रदर्शनात् सन्ध्या सायं तत्परतः स्थितम् ।

इति वचनान्तरैकवाक्यत्वात् । यत्तु

सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ।

इति घटिकात्रयेऽपि सन्ध्याशब्दः स सन्ध्यागर्जितादौ बोध्यः ।

अन्ये तु निषेधस्य रागप्राप्तभोजनविषयत्वान्नक्तभोजनस्य विहितत्वान्न निषेधविषयत्वम् । अत एव रविवारादिप्रयुक्तरात्रिभोजननिषेधे सत्यपि तत्र नक्तानुष्ठानमुक्तं हेमाद्रिप्रभृतिभिः । अतश्च त्रिघटिकात्मकसन्ध्यायामपि नक्तं कार्यमित्याहुः । वस्तुतस्तु विधिनिषेधयोरविरोधात् त्रिघटिकोत्तरमेव नक्तं कार्यं मुख्यकाललाभात् । अन्यथा "न कलञ्जं भक्षयेत्" इत्यस्यापि विहिताश्वदानेऽप्रवृत्तेरश्वानामपि "तस्य द्वादशशतं" इत्यत्र तस्येति तच्छब्देन परामर्शात् द्वादशशतापत्तिः । एवं रविवारादौ विधिनिषेधयोर्विरोधाभाव एव युक्तम् । यत्तु—

ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः ।

दिनान्ते तेऽपि भुञ्जीरन्निषेधाद्रात्रिभोजने ॥

इति भविष्यपुराणवचनं तद् भानुसप्तम्यादिविहितसौरनक्तविषयम् ।

त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।

तस्यां सौरं चरेन्नक्तमहन्येव तु भोजनम् ॥

इतिसुमन्तुना एवकारेण सौरनक्ते सामान्यतः प्राप्तरात्रिभोजनस्य निषेधात् । माधवस्तु "ये त्वादित्यदिने" इति वाक्यादादित्यवारादौ दिवैव गौणकाले नक्तमित्याह । एवं यतिविधवाधिकारिकमपि नक्तं दिवैव कार्यम् ।

नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः ।

यतिश्च विधवा चैव कुर्यात् तत् सदिवाकरम् ॥

इति वचनात् । तदेवं गृहस्थानां प्रदोष एव मुख्यो नक्तकालः । तत्र दिनद्वये मुख्यकालव्याप्तिरेव तदस्पर्शो वा परा । गौणकाललाभात् । अस्पर्शे च नक्तभक्तवन्मुख्यकाले भोजनं किन्तु सायाह्न एव ।

प्रदोषे यदि न स्याच्चेद्दिवानक्तं विधीयते ।

आत्मनो द्विगुणा च्छाया मन्दीभवति भास्करे ॥

तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।

एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् ॥

कुर्यान्नक्तव्रती नक्तं फलं भवति निश्चितम् ।

इतिस्कान्दोक्तेः । एवं सौरयतिनक्तेऽपि सायाह्नस्य मुख्यकालत्वात्त-

व्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ तदस्पर्शे वा पूर्वैव । तत्र सायान्हरूपस्य मुख्यस्य प्रदोषरूपस्य च गौणस्य कालस्य सत्त्वात् । अयं च निर्णयो न भोजनरूप एव नक्ते किन्तु पूजादिरूपेऽपि द्रष्टव्यः । न्यायाविशेषात् । अन्याङ्ग उपवासप्रतिनिधौ वा नक्ते तु एकभक्तवदेव निर्णयः ।

इति नक्तनिर्णयः ।

अथ नक्तैकभक्तसन्निपाते निर्णयः ।

तत्र यदेकभक्तनक्तादिविरुद्धं तिथिद्वयप्रयुक्तमेकस्मिन् दिने प्राप्नोति तत्र पूर्वप्रारब्धयोर्द्वयोः पूर्वतिथिप्रयुक्तमनुपसञ्जातविरोधित्वान्मुख्यकल्पेन कार्यम्, इतरत्तु अनुकल्पयेत् । इदं च यद्युत्तरदिने द्वितीयगौणकालो न लभ्यते तदा । तल्लाभे तु तत्रैव । कालस्यात्यन्तबाधाभावे कर्त्रनुरोधस्यापि न्याय्यत्वात् ।

इति नक्तैकभक्तादिसन्निपाते निर्णयः ।

अथायाचितनिर्णयः ।

तच्च याच्ञाराहित्येन लब्धस्य सकृद्भोजनम् । अन्ये तु याच्ञावर्जनसङ्कल्प एवायाचितमित्याहुः । तस्य चोपवासवदहोरात्रसाध्यत्वात्तदुभययोगिनी तिथिर्ग्राह्या । अन्यतरत्र सत्त्वे त्वहर्व्यापिनी ग्राह्या । "अहःसु तिथयः पुण्या" इत्यादिजाबालिवचनात् । अयाचितान्नभोजनं तु यदेव लभ्यते तदेव दिवा रात्रौ वाऽनिषिद्धकाले सकृदेव कार्यम् । अलाभे तु न कापि क्षतिः ।

इत्ययाचितनिर्णयः ।

अथ नक्षत्रोपवासनिर्णयः ।

तच्चास्तमयसम्बन्धि ग्राह्यम् ।

उपोषितव्यं येनास्तं याति चैव तु भास्करः ।
यत्र वा युज्यते राम ! निशीथः शशिना सह ॥

इतिविष्णुधर्म्मोत्तरात् । दिनद्वयेऽस्तमयसम्बन्धे वा पूर्वमेव निशीथव्याप्तेः सत्त्वात् ।

इति नक्षत्रोपवासनिर्णयः ।

अथ सङ्क्रान्तिनिर्णयः ।

तत्र सङ्क्रमस्वरूपं तावत् रविबिम्बमध्यपरमाणोर्मेषादिराश्याद्यपरमाणोश्च सम्बन्धः । स च ज्योतिःशास्त्रे प्रसिद्धः । अतश्च राशीनां द्वादश-

त्वात्तेऽपि द्वादश भवन्ति । तथा च—

देवीपुराणे—

द्वादशैव समाख्याताः समाः सङ्क्रान्तिकल्पनाः ।

कल्पना=भेदाः । ते च सङ्क्रान्तिसामान्यनिमित्तकेषु विधिप्रतिषेधेषु समाः साधारणा इत्यर्थः । माधवीये तु समा सङ्क्रान्तिकल्पनेति पाठः । तदा समा वर्षम् एकैकवर्षसम्बन्धिन्य इत्यर्थः । मलमासाधिक्येऽपि सङ्क्रान्त्यो द्वादशैवेत्येवमर्थमेवकारः । एतासां च पुण्यकालविशेष प्रतिपादनार्थमवान्तरसंज्ञा वसिष्ठेनोक्ताः ।

अयने द्वे विषुवे द्वे चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादश स्मृताः ॥
झषकर्कटसङ्क्रान्ती द्वे उदग्दक्षिणायने ।
विषुवे तु तुलामेषौ तयोर्मध्ये ततोऽपराः ॥
वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फले ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखी प्रोक्ता षडशीतिगुणा फले ॥

झषो मकरः । तयोः अयनविषुवतोर्मध्ये । अपराः षडशीतिविष्णुपद्यः । कालादर्शादौ तु गोलमध्ये ततोऽपरेतिपाठः । गोलं च विषुवायनाभ्यां युक्तं राशिचक्रं तन्मध्येऽपरा इत्यर्थः । अयं च निष्कृष्टोऽर्थः । कर्कमकरयोः क्रमेण दक्षिणायनोत्तरायण इति संज्ञा, तुलामेषयोर्विषुव इति, वृषवृश्चिककुम्भसिंहेषु विष्णुपदमिति, कन्यामिथुनधनुर्मीनेषु षडशीतिमुखमिति । एता एव च वारभेदेन (नक्षत्रभेदेन) च जाताः प्रत्येकं सप्तसंज्ञा भवन्ति । तथाच—

देवीपुराणे,

सूर्ये घोरा विधौ ध्वाङ्क्षी भौमे चैव महोदरी ।
बुधे मन्दाकिनी नाम मन्दा सुरपुरोहिते ॥
मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे ।
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ॥
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता ।
चरैर्महोदरी ज्ञेया क्रूरै ऋक्षैस्तु राक्षसी ॥
मिश्रिता चैव निर्दिष्टा मिश्रितैर्यदि सङ्क्रमः ॥ इति ।

ध्रुवाणि=उत्तरात्रयं रोहिणी च । मृदूनि=अनुराधाचित्रारेवतीमृगशीर्षाणि । क्षिप्राणि=अभिजिद्धस्ताश्विनीपुष्याः । उग्राणि=पूर्वात्रयं भरणी मघा

च। चराणि=पुनर्वसुश्रवणधनिष्ठास्वातीशतभिषाः। क्रूराणि=मूलज्येष्ठार्द्राऽश्लेषाः। मिश्राणि=कृत्तिकाविशाखा च। एतत्संज्ञाप्रयुक्तः पुण्यकालविशेषस्तु वक्ष्यते। अत्र च रविबिम्बमध्यपरमाणोर्मेषादिराश्याद्यपरमाणुसंयोगस्यातिसूक्ष्मकालीनत्वेन दुर्ज्ञेयत्वात्तत्रैकस्यापि विहितस्य स्नानादिकर्म्मणोऽनुष्ठातुमशक्यत्वेन बहूनां सुतरामशक्यत्वात्। सन्निहितकाले अनुष्ठानमर्थसिद्धं यथा सन्धिकालविहितयोर्दर्शपूर्णमासयोः सन्धावनुष्ठातुमशक्यत्वेन सन्निहितकाले करणम्। स च सन्निहितकालः किमुभयतः किंवान्यतरतः कियांश्चेत्यपेक्षायाम्—

देवलः,

सङ्क्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः।
तद्योगाच्चाप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः पवित्रिताः॥

तद्योगात्=सङ्क्रान्तियुक्तात् सूक्ष्मकालादध ऊर्ध्वं च मिलित्वा त्रिंशन्नाड्योऽत्र शास्त्रकारैः पवित्रिताः स्नानाद्यनुष्ठानयोग्याः कृता इत्यर्थः। इदं च उभयतः पञ्चदशघटिकापुण्यत्ववचनं रविबिम्बपरिमाणानां ज्योतिःशास्त्रे मतभेदेन भिन्नत्वाद्यन्मते स्पष्टभुक्त्यर्द्धं रविबिम्बं तन्मताभिप्रायेण द्रष्टव्यम्। एतन्मते सूक्ष्मकालात्पूर्वं पञ्चदशभिर्घटिकाभी रविबिम्बपूर्वभागस्य मेषादिराशिचक्रानुप्रवेशः। तदुत्तरकालं च तावतीभिरेव घटिकाभिरुत्तरभागस्यापि मेषादिराशिचक्रानुप्रवेशो ज्योतिःशास्त्रे प्रसिद्धः। अयमेव च भोग इत्युच्यते। तथा च—

देवीपुराणे,

अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः। इति।

यानि तु—

अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश।
कालः पुण्योऽर्कसङ्क्रान्तेर्विद्वद्भिः परिकीर्त्तितः॥

तथा,

नाड्यः षोडश पूर्वेण सङ्क्रान्तेरुत्तरेण च।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः॥

तथा,

सङ्क्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः।

इत्यादीनि शातातपमरीचिजाबालिवाक्यानि तानि यन्मते निजपञ्चदशांशयुक्तभुक्त्यर्थं रविबिम्बं तन्मताभिप्रायेण व्याख्येयानि। अतश्च बिम्बपरिमाणभेदेन षोडश पञ्चदश वा घटिका उभयतः प्रत्येकं पुण्यकाल इति सिद्धम्। हेमाद्रिरत्नाकरादिसम्मतोऽप्ययमर्थः। माधवमदनरत्ना·

दयस्तु—

तद्योगाच्चाप्यधश्चोर्द्ध्वं त्रिंशन्नाड्यः प्रकीर्त्तिताः ।

इति देवलवचनात् सङ्क्रान्तिकालात् पूर्वं त्रिंशन्नाड्यः पुण्याः पश्चाच्च त्रिंशन्नाड्यः पुण्याः । यानि तु पूर्वोक्तषोडशपञ्चदशघटिकापुण्यत्वप्रतिपादकानि वचनानि तानि पुण्याधिक्यप्रतिपादनार्थानीत्याहुः । इदं च पूर्वोत्तरकालयोः पुण्यत्ववचनं सर्वसङ्क्रान्तिसाधारणम् । अविशेषात् । यानि तु क्वचिदुत्तरत्र क्वचित् पूर्वत्र क्वचिदुभयत्रेत्येवं सङ्क्रान्तिविशेषकालविधायकानि वक्ष्यमाणवचनानि तानि पुण्याधिक्यप्रतिपादनार्थानि । हेमाद्रिमाधवादिसकलनिबन्धृस्वरसोऽप्येवम् । यत्त्वत्र श्रीदत्तरत्नाकरादिप्रभृतिभिर्मैथिलैः स्मार्त्तादिभिश्च गौडैरुक्तम्—"पूर्वोदाहृतोभयतः षोडशघटिकापुण्यत्वप्रतिपादकानां शातातपादिवचनानां विष्णुपदीमात्रविषयत्वम् इतरसङ्क्रान्तिषु वक्ष्यमाणरीत्या सर्वत्र विशेषस्योक्तत्वात् परिशेषेण षोडशघटीपुण्यत्वबोधकसामान्यवाक्यानां तन्मात्रविषयत्वस्यैव युक्तत्वात् । अतश्च—

पुण्यः कालोऽर्कसङ्क्रान्तेः प्राक् पश्चादपि षोडश ।

इति स्कन्दपुराणवचनेनाप्यमीषामुपसंहारो लाघवात्" इति, तन्न । शातातपेन—

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत् ।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥

इत्युपक्रमे अयनादावित्यादिशब्देन विषुवद्विष्णुपद्योरुपसङ्ग्रहात् सर्वसङ्क्रान्तिषु दानादिविधिप्रतीतेः सूक्ष्मकाले च दानाद्यनुपपत्तेः स्थूलकालापेक्षायाम् "अर्वाक् षोडश विज्ञेया" इत्याद्युपरितनेन वचनेन उभयतः षोडशघटिकारूपस्थूलकालविधेः सर्वसङ्क्रान्तिविषयत्वस्य स्पष्टत्वात् । न च स्पष्टस्य सामान्यविधेरुपसंहारो युज्यते । यथोक्तं भट्टपादैः—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । इति ।

अतश्चोपसंहारायोगात् सर्वविषयत्वमेव युक्तम् । एवं च सर्वसङ्क्रान्तिसाधारण्येन उभयतःषोडशघटिकापुण्यत्ववचनैः उभयतः पुण्यत्वे स्थिते विशेषवचनानि पुण्यातिशयार्थानि । तत्र—

वशिष्ठः,

मध्ये तु विषुवे पुण्यं प्राग्विष्णौ दक्षिणायने ।
षडशीतिमुखेऽतीते अतीते चोत्तरायणे ॥

मध्ये उभयत इति यावत् । प्राञ्चस्तु—

षाडशीतिमुखेऽतीते वृत्ते च विषुवद्वये ।

इति देवीपुराणवाक्यात् वृत्त इत्याहुः । वस्तुतस्तु वृत्तं वर्तनं भावे क्तः वर्त्तमानकाले इति अनन्तभट्टव्याख्यैव युक्ता । वशिष्ठवचनैकवाक्यतालाभात् । विष्णौ=विष्णुपद्याम् । इदं च विष्णुपदीषु प्राक् पुण्यत्ववचनं प्रशस्ततरत्वद्योतनार्थम् ।

पुण्यकालो विष्णुपद्याः प्राक् पश्चादपि षोडश ।

इति स्कन्दपुराणवचनेन पूर्वापरषोडशघटिकारूपपुण्यकालस्याप्युक्तत्वात् । अतश्च विष्णुपद्यां पराः षोडश घटिका इतरसङ्क्रान्त्यपेक्षया पुण्यतराः पूर्वाः षोडश पुण्यतमा इति व्यवस्था । हेमाद्रिमदनरत्नादिसम्मतोऽप्ययमर्थः । अन्ये तु विष्णुपदीपूर्वकालपुण्यत्वप्रतिपादकवाक्यस्य निर्मूलत्वात् स्कान्दवचनादुभयत एव षोडश घटिकाः पुण्यकाल इत्याहुः । षडशीतिमुखेऽतीते पुण्यतमत्वम् । तत्रापि—

षडशीत्यां व्यतीतायामष्टिरुक्तास्तु नाडिकाः ।
पुण्याख्या विष्णुपद्याश्च प्राक्पश्चादपि षोडश ॥

इति वचने चशब्देन इतरसङ्क्रान्त्यपेक्षया उभयतः पुण्यतरत्वस्य सूचितत्वात् । तथा—

वृद्धवशिष्ठोऽपि,

अतीतानागते पुण्ये द्वे उदग्दक्षिणायने ।
त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः परा ॥

ब्रह्मवैवर्त्ते तु मकरे तु दशाधिका इति चतुर्थपादः ।

बृहस्पतिरपि—

अयने विंशतिः पूर्वा मकरे विंशतिः परा ।

अयने=दक्षिणायने । अत्र सर्वत्र विरुद्धानां वचनानां पुण्याधिक्यपरत्वेन व्यवस्था द्रष्टव्या । अतश्च विंशत्यपेक्षया सामान्यवचनसिद्धषोडशघटिकारूपकालस्यापि पुण्यतरत्वं सिद्धं भवति । सन्निकृष्टत्वात् । विषुवविषये पुनः—

स एव—

वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ।

षडशीतिविषये वृद्धवशिष्ठः—

षडशीत्यां व्यतीतायामष्टिरुक्तास्तु नाडिकाः ।

अष्टिः षोडश । अष्टिच्छन्दसः षोडशाक्षरत्वात् । मदनरत्नादिसम्मतश्चायं पाठः । हेमाद्रिमाधवादौ तु षष्टिरिति पाठः । तं च हेमाद्रिः प्रत्येकं पञ्चदशेति मिलित्वा षष्टिरिति व्याख्यातवान् । विष्णुपद्यां तु सङ्ख्याविशेषस्य अश्रवणात् सामान्यवचनोक्ता एव षोडशघटिकाः पूर्वं पुण्याः ।

अत्र चायं निष्कृष्टोऽर्थः। तुलामेषयोः प्रागूर्ध्वं दश दश घटिकाः पुण्याः, कर्के विंशतिः पूर्वं मकरे ऊर्द्ध्वं, षडशीत्यां षोडश पराः, विष्णुपद्यां पूर्वा इति। एवं वारनक्षत्रप्रयुक्तमन्दादिसप्तसंज्ञासु सङ्क्रान्तिषु यत्—

त्रिचतुःपञ्चसप्ताष्टनवद्वादश एव च।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम्॥

इति देवीपुराणवचनं तदपि पुण्याधिक्यप्रतिपादनार्थं द्रष्टव्यम्। अत्र चैताः पूर्वभोगिन्य उत्तरभोगिन्यो उभयतोभोगिन्यो वा यदि दिवामध्याह्नादिषु जायन्ते तदा दिवैव तत्र तत्रोक्तप्रशस्तकाललाभात् सर्वत्र। यदा पूर्वभोगिन्यां सूर्योदयोत्तरम् अव्यवधानेन जायमानायामुत्तरभोगिन्यां वा अस्तात् पूर्वं जायमानायां दिवा पूर्वोत्तरौ प्रशस्तकालौ न लभ्यते तदा सामान्यवचनप्राप्तस्य पूर्वभोगिन्यामुत्तरस्य उत्तरभोगिन्यां वा पूर्वस्यैव कालस्य ग्रहणं न पुनः प्रशस्तकालभ्रान्त्या रात्रेरिति। तथा च—

वशिष्ठः,

अह्नि सङ्क्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम्।
रात्रौ सङ्क्रमणे भानोर्दिनार्द्धं स्नानदानयोः॥

अत्र हि पूर्वार्द्धम् अह्नि मध्याह्नादौ सङ्क्रमणेऽहःपुण्यत्वस्य पूर्वोत्तरनाडीपुण्यवचनैरेव सिद्धत्वान्न यथाश्रुतार्थपरं किन्तु उक्तविषये प्रशस्तकाललाभेन प्रसक्तस्य रात्रिपुण्यस्य प्रतिषेधार्थम्। अतश्चोदयानन्तरमेव पूर्वभोगिन्यामस्तात् पूर्वं वोत्तरभोगिन्यां जायमानायामहन्येव स्नानाद्यनुष्ठेयम्। यासु तु उभयतोभोगिनीषु उभयोरपि कालयोः साम्यं तासु दिवापि प्रशस्तकाललाभात् न रात्रावनुष्ठानप्रसङ्गः। माधवमदनरत्नादयोऽप्येवम्। रात्रिसङ्क्रमे तु यद्यपि—

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः।

इति वचनात्,

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च॥

इति वचनाच्च रात्रेरपि पुण्यकालत्वं प्राप्नोति, तथापि—

रात्रौ सङ्क्रमणे भानोर्दिवा कुर्यात्तु तत् क्रियाम्॥

इति गोभिलवचनेन दिवैव पुण्यकालः। स च न सम्पूर्णं दिनं किन्तु

रात्रौ सङ्क्रमणे भानोर्दिनार्द्धं स्नानदानयोः।

इति वशिष्ठवचनात् अर्द्धमेव। तदापि च यद्यर्द्धरात्रात् पूर्वं सङ्क्रमस्तदा पूर्वदिनस्य यद्यूर्ध्वं तदोत्तरस्य यदा तु अर्धरात्रे तदोभयोरिति

व्यवस्थितमित्याह—

स एव—

अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं सङ्क्रमणे चोर्ध्वमुदयात् प्रहरद्वयम् ॥
सम्पूर्णे अर्द्धरात्रे तु यदा सङ्क्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥

मध्याह्नः=आवर्त्तनम् । तच्च पूर्वदिनस्य, उदयश्चोत्तरदिनस्य सन्निधानात् । सम्पूर्णे=अर्द्धरात्रिदलद्वयसन्धौ । माधवस्तु तृतीयप्रहरस्य प्रथमघटिका द्वितीयस्य चान्त्येत्येवं घटिकाद्वयमर्द्धरात्रमित्याह । दिनद्वयं च न सम्पूर्णं किन्तु अर्द्धावच्छिन्नमेव ।

रात्रौ सङ्क्रमणे भानोर्दिनार्द्धं स्नानदानयोः ।

इति सामान्यतो रात्रिसङ्क्रमे दिनार्द्धपुण्यत्वस्यैवोपक्रमे अभिधानात् । अनन्तभट्टहेमाद्रिमदनरत्नादयोऽप्येवम् । कालादर्शमाधवादयस्तु—

सङ्क्रमस्तु निशीथे स्यात् षड्यामाः पूर्वपश्चिमाः ।
सङ्क्रान्तिकालो विज्ञेयस्तत्र स्नानादिकं चरेत् ॥

इति भविष्योत्तरपुराणवचनादर्द्धरात्रसङ्क्रमे कृत्स्नं दिनद्वयमित्याहुः । वस्तुतस्तु एतस्य अनन्तभट्टेन निर्मूलत्वस्योक्तत्वात् हेमाद्र्यादिव्याख्यैव ज्यायसी बहुसम्मता च । तस्मात् पूर्णे अर्द्धरात्रे सङ्क्रमे पूर्वदिनोत्तरार्द्धमुत्तरदिनपूर्वार्द्धं च पुण्यं सन्निधानात् । तदपि न समुच्चयेन किन्तु विकल्पेन अन्यथा प्रधानावृत्त्यापत्तेः, सोऽपि पूर्वदिनोत्तरार्द्धवर्त्तितिथ्या यद्यभिन्ना सङ्क्रमकालीना तिथिर्भवेत् तदा पूर्वदिनोत्तरार्द्धम्, यदा तु द्वितीयदिनपूर्वार्द्धतिथ्या अभिन्ना तदोत्तरदिनपूर्वार्द्धं ग्राह्यमित्येवं व्यवस्थितः । तथा च—

देवीपुराणे,

आदौ पुण्यं विजानीयात् यद्यभिन्ना तिथिर्भवेत् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि ॥

पूर्वार्द्धस्य अयमर्थः । अर्द्धरात्रसङ्क्रमे यदि पूर्वदिनोत्तरार्द्धे सङ्क्रमकाले च एकैव तिथिर्भवेत् तदादौ पूर्वदिनोत्तरार्धे पुण्यं जानीयादिति । यदि तु उत्तरदिनपूर्वार्धतिथ्याभिन्ना तदोत्तरदिनपूर्वार्धमित्यर्थसिद्धम् । अर्धरात्रोत्तरं सङ्क्रमे तु भिन्नायामभिन्नायां वा पूर्वदिनतिथौ परेऽहन्येवेत्युत्तरार्धार्थः । यदा तु अर्धरात्रसङ्क्रमकालीना तिथिर्दिनद्वयार्धयोरपि भवति तदा पूर्वभागिनीषु पूर्वदिनोत्तरार्धम् उत्तरभागिनीषु उत्तरदिनपूर्वार्धम् उभयतोभागिनीषु ऐच्छिको विकल्प इति

व्यवस्था । अनन्तभट्टमदनरत्नादयोऽप्येवम् । यत्त्वत्र श्रीदत्तेनोक्तम्—अभिन्नायां तिथौ पूर्वदिनपूर्वार्धे पुण्यं, भेदे तु "सम्पूर्णं तूभयोर्देयम्" इति देवीपुराणवचनादुभयत्रेति । तन्न । "सम्पूर्णं तूभयोर्देयम्" इति देवीपुराणेनोभयत्रदेयत्वे विहिते प्रधानावृत्त्यापत्तेः समुच्चयायोगात् अव्यवस्थितविकल्पे प्राप्ते "आदौ पुण्यं विजानीयात्" इत्युत्तरवचनेन व्यवस्थामात्रकरणे लाघवात् । तदयमत्र निष्कृष्टार्थः । अर्धरात्रात् पूर्वं सङ्क्रमे पूर्वदिनोत्तरार्धे तदुत्तरं सङ्क्रमे उत्तरदिनपूर्वार्धे निशीथसङ्क्रमे तु यदि पूर्वदिनोत्तरार्धवर्तितिथ्याऽभिन्नायां तिथौ सङ्क्रमः तदा पूर्वदिनोत्तरार्धे यदि तु उत्तरदिनपूर्वार्धवर्तितिथ्याऽभिन्नायां तिथौ सङ्क्रमस्तदा उत्तरदिनपूर्वार्धे यदा तु दिनद्वयार्धवर्तितिथ्याऽभिन्नायां तिथौ सङ्क्रमस्तदा पूर्वभोगिनीषु पूर्वदिनोत्तरार्धम् उत्तरभोगिनीषु उत्तरदिनपूर्वार्धम् उभयभोगिनीषु पाक्षिको विकल्प इति । यत्तु—

विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा ।
पूर्वोत्तरगतं रात्रौ भानोः सङ्क्रमणं भवेत् ॥
पूर्वाह्ने पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्ने च पञ्चैव श्रौते स्मार्ते च कर्मणि ॥

इति पूर्वापरदिनगतास्तमयोदयपूर्वोत्तरनाडीपुण्यत्वप्रतिपादकं निगमवचनं तत् अतिशयप्रदर्शनार्थं द्रष्टव्यम् । मदनरत्नेऽप्येवम् । इयं च रात्रिसङ्क्रमव्यवस्था अयनाभिन्नविषया पूर्वोदाहृतवसिष्ठवचनेन सकलस्य रात्रिनिर्णयस्य अयने "मुक्त्वा मकरकर्कटौ" इति पर्युदासात् । अतश्च तयोः कथमित्यपेक्षायां माधवमदनरत्नौ तावत्—

मिथुनात् कर्कसङ्क्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः ॥
कार्मुकं तु परित्यज्य झषं सङ्क्रमते रविः ।
प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि ॥

इत्यादिभविष्योत्तरवचनानुसारादर्द्धरात्रादूर्ध्वसङ्क्रमेऽपि कर्केऽहन्येव पुण्यं पूर्वं मकरे तु अर्द्धरात्रादधःसङ्क्रमेऽपि परेऽहन्येव । एवं च रात्रिसङ्क्रमेऽपि दिवापुण्यत्वविधानादर्थाद्रात्रौ स्नानादिप्रतिषेध उन्नीयते । केषु चित्तु वचनेषु रात्रिकर्त्तव्यतापि । यथात्रैव तावद्वसिष्ठवचने सर्वसङ्क्रान्तिसाधारणरात्रिसङ्क्रमणनिमित्तकादिवाकर्त्तव्यत्वस्यायने—"मुक्त्वा मकरकर्कटौ" इति पर्युदासात्तत्र रात्रावपि कर्त्तव्यता । अत एव—

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।

स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ॥

इति सामान्यतो याज्ञवल्क्यवचनमपि अयनविषयम्, अन्यथा इतरसङ्क्रान्तिषु दिवैव पुण्यत्वविधानादेतस्य निर्विषयत्वापत्तेः । यद्यपि चोदाहृतभविष्योत्तरादिवचनात् तत्रापि दिवापुण्यत्वविधिरस्त्येव तथापि "मुक्त्वा मकरकर्कटौ" इतिपर्युदासाद्रात्रिपुण्यत्वमप्यस्ति । अतश्च युक्तं सामान्यवचनस्यायनविषयत्वम् । एवं चायने रात्रिपुण्यत्वदिवापुण्यत्वयोर्विकल्पे देशाचाराद्व्यवस्थेति । हेमाद्रिस्तु—

प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ।

इतिपर्युदासो न सकलस्य रात्रिनिर्णयस्य किन्तु सन्निहितस्यार्द्धरात्रसङ्क्रमणनिमित्तकस्य दिनद्वयस्यैव । अतश्चायमर्थः । यथा इतरसङ्क्रान्तिषु अर्द्धरात्रे जायमानासु दिनद्वयं पुण्यं न तथा अयने तस्मिंस्तु अर्द्धरात्रे जायमाने पूर्वोदाहृतभविष्योत्तरवचनान्मकरे उत्तरं दिनं कर्के पूर्वं पुण्यम् । भविष्योत्तरवाक्ये हि न प्रदोष अर्द्धरात्रे वा जायमानाया मकरसङ्क्रान्तेः परदिने पुण्यं प्रभातेऽर्द्धरात्रे वा जायमानायाः कर्कसङ्क्रान्तेः पूर्वदिने पुण्यमिति प्रतिपाद्यते । तथा सति—

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा ।
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ॥
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि ।

इतिस्कन्दपुराणवचनविरोधापत्तेः । अतश्च भविष्योत्तरवचनमेवं व्याख्येयम् "प्रदोषे वार्द्धरात्रे वा" इत्यत्र वाशब्दो यथातथार्थे "वोपमानविकल्पयोः" इति निघण्टुस्मरणात् । तेनायमर्थः । यथा प्रदोषे जायमानाया मकरसङ्क्रान्तेः पूर्वदिनार्द्धे पुण्यं तथा अर्द्धरात्रे जायमानायाः परेऽहनीति । एवं प्रभातवाक्येऽपि । अतश्चार्द्धरात्रसङ्क्रमे मकरे उत्तरं दिनं कर्के पूर्वम्, अर्धरात्रादधः पश्चाद्वा सङ्क्रमे तु उभयत्रापि इतरसङ्क्रान्तिसरूप एव निर्णयः । न चैवं रात्रिपुण्यत्वप्रतिपादकानां याज्ञवल्क्यादिवचनानां निर्विषयत्वापत्तिः सर्वसङ्क्रान्तिषु रात्रिसङ्क्रमे दिवैव पुण्यकालाभिधानादितिवाच्यम् । उभयविधवचनदर्शनाद्रात्रिसङ्क्रमे रात्रौ दिवा च पुण्यकालः । "पापाः सन्निहिता" इतिवचनात्तु रात्रेः पुण्यतरत्वमिति हेमाद्रिप्रभृतयः । अनन्तभट्टस्तु दिवा प्रमादादिना असम्भवे रात्रावनुष्ठेयमित्याह । प्राच्यास्तु रात्रिसन्निहितदिनभागसङ्क्रान्तौ षोडशघटिकादिरूपविहितसमयेन रात्रेरपि व्यावृत्तत्वात्तद्विषयतया रात्रिपुण्यत्ववचनानामुपपत्तिरित्याहुः । अत्र च विहितं स्नानश्राद्धदानादि निषिद्धं च

यात्रामैथुनादि अन्यतोऽनुसन्धेयम्। रवे राशिसङ्क्रमवन्नक्षत्रसङ्क्रमे ग्रहान्तराणां च राशिनक्षत्रसङ्क्रमे स्नानाद्यनुष्ठानम्। तत्कालं चाह—

जैमिनिः,

नक्षत्रराश्यो रविसङ्क्रमे स्युरर्वाक् परत्रापि रसेन्दुनाड्यः।
पुण्यास्तथेन्दोस्त्रिधरापलैर्युगे एकैव नाडी मुनिभिः शुभोक्ता॥
नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि।
सार्द्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च शुक्रे सपलाश्चतस्रः॥
द्विनागनाड्यः पलसप्तयुक्ता शनैश्चरस्याभिहिताः सुपुण्याः।
आद्यन्तमध्ये जपहोमदानं कुर्वन्नवाप्नोति सुरेन्द्रधाम॥

अर्वाक् परत्रापीति सर्वत्र सम्बध्यते। रसेन्दुनाड्यः=षोडश घटिकाः। त्रिधरापलैः=त्रयोदशपलैः। सपलाः=एकपलाधिकाः। मनवश्चतुर्द्दशपलानि। नागा अष्टौ द्विगुणिताः षोडश। ग्रहान्तरसङ्क्रमे च रात्रौ जायमाने रात्रावेव स्नानादि कार्यं रविसङ्क्रमवत् दिवापुण्यत्ववचनाभावात्। काम्यं चेदं तत्र स्नानादिफलश्रवणात्।

रविसङ्क्रमणे प्राप्ते न स्नायाद्यस्तु मानवः।
सप्तजन्म भवद्रोगी निर्धनश्चैव जायते॥

इतिवन्नित्यत्वाश्रवणाच्च।

इतिसङ्क्रान्तिनिर्णयः।

अथ मलमासो निर्णीयते।

मलमासत्वं च एकमात्रसङ्क्रान्तिराहित्ये सति शुक्लादिमासत्वम्। एकमात्रराहित्यं चासङ्क्रान्तत्वेन सङ्क्रान्तिद्वयवत्त्वेन च भवतीति द्वेधा मलमासः अधिकमासः क्षयमासश्चेति। तथाच—

काठकगृह्ये,

यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः॥ इति।

न सङ्क्रान्तिरित्यनेनाधिमासस्य ग्रहणम्। सङ्क्रान्तिद्वयमित्यनेन क्षयस्य। तत्राधिमासस्वरूपमाह—

भृगुः,

एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत्।
हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासकः॥ इति।

दर्शद्वयं=दर्शान्तद्वयम्। "दर्शः सूर्येन्दुसङ्गमे" इतिदर्शशब्दस्य सङ्गमे मुख्यत्वात्। सङ्गमस्य चामावास्यान्त्यक्षण एव ज्योतिःशास्त्रे प्रसिद्धत्वात्। मासश्चात्र चान्द्र एव मलमासप्रयोजकः।

चान्द्रो मासो ह्यसङ्क्रान्तो मलमासः प्रकीर्त्तितः।

इति ब्रह्मसिद्धान्तात्। सोऽपि च शुक्लादिरेव।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु रविर्यदि गच्छेत् कदाचन।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः॥

इति लघुहारीतोक्तेः। आद्यद्वितीयशब्दाभ्यां तस्येतरमासापेक्षया द्वैगुण्यम् उत्तरमाससंज्ञत्वं च सूचयति। अत एव—

ज्योतिः पितामहः,

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः।
पूर्वमर्द्धं परित्यज्य कर्त्तव्या चोत्तरे क्रिया॥ इति।

यत्तु "त्रयोदशमासाः संवत्सर" इतिश्रुतिवचनं तत् त्रिंशद्दिवसमासाभिप्रायेण। मासविशेषसंज्ञत्वं चास्य चैत्रादिलक्षणाक्रान्तत्वात्। तथाहि—

मीनादिस्थो रविर्येषामारम्भप्रथमे क्षणे।
भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः॥

इति व्यासेन मीनादिस्थे रवौ प्रतिपदाद्यलक्षणसम्बन्धेन चैत्रादिलक्षणमुक्तम्। शक्यते चेदमधिमासेऽपि योजयितुम्। यत्तु—

मेषगरविसङ्क्रान्तिः शशिमासे भवति यत्र तच्चैत्रम्।
एवं वैशाखाद्या वृषादिसङ्क्रान्तियोगेन॥

इतिब्रह्मगुप्तोक्तं चैत्रादिलक्षणं तच्छुद्धमासाभिप्रायेण प्रायिकम् न तु मुख्यं मलमासाव्यापकत्वात्। अन्यथा वृद्धव्यवहारे मलमासे चैत्रादिशब्दप्रयोगानुपपत्तेः। या तु—

वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत्।
नैर्ऋतैर्यातुधानाद्यैः समाक्रान्तो विनामकः॥

इति ज्योतिःशास्त्रे तस्य नामशून्यत्वोक्तिः सा विरुद्धमलिम्लुचादिनामकत्वात्। विद्यमानस्यापि वा नाम्नस्तत्प्रयुक्तकर्मानर्हत्वेनासत्कल्पत्वात्। अथ वा ब्रह्मगुप्तोक्तमेव लक्षणं मुख्यं न तु व्यासोक्तं क्षयेऽसम्भवात्। अधिकस्य च षष्टिदिनात्मकत्वात् तेन च मेषादिसङ्क्रान्तिसम्भवात्। तेन सम्भवन्ति मलमासस्य चैत्रादयः संज्ञाः। अधिकमासस्य मलत्वं चाधिक्यात्। अत एव—

गृह्यपरिशिष्टे,

मलं वदन्ति कालस्य मासं कालविदोऽधिकम्।

एतस्य च नपुंसकसंज्ञा ज्योतिःशास्त्रे—

असङ्क्रान्तो हि यो मासः कदाचित्तिथिवृद्धितः ।
कालान्तरात्समायाति स नपुंसक उच्यते ॥

अत्र स्फुटमानागतासङ्क्रान्त एवाधिमासत्वेन ग्राह्यः । न तु मध्यममानागतः, तस्य श्रौतस्मार्त्तव्यवहारानुपयोगात् । तथाहि "इन्द्राग्नी यत्र हूयेते" इत्यादिवचनेन शुक्लप्रतिपदादिदर्शान्तासङ्क्रान्तमासस्य विधिनिषेधयोग्याधिमासत्वमवगम्यते । न च मध्यममानागतासङ्क्रान्तयो नियमेन शुक्लप्रतिपदादिदर्शान्ताः । अस्य नियतो भवनकालो वशिष्ठसिद्धान्ते दर्शितः—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केण पतत्येकोऽधिमासकः ॥

इति पूर्वाधिमासानन्तरमेतावति कालेऽतीते सति द्वितीयोऽधिमासो मध्यममानेन भवतीत्यस्यार्थः । अत्र च वाक्ये दर्शान्तमासाविवक्षायां कृष्णद्वितीयायां घटिकाचतुष्टये गतेऽधिमासोपक्रमः प्राप्नोति । अनियतोपक्रमावसानद्वात्रिंशन्मासाविवक्षायां चानियततिथ्युपक्रमत्वमाधिमासस्य प्रसज्येत । ततश्चोभयथाप्यधिमासस्य शुक्लप्रतिपदादिनियमभङ्गप्रसङ्गः । तस्मात्स्फुटमानागतशुक्लप्रतिपदादिदर्शान्तासङ्क्रान्तस्यैवाधिमासाविषयश्रौतस्मार्त्तव्यवहारेषु उपयोगः । अत एवोक्तं सिद्धान्तशिरोमणौ, असङ्क्रान्तमासोऽधिमासः स्फुटः स्यादिति ।

स्फुटः=स्फुटमानागतः । मध्यममानागतासङ्क्रान्तस्य तु ज्योतिःशास्त्रीयव्यवहार एवोपयोगः । अयं चाधिमासो न मध्यममानागताधिमासवन्नियतः । यानि तु "मासे त्रिंशत्तमे भवेत्" इत्यादिवचनानि तानि सम्भवाभिप्रायेण न तु नियतानि व्यभिचारस्य स्फुटत्वात् । क्षयमासस्तु द्विसङ्क्रान्तिः शुक्लप्रतिपदादिश्चान्द्रः । "द्विसङ्क्रान्तिमासः क्षयाख्यः कदाचित्" इतिसिद्धान्तशिरोमणिवचनात् । स च कार्त्तिकादिषु त्रिष्वेव भवति नान्येषु । यदा चायं तदा वर्षमध्ये क्षयमासस्योभयतोऽधिकमासद्वयं भवति । अत एव सिद्धान्तशिरोमणौ—

क्षयः कार्त्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च । इति ।

वर्षं चात्र पूर्वसङ्क्रान्तादिकं चान्द्रमासद्वादशकं न तु चैत्रादिकम् । क्षयमासोत्तरचैत्रादिके षट्के कदाचिदपि द्वितीयाधिमासासम्भवात् । तत्सम्भवकालश्च तत्रैव—

गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः ।

गजाद्र्यग्निभूमिस्तथा प्रायशोऽयं
(१)कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च ॥ इति।

अब्धयः=चत्वारः। अद्रयः=सप्त। नन्दा=नव एषां प्रातिलोम्येन पातः। ९७४ एभिर्मितैर्वर्षैः पूर्वं क्षयो जात इत्यर्थः। तिथयः=पञ्चदश। ईशा=एकादश १११५ एभिर्मिते कदाचिद् भविष्यति। अङ्गं=षट्। अक्षाः=पञ्च। सूर्याः=द्वादश। एकत्र सर्वे १२५६। गजा=अष्टौ। अद्रयः=सप्त। अग्नयः=त्रयः। भूः=एका। एकत्र १३७८। कुः=एकः। वेदाः=चत्वारः। इन्दुः=एकः। एकत्र १४१। गावः=नव। कुः=एकः। एकत्र १९। एभिर्मिते वर्षे कश्चिद्भविष्यतीत्यर्थः। अयं च क्षयमासो मेषगरविसङ्क्रान्तिरित्यादिमासलक्षणप्रयोजकसङ्क्रान्तिद्वययुक्तत्वान्मासद्वयात्मकः। अत एव रत्नमालायाम्—

यत्र मासि रविसङ्क्रमद्वयं तत्र मासयुगलं क्षयाह्वयम्। इति।

अत एव पूर्वसङ्क्रान्त्युपलक्षितस्य कार्त्तिकादेरुत्तरसङ्क्रान्त्युपलक्षितमार्गशीर्षाद्यपेक्षया पृथगवस्थानाभावात् द्विसङ्क्रान्तः क्षय इत्युच्यते। अन्ये तु—

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः।
चैत्रादिः स तु विज्ञेयः-

इति वचनोक्तलक्षणानुसारात् क्षये पूर्वराशिस्थे रवौ दर्शान्त्यसमाप्त्यभावादुत्तरराशिस्थरवावेव तत्समाप्तेरुत्तरमासरूपत्वमेवेत्याहुः। क्षयमासस्य अंहस्पतिसंज्ञत्वं तत्पूर्वोत्तरभाविनोश्चाधिमासयोः संसर्पाधिमाससंज्ञत्वं चोक्तम्—

बार्हस्पत्यसंहितायाम्,

यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव च।
संसर्पाहस्पती एतावधिमासश्च निन्दितः ॥ इति।

अत्र पूर्वासङ्क्रान्तद्विसङ्क्रान्तयोः संसर्पाहस्पतिसंज्ञा उत्तरासङ्क्रान्तस्याधिमासत्वं क्रमेणाभिधानादवगम्यते इति मदनरत्नः। संसर्पश्च न मलमासः किन्तु शुद्धः उत्तरस्त्वशुद्धः।

एकस्मिन्नपि वर्षे चेत् द्वौ मासावधिमासकौ।
पूर्वो मासः प्रशस्तः स्यापदरस्तु मलिम्लुचः ॥

(१) एतत्प्रतिपाद्या सङ्ख्या च व्यवधानकालबोधिका। क्वचित् गोकुभिः १९ हीनैः कुवेदेन्दुभि (१४१) अर्थात् क्वचित् १४१ वर्षैः क्वचिच्च १२२ वर्षैर्व्यवधानं भवतीति भावः। तथाच पूर्वोक्त ९७४ सङ्ख्यायां १४१ सङ्ख्याया मेलने १११५ जायते तत्र तन्मेलेन १२५६ जायते तत्र १२२ मेलने १३७८ जायते इत्यवधेयम्।

इति जाबालिवचनात्। यदाश्विनादिषट्के मलमास एकः अपरश्च चैत्रादिषट्के तदा पूर्वस्य शुद्धत्वप्रतिपादकं वचनान्तरमपि—

ब्रह्मसिद्धान्ते,

चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेत्।

ज्योतिःसिद्धान्तेऽपि—

घटकन्यागते सूर्ये वृश्चिके वाथ धन्विनि।
मकरे वाथ कुम्भे वा नाधिमासो विधीयते॥

घटः=तुला। न चैतद्वाक्यद्वयं कदाचिदपि तत्राधिमासपाताभावपरम्।

मासः कन्यागते भानावसङ्क्रान्तो भवेद्यदि।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयम्॥

इति पितामहादिवचनाविरोधात्। इदं च संसर्पस्य शुद्धत्वप्रतिपादनं विवाहादिव्यतिरिक्तश्राद्धादिश्राद्धादिविषयम्। यद्वर्षमध्येऽधिमासयुग्मं तत्र कार्त्तिकादित्रितये क्षयाख्यः।

मासत्रयं त्याज्यमिदं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलेषु।

इति ज्योतिःशास्त्रवचनात्।

इति मलमासनिर्णयः।

अथ मलमासे कार्याकार्यनिर्णयः।

तत्र पैठीनसिः—

श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्त्तिताः।
तस्मात् त्रयोदशे मासि निष्फलास्ताः प्रकीर्त्तिताः॥

अत्र च मलमासस्य त्रयोदशत्वं सङ्क्रान्तियुक्तशुद्धद्वादशमासापेक्षया न तु वास्तवम्। अत्र यद्यपि सर्वा इत्युपादानात् सर्वकर्मणां निवृत्तिप्रतीतिस्तथापि—

इष्ट्यादि सर्वं काम्यं तु मलमासे विवर्जयेत्।

इत्यादिवक्ष्यमाणवचनानुसारात्।

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे॥

इत्यादिप्रतिप्रसववचनेभ्यश्च काम्यानामेव निवृत्तिः न तु नित्यनैमित्तिकानाम्। तेषामपि चानन्यगतिकानामेव तत्रानुष्ठानं न सगतिकानाम्। तथाच—

काठकगृह्ये,

मलेऽनन्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियाम्।

बृहस्पतिरपि—

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे। इति।
अनन्यगतिकानि नित्यनैमित्तिकानि उदाहृतानि—

गृह्यपरिशिष्टादौ,

अवषट्कारहोमाश्च पर्व चाग्रयणं तथा ।
मलमासेऽपि कर्त्तव्यं काम्या इष्टीश्च वर्जयेत् ॥

अवषट्कारहोमाः=अग्निहोत्रौपासनवैश्वदेवादयः। इदं चारब्धविषयम्।

आरम्भं दर्शपूर्णेष्ट्योरग्निहोत्रस्य चाग्रिमम् ।

इति मदनरत्ने आरम्भस्यैव निषेधात् । पर्व=दर्शपूर्णमासौ स्थाली पाकश्च । आग्रयणं=पुराणान्नालाभे। एतेषां च नित्यत्वमकरणे प्रत्यवायश्रवणादिना बोध्यम् । अनन्यगतिकत्वं चैतेषां मलमासमध्ये विहितकालसमाप्तेः। दर्शपूर्णमासादीनां हि तत्तत्कालावच्छिन्ने जीवने निमित्ते विहितानां मलमास एव कालसमाप्तिः। येषां तु ज्योतिष्टोमादीनां विहितकालस्य वसन्तादेर्मलमासेऽसमाप्तिः शुद्धेऽप्यनुवृत्तेस्तानि न तस्मिन् कार्याणि । अत एवाग्रयणस्यापि मासद्वयात्मकवर्षाकालविहितस्य शुद्धमासेऽपि काललाभाद् वक्ष्यमाणमलमासकर्त्तव्यतानिषेधकवचनस्योपपत्तिः । इदं चाग्रे निरूपयिष्यामः ।

यमः—

चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् ।

कार्याणि मलमासेऽपीति ।

अत्र चन्द्रसूर्यग्रहणं कपिलषष्ठ्याद्यलभ्ययोगोपलक्षणम् ।
रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि वा ।

इतिमरीचिवचनेन तत्रापि मलमासे कर्त्तव्यत्वप्रतीतेः । इदं चात्र कर्त्तव्यतावचनं तन्निमित्तकस्य स्नानादेरेव न तु काम्यस्य "काम्यं नैव कदाचन" इति निषेधात् ।

तथा—

गर्भे वार्धुषिके भृत्ये श्राद्धकर्म्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत् ॥
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ।
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ॥
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश । इति ।

गर्भे=गर्भसंस्कारे पुंसवनादौ । वार्धुषिके=वार्धुषिककृत्ये वृद्धिग्रहणे । भृत्ये=तत्कृत्ये भृतिग्रहणे । मासिके श्राद्धकर्मणि अमावास्याश्राद्धादौ । षोडशश्राद्धानामत्रैव पृथगुपादानात् ।

जातकर्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।
मलमासेऽपि तत्कार्यं व्यासस्य वचनं यथा ॥

इतिव्यासवचनेन दर्शश्राद्धस्यापि मलमासकर्त्तव्यताप्रतीतेश्च । यत्तु—

संवत्सरातिरेकेण यो मासः स्यात् त्रयोदशः ।
तस्मिन् त्रयोदशे श्राद्धं न कुर्यादिन्दुसङ्क्षये ॥

इतिकौथुमिवचनं तत् कार्त्तिकादिमासविशेषसम्बन्ध्यमावास्याविहितफलविशेषार्थश्राद्धविषयम् । आमायामेव सर्वकामार्थविहितकाम्यश्राद्धविषयं वा । न तु नित्यदर्शश्राद्धविषयम् । तस्य प्रागुक्तव्यासवचनात्,

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥

इत्यादिसामान्यवचनाच्च मलमासे कर्त्तव्यत्वप्रतीतेः । दाक्षिणात्यसकलनिबन्धस्वरसोऽप्येवम् । गौडास्तु न नित्यपदेनावश्यकर्त्तव्यपार्वणश्राद्धादिग्रहणं तथा सति प्रेतश्राद्धादेरपि तत एव कर्त्तव्यतासिद्धौ तेषां पृथग्ग्रहणवैयर्थ्यापत्तेः । किन्त्वहरहःक्रियमाणस्नानसन्ध्यादिपरम् । अतश्च पार्वणश्राद्धस्य सामान्यतः प्रतिप्रसवाभावादुदाहृतकौथुमिवचनान्मलमासे निषेध एव । यत्तु व्यासवचनं तत् पिण्डपितृयज्ञाख्यश्राद्धपरम् ।

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥
तमतिक्रम्य तु रविर्यदि गच्छेत् कदाचन ।
आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः ॥

इतिलघुहारीतवचने "समाप्तौ पितृसोमकौ" इत्यभिधाय तमतिक्रम्येत्यनेन मलमासस्वरूपाभिधानात् पितृविशिष्टसोमदैवत्यपिण्डपितृयज्ञस्य मलमासकर्त्तव्यताप्रतीतेस्तदेकवाक्यतालाभाय व्यासवचनस्याप्येतत्परत्वौचित्यादित्याहुः । नित्ये=नित्यदाने ।

वर्षे चाहरहःश्राद्धं दानं च प्रतिवासरम् ।
गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ॥

इतिमात्स्यानुसारात् । वर्षे=प्रथमवर्षे । अहरहःश्राद्धम्=अहरहर्विहितमुदकुम्भश्राद्धम् । तथा च—

कौथुमिः,

अन्वहमम्बुघटं दद्यादन्नं चापि सुसञ्चितम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् ॥

तथा च त्रिंशत्सोदकुम्भान्नदानान्येकं मासिकमधिकं भवति । अत एव—

वशिष्ठः, संवत्सरमध्ये यद्यधिमासो भवेत् मासिकार्थे दिनमेकं वृद्धिं नयेत् ।

यत्त्वत्र जीमूतवाहनेनोक्तम्—अमावास्यामृतस्य तदधिकरणकं मासिकं न

मासवृद्धौ वर्जनीयं "संवत्सरातिरेकेण" इति पूर्वोदाहृतऋौथुमिवचनादिति, तन्न । अस्मिन् वचने मासिकानुपादानेनैतस्य तत्परत्वे प्रमाणाभावादुक्तयुक्त्या पार्वणविषयत्वस्यैव युक्तत्वात्, । तीर्थस्नानम् आवृत्तम् । अनावृत्तनिषेधस्य वक्ष्यमाणत्वात् । तदपि तीर्थाधिकरणकं तीर्थनिमित्तकस्य निमित्तवशादेव प्राप्तेः । होमोऽत्रौपासनहोमो यवव्रीहितिलादिभिरिति द्रव्योपादानात् । जातकर्मग्रहणं नामकरणादिसंस्कारोपलक्षणम् । तथाच माधवोदाहृतायां स्मृतौ—

श्राद्धजातकनामानि ये च संस्कारसव्रताः ।
मलिम्लुचेऽपि कर्त्तव्याः काम्या इष्टीश्च वर्जयेत् ॥

श्राद्धं=जननिमित्तकं जननसमभिव्याहारात् । तस्य जातकर्माङ्गत्वेन तत्प्रतिप्रसवेन तस्याप्रतिप्रसवात् पृथगभिधानोपपत्तिः । जातकं=जातकर्म । संस्कारा=निष्क्रमणान्नप्राशनादयो ये चतुर्थादिमासविशेषनियताः । यत्तु--

नामान्नप्राशनं चौलं विवाहं मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्मापि काम्यं वृषविसर्जनम् ॥
अस्तं गते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उपायनमुपारम्भं व्रतानां नैव कारयेत् ॥

इति गर्गवाक्यं जातकर्मादिनां निषेधकं, तन्मुख्यकालाकृतानां वेदितव्यम् । तथा च स एव—

नामकर्मादिजातं च यथाकालं समाचरेत् ।
अतिपाते तु कर्त्तव्यं प्रशस्ते मासि पुण्यदे ॥

अन्त्यकर्म=दाहास्थिसञ्चयादि । नवश्राद्धं=मरणदिनाच्चतुर्थादिदिनकृत्यम् ।

बृहस्पतिः—

नित्यनैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ॥

अत्र गजच्छाया—

परमान्नं तु यो दद्यात् पितॄणां मधुना सह ।
छायायां च गजेन्द्रस्य पूर्वस्यां दक्षिणामुखः ॥

इतिविश्वामित्रोक्ता गजस्यैव छाया ग्राह्या । न तु—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत् साहि गजच्छाया प्रकीर्त्तिता ॥

इति तेनैवोक्ता । सूर्यस्य हस्तेऽवस्थाने कन्यासङ्क्रान्तेरवश्यंभावेन मलमासासम्भवात् । दाक्षिणात्या अप्येवम् । स्मार्त्तास्तु—

सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत् ॥

इति वाराहोक्ता ग्राह्येत्याहुः । अत्र दाक्षिणात्यमते गजच्छायादेः सगतित्वेऽपि वचनात्कर्तव्यता बोध्या । एवमनन्यगतिकत्वेन नित्यनैमित्तिकानां मलमासे कर्त्तव्यतोक्ता । यानि तु सगतिकानि तानि नित्यान्यपि न तत्र कार्याणि । तानि च कानिचित् काठकगृह्यपरिशिष्टे दर्शितानि ।

सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे ।
पुत्रेष्ट्याग्रयणाधानचातुर्मास्यादिकानि च ॥
महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ।
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥

अत्र हि सोमयागादेर्मासद्वयात्मकवसन्तादिकालिकत्वेन शुद्धेऽपि विहितकाललाभात्सगतिकत्वम् । एवमन्यत्राप्यनुसन्धेयम । पुत्रेष्टिर्जातेष्टिः । तस्या नैमित्तिकत्वेऽपि शेषिविरोधान्निमित्तानन्तरकालबाधे जाते पर्वोपसङ्ग्रहवच्छुद्धकालोपसङ्ग्रहस्य न्याय्यत्वात् सगतिकत्वम् । आग्रयणस्य तु मासद्वयात्मकवर्षाकालिकत्वेन स्पष्टमेव सगतिकत्वम् । यत्तु कर्त्तव्यतावचनं तत् पुराणान्नालाभविषयमित्युक्तं प्राक् । महालयादि वक्ष्यते । काम्यान्यपि यानि शेषिविरोधाद्विलम्बं न सहन्ते यथा कारीर्यादीनि तानि मलमासेऽपि भवन्त्येव ।

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथैव कार्याणि न कालस्तु विधीयते ॥

इति दक्षवचनात् । अत्र नैमित्तिकानि काम्यानीति सामानाधिकरण्यम् तथा च दुःस्वप्नादिनिमित्तेन कर्त्तव्यतयोपस्थितानि काम्यानीत्यर्थः । शुद्धकाम्यानामपि वर्जनमारम्भसमाप्त्योरेव ।

असूर्या नाम ये मासा न तेषु मम सम्मताः ।
व्रतानां चैव यज्ञानामारम्भश्च समापनम् ॥

इतिब्रह्मसिद्धान्तात् । अनुवृत्तिस्तु तत्रापि कर्त्तव्यैव ।

प्रारब्धं कर्म यत् किञ्चित् तत् कार्यं स्यान्मलिम्लुचे ।

इति तत्रैवोक्तेः । अत एव काम्यचातुर्मास्यव्रतोपक्रमसमाप्तिकालयोर्मध्येऽधिमासपाते तत्र तस्याविच्छेदेनानुष्ठानमुक्तम् ।

अधिमासनिपातेऽपि ह्येष एव विधिः स्मृतः । इति ।

यत्तु—

प्रवृत्तं मलमासात् प्राक् यत्काम्यमसमापितम् ॥
आगते मलमासेऽपि तत्समाप्यमसंशयम् ।

इति मलमासेऽपि काम्यकर्मणः समाप्तिप्रतिपादकं काठकगृह्यं तत् सावनमानापजीविकृच्छ्रचान्द्रायणाहीनसत्रादिविषयम्। कालमाधवोऽप्येवम्। हेमाद्रिस्तु प्रारम्भमात्रं काम्यकर्मणो मलमासे निषिद्धम्। समाप्तिस्तु तस्य मलमासेऽपि कर्त्तव्यैव प्रागुदाहृतकाठकगृह्यात्। यत्तु समापनमिति ब्रह्मसिद्धान्तवचने समाप्तिनिषेधः स मलमास एव मोहात् प्रारब्धस्य तस्य तत्रैव समापने दोषातिशयप्रदर्शनार्थं इत्याह। तदेवं सङ्क्षेपतो वर्ज्यत्वे सिद्धे प्रपञ्चार्थं वचनान्युदाह्रियन्ते।

ज्योतिःपराशरः—

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च।
वेदव्रतवृषोत्सर्गचूडाकरणमेव च॥
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत्।
बाले वा यदि वा शुक्रे वृद्धे वास्तमुपागते॥
मलमास इवैतानि वर्जयेद्देवदर्शनम्।

अग्न्याधानं च प्रथमम्। अग्न्यनुगमनिमित्तं तु पुनराधानं नैमित्तिकत्वात् कर्त्तव्यमेव। प्रतिष्ठाप्यपूर्वैव। चण्डालादिस्पर्शनिमित्ता तु पुनःप्रतिष्ठा तत्र कार्यैव। यज्ञदानानि सगतिकानि। अगतिकानां प्रतिप्रसवोक्तेः। यत्तु—

वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च।
न कुर्यान्मलमासे तु महादानव्रतानि च॥

इति नारदवचने महादानानामेव प्रतिषेधः स प्रत्यवायातिशयार्थः। यत्त्वनन्तभट्टहेमाद्रिजीमूतवाहनशूलपाण्यादिभिर्दानपदं महादानपरमतश्च तेषामेवात्र निषेध इत्युक्तं, तन्न। अन्येषामपि सगतिकत्वेन प्रतिषेधस्योचितत्वात्।

अस्ते लग्नगते बाले भृगौ मासि मलिम्लुचे।
देवतादर्शनं दानं महादानं विवर्जयेत्॥

इत्यादिलघुहारीतवचनेषु दानमहादानपदयोरुपादानेनोपसंहारासम्भवाच्च। न चैतेषां निर्मूलत्वं जीमूतवाहनकालविवेकस्मार्त्तपुस्तकादावुपलम्भात्। तस्मात् प्रत्यवायातिशयार्थमेव पृथङ्महादाननिषेध इति युक्तम्। अन्ये तु शेषिबाधापत्तेरवश्यकर्त्तव्ये दानादावन्येषामेव प्रतिप्रसवो न महादानानां तेषां पुनर्निषेधादित्याहुः। नारायणोपाध्यायास्तु दानान्तराणि मुमुक्षोः फलाभिसन्धिविरहेण कुर्वाणस्य मलमासेऽपि भवन्ति महादानानि तु न तथा पुनर्निषेधादित्याहुः। कृत्यचिन्तामणौ तु दानमित्यत्र यानमिति पाठः। वेदव्रतानि महानाम्नीव्रतानि।

वृषोत्सर्गः काम्यः। एकादशाहिकस्य षोडशश्राद्धवद्गतिकत्वेन निषेधा-योगात्। माङ्गल्यम् अन्यदपि विवाहादि। अत एव भीमपराक्रमे—

अधिमासके विवाहं यात्रां चूडां तथोपनयनादि।
कुर्यान्न सावकाशं माङ्गल्यं न तु विशेषेज्याम्॥ इति।

अत्र सावकाशमित्यनेनैव सिद्धे पुनर्विवाहादिग्रहणं निरवकाशत्वेऽपि प्रतिषेधार्थमिति स्मार्त्तः। अभिषेको राज्ञः स च प्रथमः।

राज्ञोऽभिषेकः प्रथमः शुद्धं कालं प्रतीक्षते।
प्रत्याब्दिकस्तु नित्यत्वात् कालमात्रेऽपि वा भवेत्॥

इति मदनरत्नोदाहृतवचनात्। वस्तुतस्तु द्वितीयादिरपि मलमासे निषिद्ध एव सगतिकत्वात्। वचनं तु शुक्रास्तादिकालेऽपि कर्त्तव्यता-परम्। देवदर्शनमपि पुराणादिप्रसिद्धानामनादिदेवतानां प्रथमम्।

अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे।
मलमासेऽप्यनावृत्त तीर्थस्नानं विवर्जयेत्॥

इति स्कन्दपुराणात्। अत्र हि पूर्वार्द्धगतनिन्दापेक्षितो निषेधो न स्वतन्त्रः कल्प्यः। येनानावृत्तपदस्योत्तरत्रैवान्वयाद्देवदर्शनमावृत्तमपि निषिध्येत किन्तूपस्थितत्वात्त्यजेदित्ययमेव। अत एव वर्जनविधौ तीर्थस्नानदेवदर्शनयोः समुच्चितत्वादपिशब्दोपपत्तिः। अतश्चोभयोरपि वर्जनक्रियाकर्मत्वाविशेषादनावृत्तपदार्थस्योभयपरिच्छेदकत्वोपपत्तेर्देव-दर्शनस्यापि प्रथमस्यैव मलमासे निषेधः। किञ्चावृत्तदेवदर्शननिषेधे तावत्कालमनादिदेवतापूज्यतापत्तिः। न चेष्टापत्तिः।

अनादिदेवतार्चार्थं कालदोषो न विद्यते।
नित्यास्वभ्यासयोगेन तथैवैकादशीव्रतम्॥

इति ज्योतिःपराशरवचनविरोधापत्तेः। अत्र च स्कान्दे तीर्थस्नानग्रहणं तीर्थयात्रादेरुपलक्षणम्। अत एव तीर्थयात्रां विवर्जयेदिति गार्ग्यवचने पाठः। अस्य च प्रतिप्रसवो गयायाम्। तथाच—

वायुपुराणे,

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ।

सत्यव्रतः—

वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि।
मलमासे न कर्त्तव्यं व्याघ्रस्य वचनं यथा।

मातापित्रोरित्युपलक्षणम्। तेन वार्षिकं श्राद्धं मलमासे न कार्यमि-त्येव विवक्षितम्। युक्तं चैतत्। "मासपक्षतिथिस्पृष्ट" इति वचनेन तस्य-

न्मासीयतत्तत्तिथौ विधानात् ।

स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ।

इत्यनेन निषेधात् । यानि तु—

प्रतिसंवत्सरश्राद्धे नाधिमासं विदुर्बुधाः ।
जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ॥
प्रतिसंवत्सरं श्राद्धं मलमासेऽपि तत् स्मृतम् ।

इत्यादिशातातपादिवचनानि तानि मलमासमृतानां पुनर्मलमासे तत्रैव प्रत्याब्दिकं कार्यं न शुद्ध इत्येवंपराणि ।

वर्षे वर्षे तु यच्छ्राद्धं मृताहे तन्मलिम्लुचे ।
कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र तु ॥

इति शातातपेनैव विषयदानात् ।

मलिम्लुचे तु सम्प्राप्ते ब्राह्मणो म्रियते यदि ।
ऊनाभिधेयमासोऽसौ कथं कुर्यात्तदाब्दिकम् ॥
यस्मिन् राशिगते भानौ विपत्तिः स्याद्द्विजन्मनः ।
तस्मिन्नेव प्रकुर्वीत पिण्डदानोदकक्रियाः ।
अधिमासे विपन्नानां सौरं मानं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्धपिण्डोदकादिषु ॥

इति व्यासवचनेनैकवाक्यत्वाच्च । न चेदं वचनं मलमासमृतस्य सौरेणैव मासेन सर्वदा प्रत्याब्दिककर्त्तव्यतापरमिति समयप्रकाशकृद्व्याख्यानं युक्तम् । मलमासमृतस्याब्दान्तरे कदाचिन्मृताहाप्राप्तौ श्राद्धलोपापत्तेः । तस्मान्मलमासमृतस्य पुनर्मलमासे तत्रैव प्रत्याब्दिकं कार्यं न शुद्ध इत्येव व्याख्या ज्यायसी बहुसम्मता च । शुद्धमासमृतानां तु द्वितीयाद्याब्दिकं शुद्ध एव कार्यं प्रथमाब्दिकं तु मल एव । तथाच—

हारीतः,

असङ्क्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥

असङ्क्रान्ते रवौ मलमासे इत्यर्थः ।

यमोऽपि—

आब्दिकं प्रथमं यत् स्यात्तत् कुर्वीत मलिम्लुचे ।
त्रयोदशे तु सम्प्राप्ते कुर्वीत पुनराब्दिकम् ॥

अस्यार्थः । प्रथमाब्दिकं मल एव स्यात् । पुनराब्दिकं द्वितीयाद्याब्दिकं तु यदि तद्दिने मलमासपातस्तदा त्रयोदशे शुद्धे कुर्वीतेत्यर्थः ।

लघुहारीतोऽपि—

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

प्रत्यब्दं द्वादशे मासीत्युत्सर्गो मलमासाभावे । क्वचिद् द्वितीयाब्दिकादौ मलमासपाते त्रयोदशे शुद्धे कार्यम् । आद्याब्दिकं मलमासपातेऽपि द्वादश एव मासे कार्यमित्यर्थः । इयं च मलमासपाते द्वादशे मासि कर्त्तव्यता न संवत्सरमध्ये मलमासपाते । तथाच सति द्वादशे मासि मृततिथ्यलाभेन सपिण्डनानुपपत्तेः। कार्त्तिकमृतस्याश्विने प्रत्याब्दिकप्रसङ्गात् । किन्त्वन्तिमस्यैव मलमासत्वे आद्याब्दिकस्य तत्र कर्त्तव्यता । तदयमर्थः मलमासमृतानां यदा कालक्रमेण कदाचिन्मृतिमास एव मलमासस्तदा तदीयमाब्दिकं तत्रैव कार्यम । शुद्धमासमृतानां तु द्वितीयाद्याब्दिकं शुद्ध एव प्रथमाब्दिकं तु मल एवेति । एवं च—

श्राद्धीयाहनि सम्प्राप्ते अधिमासो भवेद्यदि ।
श्राद्धद्वयं प्रकुर्वीत एवं कुर्वन्न मुह्यति ॥

इति वशिष्ठवचनं मासिकविषयं व्याख्येयम् । यानि तु "मासद्वयेऽपि तत्कार्यं व्याघ्रस्य वचनं यथा" "पितृकार्याणि चोभयोः" इत्यादीनि गालवादिवचनानि तान्यप्येवमेव व्यवस्थापनीयानि ।

कौथुमिः—

वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिके न तु ।
वर्षवृद्धिः=वर्धापनं प्रतिवर्षं क्रियमाणम् ।

हारीतः—

अधिमासे न कर्त्तव्यं श्राद्धमभ्युदयं तथा ।
तथैव काम्यं यत् कर्म वत्सरात् प्रथमादृते ॥
सपिण्डीकरणादूर्ध्वं यत्किञ्चित् श्राद्धिकं भवेत् ।
इष्टं वाप्यथवा पूर्त्तं तन्न कुर्यान्मलिम्लुचे ॥

अत्र चाभ्युदयनिषेधद्वारा तदङ्गकस्य चौलोपनयनादेरेव निषेधो द्रष्टव्यः । "चूडां मौञ्जीबन्धनं च" इत्यादिप्रागुदाहृतवाक्यैकवाक्यत्वात् । तत्रापि प्रथमवत्सरसम्बन्धिमलमासकर्त्तव्यनामकर्मादिप्रयुक्तमाभ्युदयिकं मल एव कार्यमिति 'वत्सरात्प्रथमादृत' इत्यस्यार्थः । केचित्तु प्रथमसम्वत्सरे सपिण्डीकरणोत्तरदिने क्रियमाणमाभ्युदयिकं मलमासेऽपि कार्यमित्यर्थमाहुः । हेमाद्रिस्तु वत्सरात् प्रथमादृत इति सपिण्डीकरणादूर्ध्वमित्यत्रान्वेति । तथा च सपिण्डीकरणादूर्ध्वं यानि प्रथमसंवत्सरसम्बन्धीनि पुनर्मासिकानि क्रियन्ते तानि मलमासेऽपि कार्याणि इत्याह ।

शूलपाणिस्तु—

असङ्क्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।

तथैव मासिकं पूर्वं सपिण्डीकरणं तथा ॥

इति लघुहारीतवचने पूर्वपदं सपिण्डनोत्तरभाविमासिकश्राद्धनिषेधार्थम् । अतश्चतानि मलमासे कर्त्तव्यानीत्याह । अयं च सपिण्डीकरणोत्तरभाविश्राद्धनिषेधो युगादिश्राद्धभिन्नविषयः । ते तु मलमास एव कार्याः ।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

उपाकर्माणि चोत्सर्गे ह्यनादृष्टं वृषादितः ॥

इति वचनात् । अत्र हि वृषादित इत्यभिधानाद्वृषस्थरवावेव दशहरा, तुलामकरमेषसिंहस्थेव युगादय इति प्रतीतिः । यच्च "ज्येष्ठे मासि सिते पक्षे" इत्यादिवचनेषु दशहरादौ चान्द्रमासवाचिज्येष्ठादिपदश्रवणं तदगत्या लक्षणया सौरमासपरम् । अतश्च तुलादिस्थरवेः शुद्धमासे असम्भवात मलमास एव युगादिप्राप्तेरनुत्कर्षसिद्धिः । अत्र यत् उपाकर्मोत्सर्जनयोरनुत्कर्षवचनं तत् छन्दोगविषयम् । तेषामेव—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।

छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम् ॥

शुक्लपक्षे च हस्तेन उपाकर्मापराह्णिकम् ।

इति गार्ग्यवचनेन सिंहस्थे रवावुपाकर्मोत्सर्जनविधानात् । अत एव "श्रवणेन श्रावणस्य" इत्यादावाश्वलायनसूत्रे श्रावणपदं न सौरमासपरम् । वृषादित इत्यस्य प्रसिद्धसौरमासोपजीविच्छन्दोगपरत्वेनाप्युपपत्तौ श्रावणपदस्य लाक्षणिकत्वे प्रमाणाभावात् । अतः सामगान्यैरुपाकर्मोत्सर्जने मले न कार्ये । अत एव—

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणाम् ।

अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥

इत्यादिकातीयादिवचनानामप्युपपत्तिः । अन्यथा सर्वेषामपि सौरमासोपजीवने वचनानर्थक्यापत्तेः । तस्मादुक्तैव व्यवस्थाश्रयणीया । यत्तु स्मृतिसङ्ग्रहे—

भृगुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।

तथाधिमाससंर्पमलमासादिषु द्विजाः ॥

प्रथमोपाकृतिर्न स्यात्कृता कर्म्मविनाशकृत् ॥

इति वचनं तत् सामगानामेव प्रथमोपाकृतिनिषेधकम् । माधवादयस्तु दशहरासु नेति वचनस्थं वृषादित इति हेतुवचनमनादृत्य—

प्रतिमासं मृताहे च श्राद्धं यत् प्रतिवत्सरम्।
मन्वादौ च युगादौ च मासयोरुभयोरपि॥
यौगादिकं मासिकं च श्राद्धं चापरपाक्षिकम्।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि वा॥

इति मरीच्यादिवचनात् युगादिश्राद्धस्योभयत्रकर्त्तव्यतामाहुः। तैर्थिकस्योभयत्रकर्त्तव्यता तु यदैव तीर्थप्राप्तिः शुद्धे मले वा तदैव श्राद्धं कुर्यादितिव्यवस्था द्रष्टव्या। वस्तुतस्तु मन्वादिवाक्येन वैरूप्यापत्तेः एतद्वचनबलात् तीर्थश्राद्धमुभयत्र कार्यमितियुक्तम्। आपरपाक्षिकं कृष्णपक्षसामान्यनिमित्तकं मासद्वये कार्यम्। महालयनिमित्तस्य तु यदि श्रावणभाद्रयोरधिमासपातस्तदा—

नभो वाथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः॥

इति नागरखण्डवचनेनाषाढीतः सप्तमे पक्षे विहितत्वात् मलमासे निषेधः स्पष्ट एव। यदा त्वाश्विनस्याधिमासत्वं तदापि न कन्यासम्बन्धभ्रान्त्या मलिनाश्विने महालयः कार्यः किन्तु भाद्रापरपक्ष एव "अन्यत्रैव तु पञ्चमः" इत्यभिधानात्। न च कन्यायोगाभावे कथं तत्र श्राद्धमिति वाच्यम्। सकलस्य पक्षस्य कन्यासम्बन्धाभावेऽपि भाद्रपदकृष्णपक्षस्य कन्यासङ्क्रान्तिस्पर्शवत्त्वेन तत्र श्राद्धस्यानुष्ठानं शक्यत्वात्। अत एव—

अन्ते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत्।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते॥

इति कार्ष्णाजिनिवचनेऽपि सकलस्य पक्षस्य कन्यायोगाभावेऽपि तत्र श्राद्धमुक्तम्। शूलपाण्यादिमते तु कन्यासम्बन्धनिरपेक्षस्य पञ्चमपक्षस्यैव श्राद्धकालत्वाद्युक्तमेव तत्र श्राद्धानुष्ठानम्। यत्तु तन्मते कन्यागतापरपक्षे सकृत्क्रियमाणश्राद्धान्तरं तत् कन्यागतापरपक्षस्य पञ्चमत्वासम्भवान्मलिनाश्विने प्राप्तमपि वक्ष्यमाणवचनानुसारात्तुलागतापरपक्ष एव कार्यम्। वस्तुतस्तु कन्यागतापरपक्षश्राद्धं न पञ्चमपक्षश्राद्धाद्भिन्नं श्राद्धभेदे विधिकल्पनागौरवापत्तेः। पञ्चमपक्षस्य "अन्ते वा यदि वा मध्य" इति वचनेन कन्योपलक्षितस्यैव श्राद्धकालत्वप्रतीतेश्च। न च कन्यासम्बन्धाभावे पञ्चमपक्षे श्राद्धकरणापत्तिः। तस्मिन् कन्यासम्बन्धस्यावश्यकत्वात्। श्रावणभाद्रयोर्हि मलमासत्वे पञ्चमपक्षस्य कन्यासम्बन्धो न भवेत्। तदा च सप्तमपक्षस्य विहितत्वात् कन्योपलक्षित एव श्राद्धप्राप्तिरिति न कापि क्षतिः। यदा तु आश्विनस्य मलिनत्वं

तत्रापि पञ्चमपक्षस्य कन्यासम्बन्धोऽस्त्येव अमावामेव कन्याप्रवेशात् तेन एकमेव श्राद्धमिति युक्तं बहुसम्मतं च । तदपि चाश्विनस्य मलिनत्वेऽपि कन्योपलक्षितस्य मुख्यस्यैव पञ्चमपक्षस्य लाभात्तत्रैव कार्यम् । यत्तु—

मासः कन्यागते भानावसङ्क्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम् ॥

इति ज्योतिःपितामहवचनं तुलास्थरवौ कर्त्तव्यत्वबोधकं तन्महालयातिरिक्तव्रीहिपाकादिश्राद्धपरम् । अथवा महालयस्य "यावद्वृश्चिकदर्शनम्" इति गौणकालेऽपि विहितत्वाद् गौणकालभ्रान्त्या मलिनाश्विने क्रियमाणस्य निषेधद्वारा तुलास्थरवौ कर्त्तव्यताबोधकम्। यत्तु कालादर्शे—

आब्दोदकुम्भमन्वादिमहालययुगादिषु ।

इति कर्त्तव्येषु महालयपरिगणनं कृतं तत् महालयाख्यतीर्थपरम् । माधवसम्मतोऽप्ययमर्थः । अत्र च ज्योतिः पितामहवाक्ये दैवस्यापि कन्याकर्त्तव्यस्य तुलायां कर्त्तव्यत्वप्रतीतेर्दुर्गास्थापनादिकमपि तत्रैव कार्यम्। यदुक्तम्—

ज्योतिषे,

सम्पूर्णे मिथुनेऽधिको यदि भवेन्मासस्तदा कर्कटे
शेते बुध्यति वृश्चिके स भगवान् मासैश्चतुर्भिर्हरिः ।
कन्यायां तु शचीपतिः सुरगणैर्वन्द्यस्तदोत्तिष्ठते
दुर्गा चैव तुलागमे समधिके शेषास्तदन्ये सुराः ॥

परिशिष्टेऽपि—

द्विराषाढे समुत्पन्ने कर्कटे शयने हरौ ।
आखण्डलस्तु कन्यायां तुलायां पार्वती तथा ॥

द्विराषाढश्चात्र—

मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥
इतिवचनोक्तो मुख्य एव ग्राह्यः ।
माधवाद्येषु षट्स्वेकमासि दर्शद्वयं भवेत् ।
द्विराषाढः स विज्ञेय—
इत्यादिस्तु गौणोऽत्र न ग्राह्य इति बहवः ।

क्षयमासमृतस्य प्रत्याब्दिके विशेषो—

हेमाद्रौ भविष्ये,

तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तथोत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यमौ ॥ इति ।

आब्दिकवद्वर्धापनेऽपि ज्ञेयम् ।

इति मलमासे कार्याकार्यनिर्णयः ।

अथ गुरुशुक्रादिमौढ्यादौ कार्याकार्यनिर्णयः ।

बृहस्पतिः—

बाले वा यदि वा वृद्धे शुक्रे वास्तं गते रवौ ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥
अनादिदेवतां दृष्ट्वा शुभाः स्युर्नष्टभार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

आवृत्ततीर्थदोषाभावमात्रं न तु फलमिति मिश्राः । तन्न । बाधका-भावात् ।

लल्लोऽपि—

नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
सन्न्यासो देवयात्राव्रतनियमविधिः कर्णवेधस्तु दीक्षा ।
मौञ्जीबन्धोऽङ्गनानां प्रतिनियमविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात् त्रिदशपतिगुरौ सिंहराशिस्थिते च ॥ इति ।

अस्यापवादो ब्राह्मे—

मुण्डनं चोपवासं च गौतम्यां सिंहगे रवौ ।
कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥

बाल्यादिलक्षणान्युक्तानि ब्रह्मसिद्धान्ते—

रविणास्तान्तरन्येषां ग्रहाणामस्त उच्यते ।
ततोऽर्वाक् बार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्त्तितम् ॥

एतत्परिमाणमप्युक्तं तत्रैव—

पक्षं प्राग्दिशि वृद्धत्वं पश्चात्पञ्चदिनं कवेः ।
शैशवं प्राक् तु पश्चाद्दं पश्चादशदिनं स्मृतम् ।
शैशवं वार्द्धकं पक्षं प्राक् पश्चाच्च बृहस्पतेः ॥

बार्हस्पत्येऽपि—

प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वद्देवगुरोरपि ॥

अत्र परिमाणविरोधे देशभेदादापत्कृता वा व्यवस्था । अत एव-मिहिरः,

बहवो दर्शिताः काला ये बाल्ये वार्द्धकेऽपि च ।
ग्राह्यास्तत्राधिकाः शेषा देशभेदादुतापदि ॥

देशभेदश्च गार्ग्येणोक्तः ।

यथा—

शुक्रो गुरुः प्राक् परतश्च बालो
विन्ध्ये दशाहान्तिषु सप्तरात्रम् ।

वङ्गेषु हूणेषु च षट् च पञ्च
शेषे च देशे त्रिदिनं वदन्ति ॥

गङ्गायां विशेषो वायुपुराणे—

गङ्गायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ।

तथा—

गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते।

ग्रहणे=ग्रहणनिमित्तककुरुक्षेत्रयात्रादौ। अत एव लल्लः—

उपप्लवे शीतलभानुभान्वोरर्धोदये वा कपिलाख्यषष्ठ्याम्।
सुरासुरेज्यास्तमयेऽपि तीर्थे यात्राविधिः सङ्क्रमणे च शस्तः ॥ इति।

इति गुरुशुक्रादिमौढ्यादिनिर्णयः।

अथ श्राद्धकालः।

तत्र तावदमावास्या कालः। तत्र शातातपः—

दर्शश्राद्धं तु यत् प्रोक्तं पार्वणं तत् प्रकीर्तितम्।
अपराह्णे पितॄणां च तत्र दानं प्रशस्यते ॥

यमः—

पक्षान्ते निर्वपेत्तेभ्यो ह्यपराह्णे तु पैतृकम्।

कात्यायनः—

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेऽंशे नातिसन्ध्यासमीपतः ॥

पिण्डान्वहार्यकसंज्ञा चैतस्य पिण्डपितृयज्ञोत्तरं क्रियमाणत्वात्। अत एव—

मनुः—

पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥

(अ० ३ श्लो० १२२)

अपराह्णश्चात्र त्रेधाविभक्तदिनतृतीयांशः। वासरस्य तृतीयेंऽश इत्यभिधानात्। चन्द्रक्षये=अमावास्यायाम्। न च पितृयज्ञपदेन—

पितृयज्ञं तु निर्वर्त्य तर्पणाख्यं द्विजोऽग्निमान्।
पिण्डान्वाहार्यकं कुर्याच्छ्राद्धमिन्दुक्षये सदा ॥

इति मात्स्यानुसारात्तर्पणमेवोच्यते न तु पिण्डपितृयज्ञ इति वाच्यम्। मनुवचने पितृयज्ञपदेन तर्पणस्य ग्रहणे पिण्डान्वाहार्यपदस्य नामधेय-

त्वानुपपत्तेः। तद्धि तत्प्रख्यन्यायेन नामधेयम्। न च पिण्डपितृयज्ञो-त्तरकालत्वस्याविधाने तत्सम्भवति। तेन पितृयज्ञपदं पिण्डपितृयज्ञ-परम्। मात्स्यवचने तु पितृयज्ञपदेन तर्पणमेवोच्यते। तच्च न मेधातिथ्यु-क्तं पञ्चमहायज्ञान्तर्गतपितृयज्ञरूपं तर्पणं तस्य श्राद्धदिने प्रसङ्गासिद्ध-त्वेन तत्पश्चाद्भावविधानानुपपत्तेः। किन्तु जलतर्पणमेव। तत्पश्चाद्भा-वोऽपि च यद्यपि स्नातस्य श्राद्धविधानात्तर्पणस्य च स्नानाङ्गत्वात् प्राप्त एव तथापि—

पितृयज्ञस्तु तर्पणम्।

श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा।

इति वचनोक्तत्रिप्रकारपितृयज्ञप्राप्तौ जलतर्पणपुनर्वचनं साग्निकस्य श्राद्धदिने पितृयज्ञान्तरव्यावृत्त्यर्थमिति गौडाः। अन्ये तु स्नानप्रयोगान्त-र्गतस्य तर्पणस्य कातीयानामेव प्राप्तिरन्येषां स्नानप्रयोगान्तर्भावे प्र-माणाभावात् प्रसज्येत कदाचिच्छ्राद्धोत्तरं तर्पणम्। अतश्च तन्नियमा-र्थत्वे सम्भवति परिसङ्ख्याविध्ययोगाज्जलतर्पणोत्तरभाव एव मत्स्यपुरा-णवाक्ये नियम्यत इत्याहुः। सर्वथा मनुवाक्ये पितृयज्ञशब्दः पिण्डपितृ-यज्ञपर एव। अतश्च तन्निमित्तकमेव दर्शश्राद्धस्य पिण्डान्वाहार्यकस-माख्यानमिति सिद्धम्। तादृशं च तत् पिण्डपितृयज्ञाधिकारिणः सा-ग्निकस्यैव सम्भवतीति तद्विषयमेवेदं छन्दोगपरिशिष्टवचनं मनुवचनं च। न तु सर्वविषयम् इतरान् प्रति तत्समाख्यासम्भवात्। अत ए-व परिशिष्टोक्तो वासरतृतीयांशरूपोऽपराह्णः पिण्डपितृयज्ञाधिकारिण आहिताग्नेरेव। "नातिसन्ध्यासमीपत" इत्यपि च दिनान्त्यमुहूर्त्त एव तं प्रति निषिध्यते न तु सायाह्नरूपत्रिमुहूर्त्तः।। तथा-त्वे पञ्चममुहूर्त्तात्मकदिनतृतीयभागरूपापराह्णमध्येऽवशिष्टयोरेकादशा-द्वादशयोः पिण्डपितृयज्ञश्राद्धयोरनुष्ठानासम्भवात्। पिण्डपितृयज्ञ-स्यापि त्रेधाविभक्तापराह्ण एव विहितत्वात्। एतेन "नातिसन्ध्यासमी-पत" इत्यस्य सायाह्ननिषेधपरत्वमिति माधवोक्तिर्निरस्ता। अयं च परि-शिष्टोक्तः कालविधिर्येषां चन्द्रदर्शनवति प्रतिपद्दिने दर्शेष्टिर्निषेधस्तेषा-मेवेति परिशिष्टप्रकाशकारः। तेन तादृशानुष्ठानकर्त्तॄन् साग्निकान् प्रति या-गकालानुरोधेनामावास्या परिशिष्टानुसारेण निर्णीयते। तत्र च त्रेधा-विभक्तापराह्ण एव कालः। चन्द्रक्षये तु प्राशस्त्यमात्रं "क्षीणे राजनि शस्यते" इति वचनात्। चन्द्रक्षयश्च तत्रैवोक्तः—

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः।

अमावास्याष्टमेंऽशे च पुनः किल भवेदणुः॥ इति।

क्षीणः=चतुर्थभागोनकलावशिष्टः। तथैवाग्रे परमसूक्ष्मताभिधानात्। अमासप्तमांशे च कृत्स्नक्षयः तेनोभयं क्षयशब्दवाच्यम्। मार्गशीर्षज्येष्ठामावास्ययोस्तु अमाष्टमांश एव क्षय इत्युक्तम्—

तत्रैव,

आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत्।
विशेष आभ्यां ब्रुवते चन्द्रचारविदो जनाः॥
अत्रेन्दुराद्ये प्रहरेऽवतिष्ठेत चतुर्थभागोनकलावशिष्टः।
तदन्त एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविदो वदन्ति॥

आभ्याम्=अनयोः। तदन्त एव अमान्त एव। मलमासयुक्ताब्दे त्वनयोरपीतरतुल्य एव क्षय इत्युक्तम्—

तत्रैव,

यस्मिन्नब्दे द्वादशैकश्च पक्ष्ययस्तस्मिंस्तृतीयापरिहश्यो नोपजायेतेति।

पक्ष्यो=मासः। तृतीयया चतुर्थभागोनत्वात् त्रिभागमात्रावशिष्टया कलया परिदृश्योऽनयोरपि अमावास्ययोराद्ययामे न जायेत किन्तु इतरमासवदत्रानयोरप्यामावास्ययोः क्षय इत्यर्थः। अत्र पौर्णमास्यन्तौ ज्येष्ठमार्गशीर्षाविति परिशिष्टप्रकाशकारः। तदेवं त्रेधाविभक्तापराह्ण एव मुख्यः कालः। चन्द्रक्षये तु प्राशस्त्यमात्रमिति सिद्धम्। अत्रापराह्णव्याप्तौ त्रिमुहूर्त्ताधिकवृत्तिक्षयाभावेन दिनद्वये तद्व्याप्तितदस्पर्शक्षययोरसम्भवाच्चत्वार एव पक्षाः पूर्वेद्युरेव परेद्युरेव वा कार्त्स्न्येनैकदेशेन वा तद्व्याप्तिः। दिनद्वयेऽपि साम्येन वैषम्येण वा तदेकदेशस्यैव व्याप्तिरिति। तत्रैकस्मिन्नेव दिने कृत्स्नकालव्याप्तिरितरदिने तदस्पर्शेन एकदेशव्याप्त्या वा भवति तत्र तदस्पर्शचतुर्दश्यपेक्षयामावास्यायाः साम्येन वृद्ध्या क्षयेण वा। तत्र या तावत् पूर्वेद्युरेव कृत्स्नकालव्यापिनी परेद्युश्च तदेकदेशमपि न स्पृशति सा पूर्वैव। यापि तादृश्येवोत्तरत्र तदेकदेशव्यापिनी सापि पूर्वैव। परं यदि यजनीयदिने चन्द्रदर्शनादेकदेशव्याप्तिदिन एव यागः। यदि तु तिथिवृद्ध्या चन्द्रादर्शनात् प्रतिपद्येव यागस्तदा एकदेशव्याप्तिदिन एव कार्यम्। अन्यथा त्रयाणामन्वाधानादीनामेककालत्वानुपपत्तेः। गोभिलभाष्यस्वरसोऽप्येवम्। या तु पूर्वेद्युरेवैकदेशव्यापिनी सा सुतरां पूर्वा।

यदा चतुर्दशी यामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते॥

इति परिशिष्टवचनाच्च। या तु परेद्युरेव कृत्स्नकालव्यापिनी पूर्वेद्युस्तदेकदेशस्पर्शेन तदस्पर्शेन वा विद्यमाना सोत्तरैव। या तु दिनद्वयेऽपि

वैषम्येणैकदेशव्यापिनी सा यैवाधिका सैव ग्राह्या। या तु दिनद्वये साम्येनैकदेशव्यापिनी सा यदि क्षयेण तादृशी तदा "यदा चतुर्द्दशी-यामं" इति पूर्वोदाहृतक्षीयमाणवाक्यात् पूर्वैव, यदि तु वृद्ध्या तादृशी तदोत्तरा।

वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि।
यामांस्त्रीनधिकांश्वापि पितृयज्ञस्ततो भवेत्॥

इति परिशिष्टवचनात्। चन्द्रदर्शनादर्शनकृतस्तयोरपवादस्तु पूर्वमेवोक्तः। एवं यदा साम्येन तादृशी तदापि दर्शनादर्शनकृत एव निर्णयः। यदा च केषुचित्पक्षेषु चतुर्द्दशीमिश्रामायामनुष्ठानं प्राप्नोति तदा यदि अमाप्रतीक्षया सर्वानुष्ठानं सम्भवति तदा सा प्रतीक्षणीया नो चेच्चतु-र्द्दश्यामपि सर्वमनुष्ठेयम्।

अथ निरग्निकानां साग्निकानामपि एकदिने त्रितयानुष्ठाननियमरहितानामापस्तम्बा-श्वालयनादीनाममावास्यानिर्णयः।

अत्र च पञ्चधाविभक्तापराह्णव्यापिनी ग्राह्या। दिनद्वयेऽप्यपराह्ण-व्याप्तौ क्षये पूर्वा वृद्धौ साम्ये च परा।

अमावास्या तु याहि स्यादपराह्णद्वयेऽपि सा।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता॥

इतिमाधवोदाहृतवचनात्। क्षयादयश्चात्र परानिरपेक्षा एव। तत्तिथेरेवेतिके-चित्। दिनद्वये साम्येनैकदेशव्याप्तावप्ययमेव निर्णयः। दिनद्वयेऽप्य-पराह्णस्पर्शिन्यां तु साग्निनिरग्निकभेदेन व्यवस्था।

अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूः स्मृता॥

इति जाबालिवचनात्। आदिशब्देन च स्त्रीशूद्रयोर्ग्रहणम्।

स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानाग्निकैर्द्विजैः।

इतिलौगाक्षिवचनात्। आहिताग्निपदं चात्र स्मार्त्ताग्न्यादेरप्युपलक्षण-मिति मदनपारिजातः। सिनीवाल्यादिलक्षणमुक्तम्—

व्यासेन,

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता। इति

हेमाद्रिस्तु निराग्निकैः कुतुपकालव्यापिनी ग्राह्या, दिनद्वये तद्व्याप्तौ क्षये पूर्वैव साम्यवृद्ध्योस्तूत्तरैवेत्याह।

इत्यमावास्यानिर्णयः।

अथाष्टकाकालनिर्णयः।

तत्राश्वलायनः-हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति

हेमन्तशिशिरौ ऋतू तौ चात्र दर्शान्तमार्गादिचतुष्टयमासरूपौ। अपरपक्षाः=कृष्णपक्षाः। चतुर्ष्विति च मलमासेऽनुष्ठाननिषेधार्थम्। एतदुक्तं भवति-मार्गशीर्षादिचतुर्षु मासेषु कृष्णाष्टम्यश्चतस्रस्तास्वष्टकाः कर्त्तव्याः। अष्टका इत्येतच्चाश्वलायनमते श्राद्धहोमयोः कात्यायनमते च होममात्रस्य नामधेयम्। अष्टमीष्वष्टका इत्युत्पत्तिविधौ काले अष्टकारूपकर्मविधानात्। "अष्टका पितृदैवत्ये" इत्यतोऽपि व्याकरणात् कर्म्मपरत्वम्। एवञ्च यद्यपि याज्ञवल्क्ये "अमावास्याष्टका" इत्युपक्रम्य "श्राद्धकालाः प्रकीर्त्तिता" इत्यत्रापाततः कालवाचकोऽप्यष्टकाशब्दः प्रतीयते। तथापि स "द्रव्यं ब्राह्मणसम्पत्तिः" इति वदाश्वलायनोक्तस्य कालस्य लक्षणया बोधकः।

पद्मपुराणे तु,

प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति।

इत्यनेन भाद्रपदकृष्णाष्टम्याम् अपराप्यष्टका उक्ता। एवञ्च वर्षे पञ्च अष्टका इति सिद्धम्। आश्वलायनस्तु भाद्राष्टकाया माध्यावर्षमिति संज्ञान्तरं परं कृतवान्। तत्र च अष्टकाधर्म्मातिदेशादष्टकातः कर्मान्तरामितिभाष्यकारादिभिर्व्याख्यातम्। एवञ्चाश्वलायनीयैर्भाद्रकृष्णाष्टम्यां पौराणाष्टका माध्यावर्षं च तन्त्रेणानुष्ठेयमिति न्यायविदः। गोभिलस्तु "चतुरष्टको हेमन्तस्ताः सर्वाः समांसाश्चिकीर्षेत्" इत्यभिधायाग्रे अष्टकपक्षमप्युक्तवान्। चतुरष्टको हेमन्त इत्येतश्च त्रिऋतुः संवत्सर इत्येतत्पक्षाभिप्रायेण। यद्वा "हेमन्तशिशिरयोः समासेन" इत्यतः पञ्चर्त्तुसंवत्सराभिप्रायेण बोध्यम्। विष्ण्वादिस्मृतौ यत्र तिस्रोऽष्टकास्तिस्रोऽन्वष्टका इत्येतत्त्रयाणामुपादानं तत्र तद्धेमन्तगतानामेव। अव्यवधानेन तासामत्रोपस्थितिसम्भवात्। यद्यपि—

ब्रह्माण्डपुराणे—

ऐन्द्र्यां तु प्रथमायां च शाकैः सन्तर्पयेत्पितॄन्।
प्राजापत्यां द्वितीयायां मांसैः शुद्धैश्च तर्पयेत्॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्।
वर्षासु मेध्यशाकैश्च चतुर्थ्यामेव सर्वदा॥
इत्यत्र मासविशेषो नोक्तस्तथापि-
पौषे कृष्णाष्टकायां तु शाकैः सन्तर्पयेत् पितॄन्।

इतिब्रह्मपुराणवचनान्तरात् पौषकृष्णाष्टकायां शाकसन्तर्पणोक्तेः पौषमाघफाल्गुनगता एव तिस्र उक्ता भवन्ति। कूर्मपुराणे तु पौषादिगा एव तिस्र इति स्पष्टमुक्तम्।

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु । इति ।

पौषश्चात्र शुक्लादिमासाभिप्रायेण ।

आग्रहायण्यतिक्रान्तौ कृष्णास्तिस्रोऽष्टकास्तथा ।

इतिविष्णुधर्मोत्तरात् । एवं च ब्रह्मपुराणविष्णुधर्मोत्तरयोः फाल्गुनकृष्णाष्टमीव्यतिरिक्ता हेमन्तशिशिरयोस्तिस्रः उक्ता इति । ब्रह्मवैवर्तवायुपुराणयोस्तु—

पुत्रदानाय मूलं स्युरष्टकास्तस्र एव च ।
कृष्णपक्षे वरिष्ठा हि पूर्वा चैन्द्री विभाव्यते ॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी ।
आद्यापूपैः सदा कार्या मांसैरन्या भवेत्तथा ॥
शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः ।
या चाप्यन्या चतुर्थी स्यात्तां च कुर्याद्विशेषतः ॥ इति ।

यद्यप्यत्रापि मासो नोक्तस्तथाप्यत्र शाकाष्टकात्वेनोक्तायास्तृतीयायाः—

शाकं तु फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।

इत्यनेन फाल्गुनाष्टम्याः शाकाष्टकात्वेन प्रत्यभिज्ञानान्मार्गशीर्षाष्टकापरित्यागेन तिस्र उक्ताः । "या चाप्यन्या चतुर्थी स्यात्" इत्यनेन भाद्रकृष्णाष्टम्येवाभिहिता ।

वर्षासु मेध्यशाकैश्च चतुर्थ्यामेव सर्वदा ।

इत्यत्र तस्या एव चतुर्थीत्वेन परामर्शात् । अन्ये तु मार्गकृष्णाष्टमीमारभ्य तिस्रः । एवं च पूर्वोदाहृतब्रह्माण्डपुराणकवाक्यतासम्भवेनैकश्रुतिकल्पनालाघवे सति पृथक् श्रुतिकल्पनमनुचितमेव । चतुर्थी तु भाद्रकृष्णाष्टम्येव न तु फाल्गुनकृष्णाष्टमी कथमन्यथा "एतास्तिस्र "इयं चतुर्थी" इति ब्रूयात् । गोभिलवत् प्रथमत एव चतस्र इति न वदेदिति । तदेवं पौराणमतेऽपि वर्षे चतस्रोऽष्टकाः कार्याः । अशक्तौ तु "एकस्यां वा" इत्याश्वलायनसूत्रोक्तैका पुराणोक्ता च भाद्रकृष्णाष्टमीति द्वे । तत्रापि सूत्रोक्तासु फाल्गुनाष्टम्येव । "या माघ्याः पौर्णमास्या उपरिष्टात् व्यष्टका तस्यामष्टमी ज्येष्ठया सम्बध्यते तामेकाष्टकेत्याचक्षते" इत्यापस्तम्बेनैकस्या एव फाल्गुनाष्टम्या उक्तत्वात् । व्यष्टका दिनत्रयसम्बन्धात् । सा प्रकारद्वयेन व्याख्याता तद्भाष्यकृता मलमासत्वेन खण्डतिथित्वेन वा॥ ज्येष्ठया सम्बध्यत इति प्रदर्शनार्थं न तु यदैव ज्येष्ठायुक्ता तदैवोपादेया नान्यदेत्येवमर्थमिति ।

इत्यष्टका ।

अथान्वष्टका।

तत्राश्वलायनः—अपरेद्युरन्वष्टक्यमिति।

अपरेद्युरष्टकादिनात्।

विष्णुरपि तिस्रोऽन्वष्टका इति तिस्रः पूर्व्वेद्युरिति।

पूर्वेद्युः=अष्टकातः पूर्व्वेद्युरिति। तदपि कर्म्मनामधेयम्। अष्टकाया नित्यत्वमुक्तम्—

वायुपुराणे,

यस्य तु प्रतिगच्छेयुरष्टकाभिरपूजिताः।
मोघस्तस्य भवेल्लोको लब्धं चास्य विनश्यति॥ इति।

आश्वलायनेन च पूर्व्वेद्युः पितृभ्यो दद्यादिति अष्टकाश्राद्धात्पूर्वेद्युः श्राद्धान्तरमुक्तम्। एतत्त्रयमपि प्रधानमिति केचित्। पूर्व्वेद्युः श्राद्धमङ्गमित्यपरे।

इत्यन्वष्टका।

अथ वृद्धिश्राद्धकालः।

ब्राह्मे—

जन्मन्यथोपनयने विवाहे पुत्रकस्य च।
पितृन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्॥
वेदव्रतेषु चाधानयज्ञपुंसवनेषु च।
नवान्नभोजने स्नाने ऊढायाः प्रथमार्त्तवे॥
देवारामतडागादिप्रतिष्ठासूत्सवेषु च।
राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकम्॥
वनस्थाद्याश्रमं गच्छन्पूर्वेद्युः सद्य एव या।
पितृन् पूर्व्वोक्तविधिना तर्पयेत्कर्मसिद्धये॥

विष्णुपुराणे—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्॥

छन्दोगपरिशिष्टे—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥

सुतग्रहणं सुताया अप्युपलक्षणम्। "आवृतैव कुमार्या" इत्याश्वलायनोक्तेः। आवृत् कर्त्तव्यताप्रकारः। ओद्वाहनाद्विवाहपर्यन्तम्। तस्याभावे=संस्कार्यपितुरभावे। तत्क्रमात्=संस्कार्यपितृक्रमादित्यर्थः। इदं च पुत्रस्याद्यो

ह्वाह एव। तस्यैव संस्कारकत्वात्। द्वितीयादौ तु पुत्रः स्वयमेव कुर्यात्

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म्म वैदिकमारभेत्।

इति शातातपोक्तेः। अत्र नानिष्ट्वेतिवचनेनैव सर्वत्र नान्दीश्राद्धप्राप्तौ यज्ञोद्वाहप्रतिष्ठास्वित्यादिपुनर्वचनं नियमार्थम्। न चोपसंहारः "नानिष्ट्वा" इत्यस्यानर्थक्यापत्तेः। न चोत्पत्तिविनियोगाभ्यां सासदश्य इव सार्थकतोभयोरपि विनियोजकत्वात्। तेनोक्तादन्यत्रानियमः। अस्यापवादः-

छन्दोगपरिशिष्टे,

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।

न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु॥

अत्र जातकर्म्मणि श्राद्धं निषिध्यते। जननानिमित्तं तु तद्भवत्येव।

कालविशेषमाह—

हेमाद्रौ वशिष्ठः,

पूर्वेद्युर्मातृकं श्राद्धं कर्म्माहे पैतृकं तथा।

उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु॥

वृद्धशातातपः—

पृथग्दिनेष्वशक्तश्चेदेकस्मिन्पूर्ववासरे।

श्राद्धत्रयं तु कुर्वीत वैश्वदेवं च तान्त्रिकम्॥

तत्रापि कालभेदमाह—

स एव,

पूर्वाह्णे मातृकं श्राद्धमपराह्णे च पैतृकम्।

ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्॥

एतदसम्भवे वृद्धमनुः—

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः।

पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्॥

तत्रापि प्रातरेव। प्रातर्वृद्धिनिमित्तकमिति शातातपोक्तेः। एतत्पुत्रजन्मनोऽन्यत्र।

पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम्।

पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः॥

इत्यात्रेयवचनात्। पुत्रजन्मेत्यनियतनिमित्तोपलक्षणम्।

नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम्।

तेषामनियतत्वे तु तदानन्तर्यमिष्यते॥

इति लौगाक्षिवचनात्। अत्र प्रातरितिद्विनत्रयादिपक्षोपलक्षणम्। नियतनिमित्तत्वेन शक्यानुष्ठानत्वात्। कर्माङ्गश्राद्धेऽप्येत एव कालाः।

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥
इति पारस्करवचने वृद्धिश्राद्धकालातिदेशात् ।

इति वृद्धिश्राद्धकालाः ।

अथ कृष्णपक्षश्राद्धकालः ।

तत्र याज्ञवल्क्यः--
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ इति ।
( अ० १ श्लो० २६४ )

असमर्थं प्रत्याह गौतमः--पञ्चमीप्रभृति वापरपक्षस्येति ।
ततोऽप्यसामर्थ्ये मनुः,
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥ इति ।
( अ० ३ श्लो० २७६

तत्राप्यसामर्थ्ये कात्यायनः, अपरपक्षे कुर्वीतोर्द्ध्वं वा चतुर्थ्या यदहः सम्पद्येतेति ।

सम्पद्येत=श्राद्धसाधनम् । यदाप्येकदिने तदामावास्याश्राद्धात्पृथक् कार्यम् "अमावास्याष्टका वृद्धिः कृष्णपक्षे "इति पृथङ्निर्देशात् । अमावास्यायामपि तन्त्रेणेत्यपरे । अत्राप्यसामर्थ्ये सम्वत्सरमध्ये चतुर्वारमित्याह देवलः । पार्वणमधिकृत्य—
अनेन विधिना श्राद्धं कुर्यात्संवत्सरे सकृत् ।
द्विश्चतुर्वा यथाश्राद्धं मासे मासे दिने दिने ॥

चतुःपक्षे कन्याकुम्भवृषतुलार्के त्रिःकरणपक्षे निर्ज्ञातत्वात्प्रशस्तत्वाच्च । अत्राप्यसामर्थ्ये संवत्सरमध्ये त्रिवारम् । तत्रापि कन्याकुम्भवृषार्के
अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् ।
कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा ॥

इति मात्स्योक्तेः । ततोऽपि हीनशक्तेर्द्विवारमुदाहृतदेवलवचनात् । तच्च कन्यायां कुम्भवृषयोरन्यतरे वा प्रशस्तत्वात् । तत्राप्यसामर्थ्ये सकृत् देवलवचनादेव । तदपि कन्यायामेवातिप्रशस्तत्वात् । एतच्च नित्यं "शाकेनाप्यपरपक्षं नातिक्रामेत्"इतिकात्यायनोक्तेः । अत एव गौतमेनानेकान् कालानभिधायोक्तम्—कालानियमः शक्तित इति । काम्यं च ।

"प्रतिपद्धनलाभाय" इत्यादिमार्कण्डेयपुराणात् । एतल्लोपे प्रायश्चित्तमेव गौणकालानाम्नानात् ।

इति कृष्णपक्षश्राद्धकालः ।

अथ कन्यागतापरपक्षः ।

ब्राह्मे—

अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ॥

अश्वयुक्पदं पौर्णमास्यन्ताश्विनपरम् । प्रौष्ठपद्याः परः पक्ष इति यावत् । दिनशब्दोऽत्र तिथिपरः पक्षस्य तिथिघटितत्वात् । अत एव— विष्णुधर्मोत्तरे,

तिथिनैकेन दिवसश्चान्द्रे माने प्रकीर्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥ इति ।

एवं चैकस्मिन्नेव दिने श्राद्धयोग्यतिथिद्वयलाभे श्राद्धद्वयं तिथिवृद्धौ च श्राद्धावृत्तिः कृतत्वात् । एतेनाहन्यहनीति कल्पतरूक्तिः परास्ता । पारिजातप्रदीपप्रकाशभाष्यश्राद्धविवेकप्रतिहस्तकभानूपाध्यायादयोऽप्येवम् । त्रिभागहीनं=तृतीयभागहीनं पञ्चमीमारभ्य, त्रिभागं=तृतीयभागं दशमीमारभ्य

पञ्चमीं तिथिमारभ्य यावच्चन्द्रार्कसङ्गमम् ।
कृष्णपक्षे दशम्यादौ—

इति वाक्यादिति कल्पतरुप्रभृतयः । श्राद्धविवेकस्तु त्रिभागहीनमिति षष्ठ्यादिकल्पः त्रिभागमित्येकादश्यादिकल्पः ।

प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्द्धं ततोऽप्यति ॥

इति विष्णुधर्मोत्तरादिति । तस्मादुभयवाक्यदर्शनाद्युक्तो विकल्पः स च व्यवस्थितः । येषां चतुर्दश्यां श्राद्धं नास्ति तेषां पञ्चम्यादिदशम्यादिकल्पौ । येषां तदास्ति तेषां षष्ठ्याद्येकादश्यादिकल्पाविति । भानूपाध्यायनीलाम्बराचार्यादयोऽप्येवमाहुः । अर्द्धमवेति । अर्द्धं पक्षस्याष्टमीमारभ्येति कल्पतरुप्रभृतयः । अर्द्धं तृतीयभागस्यैवोत्तरोत्तरलघुकालोपदेशात्सन्निधानाच्चेति विवेककृत् भानूपाध्यायश्च । तत्र त्रयोदश्यादिकल्प इति विवेककारः । भानूपाध्यायस्तु येषां चतुर्दश्यां श्राद्धं नास्ति तेषां द्वादश्यादिः कल्पः येषां तदस्ति तेषां त्रयोदश्यादिरित्याह । वस्तुतस्तु अस्य वाक्यस्यानेककालोपदेशमात्रे तात्पर्याद्गुरुलघुकालोपदेशस्यार्थिकत्वादुत्तरोत्तरलघुकालोपदेशकत्वाभावात् त्रिभागमित्यत्र भागितया बुद्धिस्थीकृतस्य

पक्षस्यार्धमित्यत्र परित्यागे हेत्वभावात्रिभागपदार्थस्य सन्निधानेऽपि भागितयानुपस्थितेः पक्षविशेषणत्वाच्चार्धपदार्थेनान्वयायोगात् 'अथापरपक्षे श्राद्धं पितृभ्यो दद्यात्पञ्चम्यादिदर्शान्तमष्टम्यादिदशम्यादि सर्वस्मिंश्च' इति गौतमैकवाक्यतया मूलश्रुतिकल्पनालाघवाच्च अर्धं पक्षार्धमित्येव व्याख्यानमुचितम् । अत्र पक्षश्राद्धादिकल्पानां गुरुलघुकल्पत्वेनेच्छाविकल्पासम्भवादेकाद्यो तिस्रो देया इतिवत्फलतारतम्यमिति श्राद्धविवेकः । नित्ये फलाभावान्न फले तारतम्यं किन्तु शक्त्यपेक्षया व्यवस्थितो विकल्पः । एककल्पाश्रयणे च तदनिर्वाहेन कल्पान्तराश्रयणे तस्मिन्प्रयोगे तस्यैव पक्षस्य कथञ्चिन्निर्वाह्यत्वाद्व्रीहियवादिवदिति मिश्राः । वस्तुतस्तु षोडशिग्रहणादाविव फलभूमैव कल्पयितुं युक्तः । नित्यस्यापि कथञ्चित्फलवत्त्वाच्छक्तस्य लघुकल्पाश्रयणे फलाभावकल्पनाया अभ्यावश्यकत्वात् षोडशिग्रहणादावतिप्रसक्तेश्च । अत्र च दिने दिन इति वीप्साश्रवणाच्चतुर्दश्यामपि पार्वणं कार्यं "वर्जयित्वा चतुर्दशीम्" इति निषेधस्तु अपरपक्षान्तरचतुर्दशीविषय इति प्रदीपविवेकौ । तन्न ।

श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।

इति वाक्यविरोधात् । कल्पतरुभानूपाध्यायनीलाम्बराचार्यादयोऽप्येवमाहुः । तत्राशक्तं प्रति सकृत्करणमुक्तं हेमाद्रौ नागरखण्डे—

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत्सन्तृप्ताः पितरो ध्रुवम् । इति ।

अत्र कन्यासंस्थत्ववचनं प्राशस्त्यार्थं न तु तस्यैव श्राद्धकालत्वम् ।

आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः ।
श्राद्धं तत्र प्रकुर्वीत कन्यां गच्छतु वा न वा ॥

इत्यादित्यपुराणे तदनादरोक्तेः ।

बृहन्मनुः—

मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते ॥ इति ।

पक्षोऽर्धमासः । तेन श्रावणस्याधिमासत्वेऽप्यपरपक्षस्य न पञ्चमत्वक्षतिरिति केचित् । वस्तुतस्तु—

नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ॥

इति नागरखण्डोक्तेः सप्तमपक्ष एव तत् न्याय्यमित्युक्तं मलमासकर्त्त-

त्यनिर्णये। अत्र सर्वत्र पक्षः श्राद्धकाल उक्तः। शाट्यायनिना तु—

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः।
कन्यागतान्वितश्चेत्स्यात्स कालः श्राद्धकर्मणि॥

इति षोडशदिनानि श्राद्धकाल उक्तः। पक्षस्तु पञ्चदशतिथ्यात्मकः। "पञ्चदश वा अर्धमासस्य रात्रय" इतिश्रुतेः। तत्कथमपरपक्षे षोडशश्राद्धसङ्ख्यासम्पत्तिः। पौर्णमास्या सहेति केचित्।

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ।
पौर्णमास्यां तु कुर्वीत वराहवचनं यथा॥

इति धनञ्जयहलायुधादिलिखितवाक्यात्। अत एव ब्रह्मवायुपुराणयोः पौर्णमास्यादितिथिषोडशकस्य फलमुक्तमित्युक्तं कामरूपनिबन्धे। अथ वा यदा तिथिवृद्ध्या षोडशदिनात्मकः पक्षः स्यात्तदा वृद्धिदिनेऽपि श्राद्धं कार्यमित्येवमर्थं षोडशग्रहणमिति हेमाद्रिः। ईज्यस्वमातामहसन्न्यासिपुत्राधिकारिकश्राद्धाभिप्रायमित्यन्ये। तस्यापि जीवत्पितृकत्वेनामावास्योत्तरप्रतिपदि मातामहश्राद्धविधानात्। वस्तुतस्तु—

अहःषोडशकं यत्तु शुक्लप्रतिपदा सह।
चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता॥

इति देवलोक्तेस्तत्रापि श्राद्धविधानादिति। सकृन्महालये तिथ्यादि शोध्यम्।

सकृन्महाले काम्ये पुनः श्राद्धेऽखिलेषु च।
अतीतविषये चैव सर्वमेतद्विचिन्तयेत्॥

इति पृथ्वीचन्द्रोदये नारदोक्तेः। एतत्=निषिद्धतिथ्यादि। तदेवाह वसिष्ठः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्॥

त्रिजन्मसु रोहिण्यादिनक्षत्रत्रयेषु। तदाह वृद्धगार्ग्यः—

प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति॥ इति।

प्राजापत्यं=रोहिणी, पौष्णं=रेवती, पित्र्यं=मघा क्वचिदस्यापवादो—

हेमाद्रिमाधवयोः,

अमापाते भरण्यां च द्वादश्यां पक्षमध्यके।
तथा तिथिं च नक्षत्रं वारं च न विचारयेत्। इति।

सकृत्करणं च पितुर्मृताहे तत्र वचनवारादिपिण्डदाननिषेधवि-

न्तेत्याह—
कात्यायनः,

या तिथिर्यस्य मासस्य मृताहे तु प्रवर्त्तते ।
सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ॥
तिथिच्छेदो न कर्त्तव्यो विनाशौचं यदृच्छया ।
पिण्डश्राद्धं च कर्त्तव्यं विच्छित्तिं नैव कारयेत् ॥
अशक्तः पितृपक्षे तु करोत्येकदिने यदा ।
निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि ॥ इति ।
अत्र प्रतिदिनं श्राद्धकरणे नन्दादि न वर्ज्यम् ।
नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी ॥

इति कार्ष्णाजिनिवचनात् । इतरपक्षेषु चतुर्दशी वर्जनीया ।

विषसर्पश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ॥

इतिमरीचिना,

श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये ।

इति कालादर्शाद्युदाहृतवचनेन च शस्त्रहतातिरिक्तश्राद्धनिषेधात् इत्युक्तम् । शस्त्रहतस्य पित्रादेस्तु तत्र भवत्येव ।

शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ।(अ० १ श्लो० २६४)

इतियाज्ञवल्क्योक्तेः । नन्दादिवर्जनं तु पञ्चम्यादिपक्षेषु न भवति विभागादिपरिमाणहानिप्रसङ्गात् । अत एव षष्ठ्यादिपक्षे न चतुर्दशीवर्जनम् । यत्तु सूर्यसिद्धान्ते—

षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च ।
मिथुनाष्टादशे भागे कन्यायाश्च चतुर्दशे ॥

इत्युक्त्वा—

अत ऊर्ध्वं तु कन्याया यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि पितृभ्यो दत्तमक्षयम् ॥

इतिषोडशदिनानि श्राद्धकालत्वेनोक्तानि तानि काम्यश्राद्धान्तरविषयाणीति शूलपाणिप्रभृतयः । यत्तु—

सूर्ये कन्यास्थिते श्राद्धं यो न कुर्याद् गृहाश्रमी ।
कुतस्तस्य धनं पुत्राः पितृनिश्वासपीडिताः ॥

इत्यादिवचनैः पञ्चमपक्षनिरपेक्षमेव कन्यानिमित्तकं श्राद्धान्तरं विधीयते तस्य चापरपक्ष एव कन्यासङ्क्रमणे तन्त्रं, भेदे तु पृथगेव, क-

न्यायां सकृदेवानुष्ठानमिति शूलपाणिनोक्तं, तत् विधिभेदे गौरवात्पञ्चमपक्षे च कन्यासङ्क्रमणावश्यम्भावात्कन्योपलक्षितस्यैव पञ्चमपक्षस्य श्राद्धकालत्वोपपत्तेः "आदौ वा यदि वा मध्ये" इत्युदाहृतवाक्यैकवाक्यतयैकश्रुतिमूलकल्पनालाघवाच्चायुक्तम् । अत्र—

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः ।
कन्यागतान्वितश्चेत्स्यात्स कालः श्राद्धकर्मणि ॥

इत्युत्पत्तिवाक्ये श्राद्धकर्मणीत्येकवचननिर्देशादेकमेव श्राद्धं सङ्ख्यायुक्ततिथिसमुच्चयवशादाम्रेयवदावृत्त्यावश्यम्यस्यते । यत्तु—

स पक्षः सकलः पूज्यः श्राद्धषोडकं प्रति ।

इति कर्मणि सङ्ख्याश्रवणं न तद्भेदकं तस्यैकदेशकन्यासम्बन्धमात्रेणापि सकलपक्षपूज्यत्वगुणपरत्वेन कर्मोत्पत्तिपरत्वाभावात् । उत्पत्तिगताया एव सङ्ख्याया भेदकत्वात् । श्राद्धषोडशकमिति द्वितीयानिमित्तभूतलक्षणार्थकर्मप्रवचनीयप्रतियोगेन श्राद्धानामुद्देश्यत्वाच्च 'दिनेदिने' इतिवीप्सावशात् "त्रिभागहीनं पक्षं वा" इत्यादिषु अत्यन्तसंयोगाद्वितीयावशात् "स पक्षः सकलः पूज्य" इतिसकलादिशब्दवशादभ्यासप्रतीतेश्च । एवं च कालभेदात्सायम्प्रातःकालयोः साङ्गहोमप्रयोगावृत्तिवत्सर्वासु तिथिषु साङ्गश्राद्धावृत्तिः । कार्यकालस्य प्रयोगावच्छेदकत्वेन कालसमुच्चये प्रयोगावृत्तेरवश्यम्भावात् । एवं च यदभ्यासपक्षेऽन्तेदक्षिणादानं ब्राह्मणैक्यं चेति हेमाद्रिणोक्तं तच्चिन्त्यम् । अन्येषामप्यारादुपकारकाणां प्रधानपूर्वोत्तरभाविनामङ्गानां सुतरां तन्त्रतापत्तेश्च । एवञ्च पक्षश्राद्धे निर्विघ्नतार्थं सकृदेव ब्राह्मणैः सहोपसंवादे कृतेऽपि यदि ब्राह्मणानामाशौचप्राप्तिस्तदा तेषां त्याग एव । शास्त्रीयनिमन्त्रणाभावात् । तथा कर्त्तुरपि केनचिदप्यभ्यासपक्षेण प्रवृत्तस्यान्तरा यद्याशौचनिपातस्तदापि 'श्राद्धे पाकपरिक्रिया' इत्युक्तमुख्यप्रारम्भाभावात्सङ्कल्पाभावाच्च "प्रारब्धे सूतकं नास्ति" इत्यस्याप्रवृत्तेः प्रारब्धाभ्यासपक्षत्याग एव । किन्त्वाशौचापगमोत्तरं सकृदादिपक्षेण यथावन्महालयश्राद्धं कार्यं केनापि पक्षेण तस्याजातत्वात् । पूर्वकृतप्रयोगाणां तु सहकार्यन्तराभावान्निष्फलत्वमेव । आशौचातिरिक्तप्रतिबन्धे तु प्रतिनिधिना कर्त्तव्यमित्यलं प्रसङ्गेन । महालये श्राद्धाकरणे गौणकाल उक्तो हेमाद्रौ—

यमः—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे कुर्यादुभयोरपि पक्षयोः ॥ इति ।

कृष्णशुक्लपक्षसम्बन्धिन्योः पञ्चम्योरन्तरा । अत्र प्राप्ताप्राप्तविवेकेनामावास्याया ऊर्ध्वमर्वाक् पञ्चम्या गौणकालविधाने तात्पर्यम् । तत्राप्यसम्भवे वृश्चिकसङ्क्रान्ति यावत्कस्मिंश्चिद्दिने ।

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा ॥

इति ब्रह्मपुराणात् । अत्र क्रमाच्छ्राद्धस्य काल इत्यन्वयः । कन्यायामसम्भवे तुलायामित्यर्थः । अत एव—

नागरखण्डे,

प्रेतपक्षेऽप्यतिक्रान्ते यावत्कन्यागतो रविः ।
तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं वै पितरः सुतैः ॥
ततस्तुलागतेऽप्येके सूर्ये वाञ्छन्ति पार्थिव ! ।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः ॥
मासद्वयं प्रतीक्षन्ते गृहद्वारं समाश्रिताः ।
वायुभूताः पिपासार्त्ताः क्षुत्क्षामाः पितरो नृणाम् ॥
यावत्कन्यागतः सूर्यस्तुलास्थश्च महीपते ! ॥ इति ।

तत्रापि कार्त्तिकामावास्यायां विशेषः ।

येयं दीपान्विता राजन् ! ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितृणां वै महालयं ॥

इति भविष्योक्तेः । अत्र यद्यपि कार्त्तिकपौर्णमास्यामपि दीपदानं विहितं तथाप्यमावास्यैव पञ्चदशीशब्देन ग्राह्या । कृष्णपक्षस्य पित्र्ये प्रशस्तत्वात् दीपावलीत्वेन तस्या एव ख्यातत्वाच्च । महालयो भाद्रापरपक्षः पितृणां तत्रातिशयेन लयात् । पितृणां महस्योत्सवस्यालयतया वा । अथ तत्रैव भरण्यां श्राद्धं महाफलम् ।

भरणी पितृपक्षे तु महती परिकीर्त्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥

इति मत्स्यपुराणात् ।

अथ त्रयोदशी ।

अत्र—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥

तथा—

यो वा सम्वर्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ॥

त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च।
नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते॥

तथा,( अ० ३ श्लो० २७३ )

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम्।
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च॥

इत्यादि शङ्खब्रह्मपुराणमन्वादिवचनेषु मघायुक्तैव त्रयोदशी श्राद्धकालत्वेन यद्यपि श्रूयते तथापि केवलापि सा श्राद्धकालः।

प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी।
प्रौष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशीति।
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः॥
प्रावृट्काले सिते पक्षे त्रयोदश्यां समाहितः।
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत्॥

तथा—(अ० ३ श्लो० २७४)

अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च॥

इति विष्णुमन्वादिस्मृतिषु केवलाया अपि श्रवणात्। योगवचनं तु प्राशस्त्यार्थम्।

तथा वर्षात्रयोदश्यां मघासु च विशेषतः।(अ०१श्रा०प्र०श्लो०२६१)

इति योगियाज्ञवल्क्येन विशेषत इत्यनेन प्राशस्त्यार्थत्वोक्तेः।

त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया।
तृप्यन्ति पितरस्तस्यां स्वयं पञ्चशतं समाः॥
मघायुतायां तस्यां तु जलाद्यैरपि तोषिताः।
तृप्यन्ति पितरस्तद्वद्वर्षाणामयुतायुतम्॥

इति चन्द्रिकास्थवाक्येन शुद्धामभिधाय मघायोगे प्राशस्त्याभिधानाच्च। "वर्षासु च मघासु च" इत्यादौ चकारस्तु न मिथ्या सहेतरेतरयोगार्थः किन्तु परस्परनिरपेक्षैकक्रियान्वयलक्षणसमुच्चयार्थः।

मधुमांसैश्च शाकैश्च पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च॥

इति वसिष्ठवाक्ये केवलमघाया अपि श्राद्धकालत्वोक्तेः। न चैवं

त्रयोदश्यां प्रयत्नेन वर्षासु मघासु च।

इत्यादौ वर्षाया अपि पृथक्श्राद्धकालता स्यादिति वाच्यम्। 'प्रावृट्काले सिते पक्षे त्रयोदश्यां' इति, तथा "वर्षात्रयोदश्याम्" इत्यादौ विशेषणत्वावगतेः।

अत्र शूलपाणिः—

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥

इति शङ्खवाक्ये प्रत्यक्षविधिश्रवणात् ।

अपि नः स कुले भूयाद्यो नो दद्यात्त्रयोदशीम् ॥

तथा—

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
प्रावृट्काले सिते पक्षे त्रयोदश्यां समाहितः ॥
मधुप्लुतेन यः श्राद्धं पायसेन समाचरेत् ।

इतिकेवलत्रयोदशीप्रतिपादकयोर्मनुविष्णुवाक्ययोः तथा—

एष नो दास्यति श्राद्धं वर्षासु च मघासु च ।

इति केवलमघाप्रतिपादकवशिष्ठवाक्यस्य चार्थवादत्वात्कथंचित्प्रत्यक्षविध्येकवाक्यत्वे च सम्भवति स्वतन्त्रविध्यन्तरकल्पनानौचित्यात्केवलवाक्यानां लक्षणया श्रुतिकल्पनालाघवाय योगविषयत्वकल्पनमेवोचितम् । गजच्छायाकुञ्जरच्छाययायोगौ तु त्रयोदशीश्राद्ध एव फलातिशयार्थावन्यमुन्युक्तत्वादित्याह ।

तदयुक्तम् । यद्येकविधिकल्पनालाघवाय स्वारसिकनैरपेक्ष्यबाधेनाप्यनाकाङ्क्षितेतरोपलक्षणमाश्रीयते । तर्हि तत एव लाघवाद्गजच्छायाख्ययोगयुक्तायामेव त्रयोदश्यां कुञ्जरप्राक्छाय एव च देशे श्राद्धं स्यान्नान्यत्र । सर्वोपसंहारेण विशिष्टविषयिण्या एव श्रुतेः कल्पने लाघवात् । अथ—

रूपतो हि निराकाङ्क्षभिन्नत्वेनावधारिताः ।
अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् ॥

इतिन्यायेन तत्तद्वचनानुरूपनानाश्रुतिकल्पनमपि प्रामाणिकम् । ततः केवलमघात्रयोदशीप्रतिपादकवाक्यानामपि निष्परिपन्थितत्तदर्थश्रुतिकल्पकत्वमित्यलम् ।

एतच्च श्राद्धं महालयादिश्राद्धेभ्यो भिन्नम् ।

प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशीम् ।

तथा "प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी" इत्यादिवचनेषु महालयादिश्राद्धानुपस्थितेः । एतच्च नित्यम् ।

प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशीम् ।

इत्युपक्रम्य—

एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥

इति विष्णुधर्मोत्तरात् । काम्यं च । एतदुपक्रम्य—

प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा ।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः ॥

इतिशङ्खोक्तेः ।

यस्त्वत्र श्राद्धनिषेधो ज्योतिर्बृहस्पतिना,

कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम् ॥

इति दर्शितः स एकवर्गविषयः । तथा च—

कार्ष्णाजिनिः,

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ॥ इति ।

एतद्वचनं हेमाद्रिणा द्वेधा व्याख्यातम् । एकशब्दः केवलपरः । पितृवर्गमात्रस्य न कुर्यात्किन्तु मातामहवर्गस्यापि कुर्यात् । दर्शादावसमर्थस्य पितृवर्गश्राद्धमात्रेणापि नित्यशास्त्रार्थसिद्धेरापस्तम्बसूत्रादौ दर्शनादेकवर्गयजनप्रसक्तेः । यद्वा नैकवर्गस्य पार्वणमात्रं न कर्त्तव्यं किन्तु सर्वेषां पितृपितृव्यादीनामपि पार्वणैकोद्दिष्टानि कार्याणीत्यर्थः । न तृप्ता इति वाक्यशेषात् । अथवा सपिण्डकश्राद्धविषयो निषेधः ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥

इतिपुलस्त्योक्तेः । महालयत्रयोदशीश्राद्धं च युगादिश्राद्धादभिन्नं युगादित्वाविनाभावेन तदुपस्थितेरिति केचित् । अस्तु वा भेदस्तथापि—

मघायुक्तत्रयोदश्यां पिण्डानिर्वपणं द्विजः ।
ससन्तानो नैव कुर्यान्नित्यं ते कवयो विदुः ॥

इतिबृहत्पराशरेण विशिष्यापरपक्षत्रयोदशीश्राद्धे पिण्डनिषेधात्तद्विषयः श्राद्धनिषेध इत्यदोषः काम्यश्राद्धविषयो वा । आपस्तम्बेन—

त्रयोदश्यां बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति ।

इति काम्यश्राद्धं प्रकृत्य दोषोक्तेः पुत्रवद्गृहस्थविषयो वा ।

त्रयोदश्यां तु वै श्राद्धं न कुर्यात् पुत्रवान्गृही ।

इति तं प्रति स्मृत्या निषेधात् ।

असन्तानस्तु यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ।
सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् ।

इतिहेमाद्रौ नागरखण्डे सन्तानवतो दोषोक्तेश्च । अत्र सन्तानशब्दः पुत्रपरः "न कुर्यात्पुत्रवान्गृही" इतिस्मृतेः । अत्र त्रयोदशीमहालयमघाश्रा-

ज्ञानां तन्त्रं युगादिश्राद्धभेदे तु तस्यापि । अन्यो विशेषः श्राद्धप्रकाशे द्रष्टव्यः ।

इति त्रयोदशी ।

अथ चतुर्दशी ।

मरीचिः,

विषसर्पश्वापदाहितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिताः ॥
विषादिभिर्ब्राह्मणान्तैर्घातो येषामिति विग्रहः ।

नागरखण्डे,

अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
उपसर्गमृतानां च विषमृत्युमुपेयुषाम् ।
वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम् ॥
श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप ! ।

मार्कण्डेयपुराणे—

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्यं चतुर्दश्यामिति ।

युवत्वं च षोडशवर्षादूर्ध्वं त्रिंशद्वर्षपर्यन्तमिति श्राद्धविवेकादयः । अत्र सर्वत्र लिङ्गमविवक्षितमुद्देश्याविशेषणत्वात् । अत्र चापमृत्युर्भवेदित्यादिश्रवणाद्रोगं विना मृतत्वं चतुर्दशीश्राद्धप्रयोजकम् । एवं च कृतपत्यनुगमनाया अपि चतुर्दशीश्राद्धं भवत्येवेति गौडाः । अन्ये तु अवैधमरणं चतुर्दशीश्राद्धप्रयोजकं प्रायोऽनशनाभ्यां तु विधितोऽपि विपन्नानां भवत्येव ।

प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा ।

इतिब्रह्मपुराणात् । तथा युद्धहतानामपि । "युद्धहतानां श्राद्धकर्मणि चतुर्दशी प्रशस्ता" इति विष्णुस्मरणादित्याहुः । एतच्चैकोद्दिष्टरूपम् ।

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम् ।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः ।

इति गार्ग्योक्तेः । अन्योऽत्र विस्तरः श्राद्धप्रकाशे बोध्यः ।

इति चतुर्दशी ।

अथाश्विनशुक्लप्रतिपदि दौहित्रकर्तृकं मातामहश्राद्धम् ।

सङ्ग्रहे,

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥ इति ।

इयं सङ्गवव्यापिनी ग्राह्येति निर्णयदीपे—

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता सङ्गवे सदा ॥
जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले ।
प्रातःसङ्गवयोर्मध्ये आर्यस्य प्रतिपद्भवेत् ॥

इतिवचनात् ।

अथ प्रकीर्णकानित्यश्राद्धकालाः ।

तत्र विष्णुधर्मोत्तरे—

श्राद्धे सङ्क्रमणं भानोः प्रशस्तं पृथिवीपते ! ।
विषुवाद्वितयं तत्र अयने द्वे विशेषतः ॥

आवश्यकम्-

उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत् पितरो वदन्ति ।

इतिविष्णुपुराणात् । काम्यत्वम्—आदित्यसङ्क्रमणमित्यादिविष्णुवाक्यात् । द्रव्यब्राह्मणसम्पत्त्युपलक्षितः कालः श्राद्धकालः । तथाच—

निगमः, अपरपक्षे यदहः सम्पद्येतामावास्या या तु विशेषेणाष्टका तीर्थतिथिद्रव्यब्राह्मणसम्पत्सु चिकीर्षेदिति ।

वृद्धिसङ्क्रमद्रव्यब्राह्मणसम्पत्त्यादिनिमित्तविहितानां नैमित्तिकत्वेनावश्यकत्वम् ।

हारीतवचानादपि,

तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥

सद्य इति आवश्यकम् ।

यमः—

राहुदर्शनदत्तं च श्राद्धमानन्त्यमुच्यते ।

विष्णुः—

राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत्सर्वकामीयं पितॄणामुपतिष्ठति ॥

सर्वकामीयं=सर्वकामविहितम् ।

लिङ्गपुराणे—

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।

सर्वस्वेनापीत्यनेनावश्यकत्वम् । श्राद्धेच्छोपलक्षितश्च कालः श्राद्धकालः ।

मार्कण्डेयपुराणे—

विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने।
विषुवे सति सङ्क्रान्त्यां व्यतीपाते च पुत्रकाः॥
श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने।
जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छया॥

चशब्दो भिन्नक्रमः। इच्छया चेत्यर्थः। आवश्यकत्वमिच्छायां निमित्ते विधानात्।

ब्रह्मपुराणे—

पौर्णमासीषु यच्छ्राद्धं कर्त्तव्यमृक्षगोचरे।

मासनक्षत्रसंयोगे।

भाद्रपदपौर्णमास्यां विशेषो ब्रह्मपुराणे—

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ।
पौर्णमास्यां तु कर्त्तव्यं वराहवचनं यथा॥
ये स्युः पितामहादूर्द्ध्वं ते तु नान्दीमुखास्त्रयः।
प्रसन्नमुखसंज्ञास्तु मङ्गलायतनास्तु ते॥

पितामहात्=पितुःपितामहादित्यर्थः।

यमः—

आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान्।
तर्पयेत्पितृपूर्व्वं तु तदस्याक्षयमुच्यते॥

मत्स्यपुराणे—

वैशाख्यामुपरागे च तथा वत्स! महालये।

एषु वचनेषु पौर्णमासीविशेषाणां ग्रहणमावश्यकत्वार्थमतिशयार्थं वा।

विष्णुधर्मोत्तरे—

आश्विनस्यापरे पक्षे प्रथमे कार्त्तिकस्य च।
यस्तु श्राद्धं सदा कुर्यात्सोऽश्वमेधफलं लभेत्॥
निद्रां त्यजति सर्वात्मा तस्मिन्काले जनार्दनः।
तत्र श्राद्धमथानन्तं नात्र कार्य्या विचारणा॥

देवलः—

अयुग्मास्तिथयः सर्वा युग्माभ्यः प्रतिपूजिताः।
कालतः पूजितौ मासौ माघप्रौष्ठपदावुभौ॥
पक्षयोः शुक्लपक्षश्च बहुलः श्राद्धपूजितः।
उक्ता तिथिपरीक्षेयं न नक्षत्रेषु प्रचक्ष्यते॥

उत्तराः श्रवणास्तिष्यो मृगशीर्षं प्रजापतिः ।
हस्तः शतभिषक् स्वातिश्चित्रा पित्र्यमथाश्विनम् ॥
नक्षत्राणि प्रशस्तानि सदैवैतानि पैतृके ।
अपराणि च नक्षत्राण्युच्यन्ते कारणैः क्वचित् ॥
यस्मिन् गुणोदितं विप्रं पात्रभूतमथाप्नुयात् ।
श्राद्धस्य पूजितः कालो भवेत्स एव वा पुनः ॥

कारणैः=माघपञ्चदशीयोगादिभिः ।

अथ काम्यश्राद्धकालाः ।

तत्र कात्यायनः—अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि, द्वितीयायां स्त्रीजन्म, अश्वास्तृतीयायां, चतुर्थ्यां क्षुद्रपशवः, पुत्राः पञ्चम्यां, षष्ठ्यां द्यूतर्द्धिः, कृषिः सप्तम्याम्, अष्टम्यां वाणिज्यम्, एकशफं नवम्यां, गावो दशम्यां, परिचारका एकादश्यां, द्वादश्यां धनधान्ये कुप्यम्, ज्ञातिश्रैष्ठ्यं त्रयोदश्यां युवानस्तस्मिन्म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायां सर्वम् ।

मनुः—( अ० ३ श्लो० २७७ )

युक्षु कुर्वन् दिनर्क्षेषु सर्वान्कामान्समश्नुते ।
अयुक्षु तु पितॄनर्चन्प्रजां प्राप्नोति पुष्कलाम् ।

याज्ञवल्क्यः—( अ० १ श्रा० प्र० २६५–२६८ )

स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रान्श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां सुतान् ॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
विद्यां धनं भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् ।
अश्वानायुश्च विधिवद्यः श्राद्धं सम्प्रदास्यति ॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् ।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः ॥

प्रवृत्तचक्रता=सर्वत्राप्रतिहताज्ञाशालिता ।

विष्णुः—सततमादित्याह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति, सौभाग्यं चान्द्रे, समरविजयं कौजे, सर्वान्कामान्बौधे, विद्यामभीष्टां जैवे, धनं शौक्रे, जीवितं शनैश्चरे ।

इति काम्यश्राद्धकालाः ।

अथ युगादयः ।

विष्णुपुराणे—

वैशाखमासस्य सिततृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥
एता युगाद्याः कथिताः पुराणैरनन्तपुण्यास्तिथयश्चतस्रः ।
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति ।

नागरखण्डे—

अधुना शृणु राजेन्द्र ! युगाद्याः पितृवल्लभाः ।
यासां सङ्कीर्त्तनेनैव क्षीयते पापसञ्चयः ॥
नवमी कार्त्तिके शुक्ला तृतीया माधवे सिता ।
अमावास्या तपस्ये च नभस्ये च त्रयोदशी ॥
त्रेताकृतकलीनां तु द्वापरस्यादयः स्मृताः ।
स्नाने दाने जपे होमे विशेषात्पितृतर्पणे ॥
कृतस्याक्षयकारिण्यः सुकृतस्य महाफलाः । इति ।
तपस्ये=माघ इत्यर्थः ।

मत्स्यपुराणे—

वैशाखस्य तृतीया या नवमी कार्त्तिकस्य तु ।
पञ्चदश्यपि माघस्य नभस्ये तु त्रयोदशी ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । इति ।
अत्र नक्षत्रविशेषात्प्राशस्त्यविशेषमाह—

देवलः,

तृतीया रोहिणीयुक्ता वैशाखस्य सिता शुभा ।
मघाभिः सहिता या तु नभस्ये तु त्रयोदशी ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । इति ।

ब्रह्मपुराणे—

वैशाखशुक्लपक्षस्य तृतीयायां कृतं युगम् ।
इत्याद्युपक्रम्य—

एताश्चतस्रस्तिथयो युगाद्या दत्तं कुलं चाक्षयमासु विन्द्यात् ।
युगे युगे वर्षशतेन यच्च युगादिकाले दिवसेन तद्भवेत् ॥ इति ।

भविष्ये—

वैशाखस्य तृतीया या समा कृतयुगेन तु ।
नवमी कार्त्तिके या तु त्रेतायुगसमा तु सा ॥
माघे पञ्चदशी राजन् ! कलिकालसमा तु सा ।
एताश्चतस्रो राजेन्द्र ! युगानां प्रभवाः शुभाः ॥

युगादयस्तु कथ्यन्ते तेनैताः पूर्वसूरिभिः।
उपवासस्ततो दानं श्राद्धं होमो जपस्तथा ॥
तदा तु क्रियते किञ्चित्सर्वं कोटिगुणं भवेत् । इति ।

कृतयुगेन समेति सम्पूर्णकृतयुगधर्मप्राप्तिरस्यामेकस्यां तिथौ भवतीत्याह हेमाद्रिः । अर्थवादमात्रमित्यन्ये ।

प्रभासखण्डे—

यदा चन्द्रश्च सूर्यश्च यदा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रवेक्ष्यति तदा कृतम् ॥ इति ।
अत्र च पौर्णमासी तु माघस्येति भविष्यवचनात्,
माघे च पौर्णमास्यां तु घोरं कलियुगं तथा ।

इति ब्रह्मवैवर्त्तात् "अमावास्या च तपस" इति नागरखण्डात् "माघे चन्द्रक्षयेऽहनि" "दर्शे तु माघमासस्य" इतिब्रह्मपुराणादिवचनात् माघामावास्यापौर्णमास्योर्युगभेदेन व्यवस्थेति ज्ञेयम् । अत्र च-

श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति ।

इति विष्णुपुराणात् पितृकर्मप्राधान्यात्

आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः ।
इति स्मृतेस्तस्य च शुक्लकृष्णादिभेदेन उभयथोपपत्तेः ।
माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृप ! लभ्यतेऽसौ

इतिमकरादित्ये तदसम्भवात् कुम्भादित्ये च सम्भवात् अस्मिन्पक्षे च पूर्णिमामावास्ययोरपि युगादित्वसम्भवात् चान्द्रमासयुगादयो ग्राह्या इति पूर्वपक्षमुपन्यस्य-

दशहरासु नोत्कर्षः चतुर्ष्वपि युगादिषु ।
उपाकर्म्म महाषष्ठ्यां ह्येतदुक्तं वृषादितः ॥

इति ऋष्यशृङ्गवचनात्सौरमासगता एव ग्राह्या इति हेमाद्रिः । एतास्तु पितृकर्म्मसु अपराह्णव्यापिन्यो ग्राह्या दैविके पूर्वाह्णव्यापिन्यः ।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तं गतो रविः ।
शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ॥
इतिस्मृतेः । शुक्लकृष्णभेदेन व्यवस्थेत्यन्ये । अत एव-

नारदीयभविष्योत्तरयोः,

द्वे शुक्ले द्वे तथा कृष्णे युगाद्याः कवयो विदुः ।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥ इति ।

इति युगादयः ।

अथ युगान्ताः।

आदित्यपुराणे--

दिनर्क्षं रेवती यत्र गमनं चैव राशिषु।
युगान्तदिवसं तत्र तत्र दानमनन्तकम्॥

राशिषु गमनं सङ्क्रान्तिरित्यर्थः।

ग्रहणं विषुवे चैव सौम्ये वा मिहिरो यदि।
सप्तमी शुक्लकृष्णा वा युगान्तदिवसं विदुः॥ इति।

सौम्य उदगयने यदि शुक्ला कृष्णा वा सप्तमी ग्रहणविषुवोत्तरायणोपेता सूर्य्यवारोपेता तदा युगान्तदिवस इत्यर्थः।

ब्रह्मपुराणे विशेषः--

सूर्य्यस्य सिंहसङ्क्रान्त्यामन्तः कृतयुगस्य तु।
अथ वृश्चिकसङ्क्रान्त्यामन्तस्त्रेतायुगस्य तु॥
ज्ञेयस्तु वृषसङ्क्रान्त्यां द्वापरान्तस्तु सङ्ख्यया।
तथाच कुम्भसङ्क्रान्त्यामन्तः कलियुगस्य तु॥

पद्मपुराणे--

युगादिषु युगान्तेषु स्नानदानजपादिकम्।
यत्किञ्चित् क्रियते तस्य युगान्तफलमुच्यते॥

ब्रह्मपुराणेऽपि--

युगादिषु युगान्तेषु श्राद्धमक्षयमुच्यते। इति।

इति युगान्ताः।

अथ मन्वन्तरादयः।

मात्स्ये--

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिके तथा।
तृतीया चैव माघस्य तथा भाद्रपदस्य च॥
फल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा।
आषाढस्यापि दशमी तथा माघस्य सप्तमी॥
श्रावणे चाष्टमी कृष्णा तथाषाढे च पूर्णिमा।
कार्त्तिकी फाल्गुनी चैत्री ज्येष्ठा पञ्चदशी सिता।
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारकाः।
आसु तोयमपि स्नात्वा तिलदर्भविमिश्रितम्॥
पितृनुद्दिश्य यो दद्यात्स गतिं परमां लभेत्।
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्॥
सर्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु।

अमावास्यातिरिक्ताः सर्वाः शुक्ला ग्राह्याः। आसां च तोयमपि इत्यपिशब्दाच्छ्राद्धमित्यर्थः। शूलपाणिस्त्वेतस्य निर्मूलत्वात्काम्यत्वमेवेत्याह। हेमाद्रौ पुराणान्तरे—

आश्विने दशमी शुक्ला श्रावणी कार्त्तिकी तथा।
मन्वन्तरादयो ह्येता दत्तस्याक्षयकारकाः॥ इति।

इति मन्वन्तरादयः।

अथ कल्पादयः।

नागरखण्डे—

अथ कल्पादयो राजन्! कथ्यन्ते तिथयः शुभाः।
यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत्॥
चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराभवत्।
तस्य शुक्लत्रयोदश्यामुदानः समजायत।
कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत्॥
अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पत।
वैशाखस्य तृतीयायां शुक्लायां नीललोहितः॥
चतुर्दश्यां तु शुक्लायां प्रवृत्तो गरुडाभिधः।
समानस्तु द्वितीयायां कृष्णायामुदपद्यत॥
माहेश्वरं चतुर्दश्यां कृष्णपक्षे समागमत्।
ज्येष्ठशुक्लतृतीयायां वामदेवस्य सम्भवः॥
पौर्णमास्यां तु तस्यैव कौर्मः प्रववृते नृप!।
कृष्णपक्षे तृतीयायामाग्नेयः समजायत॥
पितृकल्पस्त्वमावास्यां तस्यैवाश्रित्य पप्रथे।
शुचौ शुक्लचतुर्थ्यां तु कल्पो राथन्तरोऽभवत्॥
तस्यां तस्यैव कृष्णायां सोमकल्पः समापतत्।
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत॥
तस्यैव कृष्णपञ्चम्यां मानवः समपद्यत।
षष्ठीं प्रौष्ठपदे शुक्ले प्राप्य प्राणाभिधोऽभवत्॥
सितेतरायां षष्ठ्यां तु तस्यासांत्पुष्कराह्वयः।
बृहत्कल्पस्तु सप्तम्यां नभसः प्रत्यपद्यत॥
षष्ठ्यां प्रौष्ठपदेऽष्टम्यां शुक्लायामाश्विनस्य तु।
कृष्णायामपि वैकुण्ठः प्रविवेश विशांपते!॥
कार्त्तिकस्य सिताष्टम्यां कल्पः कन्दर्पसंज्ञकः।
असितायां पुनर्यज्ञे लक्ष्मीकल्पस्य कल्पना॥

मार्गशुक्लनवम्यां च कल्पः सद्योऽभ्यपद्यत।
असितायां च सावित्रीकल्पः प्रारम्भमभ्यगात्॥
पुष्ये दशम्यां शुक्लायामीशानः प्रादुरास ह।
असितायामघोरस्य कल्पस्योपक्रमोऽभवत्॥
एकादश्यां तु शुक्लायां माघे ध्यानः प्रजग्मिवान्।
तस्यामेव तमिस्रायां वराहः प्राप भूपते!॥
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य तु।
कृष्णायामपि वैराजो विरराज महामते!॥
इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः।
आरम्भतिथयस्तेषामुक्ताः पुण्यतमा मया॥
तासु श्राद्धे कृते पुण्यमाकल्पस्थायि कल्पते।

मत्स्यपुराणे तु अन्यास्तिथयः कल्पादित्वेनोक्ताः।
यथा,

ब्रह्मणो हि दिनादिर्यः कल्पस्यादिः प्रकीर्त्तितः।
वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च॥
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथापरा।
शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी॥
नवमी मार्गशीर्षस्य सप्तैवैताः स्मराम्यहम्।
कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः॥

तस्यैवान्त्येति। तस्य चैत्रस्य अन्त्या अमावास्येत्यर्थः। वैशाखफाल्गुनयोः कृष्णतृतीया चैत्रपञ्चमी तदमावास्येति चतस्रः कृष्णाः। माघत्रयोदशीकार्त्तिकदशमीमार्गशीर्षनवमीति तिस्रः शुक्लाः। एवं सप्त। सप्तैव स्मरामीत्युक्तेर्नान्यस्मृतकल्पादिपरिसङ्ख्या। प्राशस्त्यद्योतनार्थो वा एवशब्दः।

इति कल्पादयः।

अथ व्यतीपातः।

वाराहपुराणे—

दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये।
शतघ्नं तत्तु सङ्क्रान्त्यां शतघ्नं विषुवे ततः॥
युगादौ तच्छतगुणमयने तच्छताहतम्।
सोमग्रहे तच्छतघ्नं तच्छतघ्नं रविग्रहे॥
असङ्ख्येयं व्यतीपाते दानं वेदविदो विदुः।

घ्नं=गुणितम् । विष्कुम्भादियोगेषु सप्तदशो योगो व्यतीपात इति । अस्य घटिकासु विशेषो ज्योतिःशास्त्रे—

विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः ।
तपने दशनाड्यस्तु पतने सप्तनाडिकाः ॥

उत्पत्त्यादयो भागाः । द्वियुता विंशतिः द्वाविंशतिरित्यर्थः । तत्र फलं नरसिंहपुराणे—

फलं लक्षमुत्पत्तौ भ्रमणे कोटिरुच्यते ।
तपने दशकोट्यस्तु पतने दत्तमक्षयम् ॥

हेमाद्रौ याज्ञवल्क्यः—

उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु ।
अर्बुदगुणितं पतने जपदानाद्यक्षयं पतिते ॥

वृद्धमनुना अन्यथोक्तम्—

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतम्=अश्लेषा । मस्तकम्=आदिचरणः । एतन्नक्षत्रान्यतमनक्षत्रप्रथमचरणयुक्ता अमावास्या रविवारवती व्यतीपात इति । केचित्तु मस्तकं मृगशिर इत्याहुः । सूर्याचन्द्रमसोः क्रान्तिसाम्यं ज्योतिःशास्त्रगम्यं व्यतीपात इति कल्पतरुः ।

भृगुः—

क्रान्तिसाम्यसमयः समीरितः सूर्यपर्वसदृशो मुनीश्वरैः ।
तत्र दत्तहुतजापपूजनं कोटिकोटिगुणमाह भार्गवः ॥ इति ।

हेमाद्रौ स्मृत्यन्तरे—

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥
अस्मिन् हि गोभूमिहिरण्यवाससां दानेन सर्वं च विहाय पापम् ।
सुरत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्वं लभते मनुष्यः ॥

पञ्चाननस्थौ=सिंहस्थौ । पाशाभिधाना=द्वादशीति हेमाद्रिः । करभेण=हस्तेनेति ।

अथ वैधृतिः ।

विष्णुः,

वैधृतौ च व्यतीपाते दत्तमक्षयकृद्भवेत् ।

भारद्वाजोऽपि—

व्यतीपाते वैधृतौ च दत्तस्यान्तो न विद्यते ।

वैधृतिश्च व्यतीपातवत्क्रान्तिसाम्यमिति केचित् । योगविशेष इत्यन्ये ।

इति वैधृतिः ।

अथावमदिनम् ।

तत्र श्राद्धकालं प्रक्रम्य वशिष्ठः—
एकस्मिन्सावसानेऽह्नि तिथीनां त्रितयं यदा ।
तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलम् ॥

अथ नवान्नश्राद्धकालः ।

विष्णुधर्मोत्तरे—
व्रीहिपाके च कर्त्तव्यं यवपाके तथैवच ।
(१)न तौ वाह्यौ महाराज ! विना श्राद्धं कथंचन ॥

व्रीहिः=शरत्पक्वधान्यं षष्टिकादि । अत एव—
व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धाविताः ॥

इति परिशिष्टे हैमन्तिकधान्यादिभ्यस्तस्य पृथगुपादानं कृतम् । इदं च शुक्लपक्षे कार्य्यम् । तथा च—

ब्रह्मपुराणे,
शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम् ।
गच्छेत् क्षेत्री विधानेन गीतवाद्यपुरःसरम् ॥

इत्युक्रम्य—
तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा ।
कृष्णपक्षनिषेधः कामधेनौ—
कृष्णपक्षे नवान्नं तु न कुर्यान्मानवो यतः ।
पितरस्तं न गृह्णन्ति दाता च नरकं व्रजेत् ॥

ज्योतिषे—
नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
नवश्राद्धं न कुर्वीत पुत्रदारधनक्षयात् ॥

त्रिजन्मनि=जन्मातिथौ जन्मनक्षत्रे जन्मचन्द्रे वेति कामरूपीये । अपरे तु त्रिजन्मनि प्रथमदशमैकोनविंशतिनक्षत्रेषु ।

तथा दीपिकायामपि—
त्रयोदशीं जन्मदिनं च नन्दां जन्मर्क्षतारां सितवासरं च ।
त्यक्त्वा हरीज्येन्दुकरान्त्यमैत्रध्रुवेषु च श्राद्धविधानमिष्टम् ॥

हरिः=श्रवणः । इज्यः=पुष्यः । इन्दुर्मृगशिराः । करो=हस्तः । अन्त्यो=रेवती । मैत्रमनुराधा । ध्रुवमुत्तरात्रयरोहिण्यः । प्राह्यान्तिथिनक्षत्राण्यपि

(१) वाह्यौ याप्याविन्यर्थः ।

ज्योतिष एव—

हस्तस्वातिपुनर्वसू मृगशिरःपुष्यानुराधा तथा
मूलायां श्रवणे च रेवतिधने चित्रानले वारुणे।
ब्राह्मे शक्रविशाखयोश्च तुरगे सौम्येन्दुजीवादिके
चन्द्रे शोभनतारके च शुभदं श्राद्धं नवान्ने कृतम्॥
अस्य च गौणकाल उक्तः स्मृतौ—
श्यामाकैर्व्रीहिभिश्चैव यवैश्चान्योन्यकालतः।
प्राग्यष्टुं युज्यतेऽवश्यं न ह्यत्राग्रयणात्ययः॥

श्यामाकैरित्येतद्वानप्रस्थपरम् "गृहमेधी हि यवाभ्यां शरद्वसन्तयोर्यजेत श्यामाकैर्वनी वर्षासु" इति श्रुतेरिति कामरूपीये।

इति नवान्नकालः।

अथ नवोदकादिश्राद्धकालः।

नवोदके नवान्ने च गृहप्रच्छादने तथा।
पितरः स्पृहन्त्यन्नमष्टकासु मघासु च॥
तस्माद्दद्यात्सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च।

नवोदके=वर्षोपक्रमे। आर्द्रास्थरवाविति यावत्। गृहप्रच्छादने=नवगृहकरणे।

इति नवोदकनवगृहकरणश्राद्धकालः।

अथ क्षयाहकालनिर्णयः।

तत्र ब्रह्मपुराणे—

प्रतिसंवत्सरं कार्यं मातापित्रोर्मृताहनि।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि।

अत्र मात्रादिसम्प्रदानकश्राद्धकाविधौ प्रतिसम्बन्धिपुत्रादेरर्थात्कर्तृत्वलाभोऽध्यवसेयः। भ्रातुरित्यत्रापि मध्यपाठितत्वादपुत्रस्येति पदं सम्बध्यते। ज्येष्ठस्येत्यनेनापुत्रस्यापि कनिष्ठस्य भ्रातुर्नावश्यकं श्राद्धमिति गम्यते न पुनः सर्वथा निषेधः।

न पुत्रस्य पिता कुर्यान्नानुजस्य तथाग्रजः।
अपि स्नेहेन कुर्यातां सपिण्डीकरणं विना॥

इति हेमाद्रिधृतवचनैकवाक्यत्वात्। अत्र मृताहशब्देन मरणाधिकरणकतिथिसजातीया तिथिर्विवक्षिता। संवत्सरान्ततिथौ मृतिसम्बन्धाभावात्। सजातीयत्वं च तिथेर्न प्रतिपदादित्वमात्रेण किन्तु तन्माससपक्षसजातीयमासपक्षगतत्वेन च।

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यक्षं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

इति व्यासवचनात् । अत्र च अहःपदम् अहोरात्रपरम् । अत्र च—

मृतेऽहनि पितुर्यस्तु न कुर्यात् श्राद्धमादरात् ।
मातुश्च खगशार्दूल ! वत्सरान्ते मृताहनि ॥

इति भविष्यपुराणे वत्सरान्तग्रहणान्न मरणाधिकरणकतिथेः श्राद्धाधिकरणत्वं किन्तु वत्सरान्ततिथिसजातीयत्वनिरूपकत्वमेव । तेन यत्केन ।चिदुच्यते प्रतिसंवत्सरमित्याविशेषश्रवणाद्वर्षे भवं वार्षिकमितिव्युत्पन्नसमाख्याबलाच्च मरणाधिकरणकतिथेरपि श्राद्धाधिकरणत्वम् अतश्च सांवत्सरिकं मरणाधिकरणतिथावपि प्राप्तम् । "आद्यमेकादशेऽहनि" इतिवचनादेकादशाहे कर्त्तव्यमिति, तन्निरस्तं वेदितव्यम् । उक्तवाक्ये वत्सरान्तग्रहणेन मरणतिथौ श्राद्धप्राप्तेरभावात् । "आद्यमेकादशेऽहनि" इतिवचनं तु मासिकविषयम् । तस्य हि—

मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।

इतिवचनात्तत्तन्मासाद्यभूतायां मृततिथावेव कर्त्तव्यत्वात् । सर्वाद्यमरणाधिकरणकतिथावपि प्राप्तस्य युक्तम् "आद्यमेकादशेऽहनि" इत्यनेनोत्कर्षविधानम् । अत एव तत्रैव मासे भवं मासिकमित्येव समाख्याव्युत्पत्तिः । सांवत्सरिके तु उक्तवाक्ये वत्सरान्तग्रहणाद्वर्षान्ते भवं वार्षिकमित्येव समाख्याव्युत्पत्तिः । अत्र च "वत्सरान्ते मृताहनि" इत्यत्र संवत्सरान्ते जाते मृताहनीत्यर्थो बोध्यः । तथाहि । अत्र हि न संवत्सरस्य ग्रहणं तिथिवृद्धिह्रासाभ्यां मृताहकालत्वानुपपत्तेः । किन्तु चान्द्रस्य । अत एव—

आब्दिके पितृकार्ये च मासश्चान्द्रमसः स्मृतः ।

इतिव्यासवचनम् । अतश्च चान्द्रसंवत्सरस्य पूर्वतिथ्यन्तत्वेन द्वितीयवत्सराद्यभूताया मृततिथेः पूर्ववत्सरान्तत्वाभावान्न वत्सरान्ते मृताहनीतिसामानाधिकरण्यं किन्तु वत्सरान्ते जाते मृताहनीत्येव वचनार्थः । तेन द्वितीयवत्सराद्यमृततिथौ श्राद्धं कार्यम् इति दाक्षिणात्यसम्मतोऽर्थः ।

शूलपाणिस्तु मासे भवं वर्षे भवमित्येव समाख्याव्युत्पत्तिः न चैवं सर्वाद्यमृततिथौ मासिकसांवत्सरिकादिकरणापत्तिः । मृततिथेर्मृततिथिं यावच्चान्द्रस्य माससंवत्सरादेर्विवक्षितत्वात् । मृततिथेरिति चावधौ पञ्चमी दर्शाद्दर्शश्चान्द्र इतिवत् । अतश्च अन्त्यमृततिथे-

रेव पूर्वमासवर्षशब्दार्थत्वं नोत्तरमासवर्षशब्दार्थत्वं पूर्वमृततिथेः। तेन प्रथमवर्षान्तर्गतासु द्वितीयादिमृतितिथिषु प्रथमादिमासिकानि प्रथमसंवत्सरान्ते च प्रथमवार्षिकम् "आद्यमेकादशेऽहनि" इति तु मासिकाद्भिन्नमेव सर्व्वैकोदिष्टप्रकृतिभूतं श्राद्धं विधत्ते न पुनराद्यमासिकस्योत्कर्षमित्याहु।

धनञ्जयपशुपतिहलायुधभानूपाध्यायजीमूतवाहनधवलेश्वरादयस्तु—

यस्मिन्राशिगते भानौ विपत्तिं यान्ति मानवाः।
तेषां तत्रैव देया स्यात्पिण्डदानोदकक्रिया॥

इतिवचनात्सांवत्सरिकस्य सौरमासेन कर्त्तव्यता। न चेदं मलमासमृताब्दिकपरं सङ्कोचे मानाभावात्। न च ह्रासवशात्तिथिलोपे श्राद्धलोपापत्तिः।

श्राद्धविघ्ने समुत्पन्ने तिथिलोपे च वा पुनः।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः॥

इतिवचनेनैकादश्यां तत्सम्भवात्। यत्तु चान्द्रमासप्रतिपादके वचने आब्दिकग्रहणं तत् प्रत्यब्दक्रियमाणदुर्गोत्सवादिपरमित्याहुः। अत्र च—

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु॥
यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु॥

इतिदेवलादिवचनाद्यथा कर्म्मकालेऽव्यविद्यमानाया अपि तिथेः सम्पूर्णत्वकल्पनया ग्रहणं न तथा मरणाधिकरणाहोरात्रे त्रिमुहूर्त्तादिरूपेण उदयास्तमयवर्त्तिन्यास्तिथेर्म्मरणसम्बन्धितया ग्रहणम, किन्तु—

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।

इतिवशिष्ठवचनेन मरणकालिकया एवेति।

### अथ क्षयाहाद्यज्ञाने सांवत्सरिककालनिर्णयः।

तत्र यस्य मरणतिथिर्मरणपक्षश्च न ज्ञायते तन्मासस्तु ज्ञायते। तस्य सांवत्सरिकं तन्मासगतामावास्यायां कर्त्तव्यम्। तथाच—बृहस्पतिः,

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि॥

मृताहनि यद्विहितं तदितिशेषः। अत्र च यद्यपि मृताहस्यैवाज्ञा-

नमुक्तं तथापि पक्षज्ञाने वक्ष्यमाणरीत्या तत्यागस्यानुचितत्वात् शुक्लपक्षगतैकादश्यामेव सांवत्सरिकश्राद्धप्राप्तेः पक्षाज्ञानेऽप्येतस्य निर्णायकत्वादत्र मृताहग्रहणं पक्षस्याप्युपलक्षणार्थम्। प्रोषित इति मृततिथ्यज्ञानकारणोपलक्षणम्। अत एव—

भविष्यपुराणे,

प्रवासमन्तरेणापि स्यातां तौ विस्मृतौ यदा। इत्यादि।

अत्र च सामान्यवचनात्पितृव्यादीनामपि मृताहाद्यज्ञाने अयमेव निर्णय उचितत्वात्। एवञ्च—

न जानाति दिनं यस्तु मासं वाथ नराधिप!।
मृतयोस्तु महाप्राज्ञ! पित्रोस्तु स कथं नरः॥

इति भविष्यपुराणीयप्रश्नवाक्ये पितृपदमुपलक्षणार्थं द्रष्टव्यम्। कालान्तरमाह—

मरीचिः,

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृताहनि।
एकादश्यां तु कर्त्तव्यं कृष्णपक्षे विशेषतः॥

अत्र विशेषत इतिश्रवणात् शुक्लैकादश्यामपि श्राद्धं भवतीति गम्यते। तत्र च यदि पक्षो विदितः स्यात् तदा तत्यागे कारणाभावाच्छुक्लपक्षैकादश्या एव मुख्यत्वम्। यदि तु स न ज्ञायते तदा कृष्णपक्षस्य पित्र्ये प्रशस्तत्वेन विशेषत इत्युक्त्या च कृष्णैकादश्येव मुख्यः कालः। तदभावे तु शुक्लैकादश्याः कालत्वमिति विवेकः। हेमाद्र्यादिसकलदाक्षिणात्यमैथिलस्वरसोऽप्येवम्। स्मार्त्तभट्टस्तु प्रागुदाहृतबृहस्पतिवचनोक्तामावास्यापेक्षया कृष्णैकादश्या मुख्यत्वमभिप्रेत्य विशेषत इत्युक्तम्। न चैवं "श्राद्धविघ्ने" "विशेषत" इत्यस्यानुपपत्तिस्तत्रामावास्याया अविहितत्वात् इति वाच्यम्।

श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके।
अमावास्यां प्रकुर्वीत शुक्ले चैके मनीषिणः॥

इतिव्यासवचनेन तत्रामावास्याया विहितत्वादित्याह। यदा तु मरणमासो न ज्ञायते दिनं तु ज्ञायते तदा—

भविष्यपुराणे,

दिनमेव तु जानाति मासं नैव तु यो नरः।
मार्गशीर्षेऽथ वा भाद्रे माघेऽवाथ समाचरेत्॥

बृहस्पतिस्मृतावपि,

तदा ह्याषाढके मासि माघे वा तद्दिनं भवेत्।

अत्रापि शुक्लपक्षज्ञाने तद्गता तत्तिथिर्ग्राह्या। नो चेत्कृष्णपक्षगतैव तस्य पित्र्येऽतिप्रशस्तत्वात्। यदा तु त्रयाणामपि मरणसम्बन्धिमासपक्षतिथीनामज्ञानं तदा यदि प्रस्थानोत्तरमेव जीवनवार्त्ता न ज्ञाता तत्र प्रस्थानतिथ्यादिसजातीयमासतिथिपक्षा ग्राह्याः। यथाह—

बृहस्पतिः,

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा॥

दिनमासग्रहणं पक्षस्याप्युपलक्षणं पूर्ववत्। पूर्वोक्तयेत्यस्यायमर्थः। मासमात्राज्ञाने भाद्रपदादिगततत्पक्षतिथ्योः, पक्षमात्राज्ञाने तन्मासीयकृष्णपक्षगततत्तिथौ, तिथिमात्राज्ञाने तन्मासीयशुक्लैकादश्यां, मासपक्षयोरज्ञाने भाद्रपदादिमासीयकृष्णपक्षगततिथौ, पक्षतिथ्योरज्ञाने तन्मासीयकृष्णैकादश्यादौ, मासतिथ्योरज्ञाने तु भाद्रादिमासीयशुक्लैकादश्यामिति। यदा तु त्रयाणामपि प्रस्थानतिथ्यादिसमानजातीयानां मासपक्षतिथीनामज्ञानं यस्य च प्रस्थानोत्तरं बहुकालं जीवनवार्त्ता श्रुता पश्चाच्च मरणनिश्चयश्रवणं तस्याकृतप्रेतकार्यस्य श्रवणतिथ्यादिसजातीयमासपक्षातिथयो ग्राह्याः। तथा च

भविष्योत्तरे,

मृतवार्त्ताश्रुतेर्ग्राह्यौ तौ पूर्वोक्तक्रमेण तु।

पूर्वोक्तक्रमेण त्वित्यस्यायमर्थः। एकाद्यज्ञानकृतो यो निर्णयः पूर्वमुक्तः सोऽत्रापि द्रष्टव्य इति। अत्र च यद्दिने मरणनिश्चयश्रवणं तद्दिनेऽपि कृतप्रेतकार्यस्य आब्दिककरणं वेदितव्यम्। अकृतप्रेतकार्य्यस्य तु मरणनिश्चयश्रवणोत्तरं प्रतिकृतिदाहादिपूर्वकमौर्ध्वदैहिकं निवर्त्य द्वितीयसंवत्सरे श्रवणतिथौ कार्यमितिविवेकः। यदा तु त्रयाणामपि श्रवणतिथ्यादिसजातीयमासतिथिपक्षाणामज्ञानम् अथ वा प्रेतकार्यकरणनिश्चयस्तस्याब्दिकविषये-

प्रभासखण्डम्-

मृतस्याहर्न जानाति मासं वापि कथंचन।
तेन कार्यममायां तु श्राद्धं माघेऽथ मार्गके॥

वाशब्दः पक्षस्याप्यनुग्रहार्थः। अत एव चामावास्याग्रहणमुपपद्यते। अन्यथा तु—

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः॥

इति व्यासवचनेन पक्षस्यापि मृताहोपपादकत्वेन पक्षज्ञाने तस्यागस्य

कर्त्तुमशक्यत्वात् भाद्रादिमासीयशुक्लैकादश्यामेव प्राप्तेरमाग्रहणानुपपत्तिः। अथं च न त्रितयाज्ञानेऽपूर्वकालान्तरविधिर्गौरवात्। किन्तु अन्यतराज्ञानेऽपि विहितस्य अमावास्यादिकालस्यार्थादेव उभयाज्ञानेऽपि प्राप्तेरनुवादमात्रम्। अनुवादकत्वादेव च मुख्यकृष्णैकादशीरूपगौणशुक्लैकादशीरूपकालान्तरोपलक्षकत्वममाशब्दस्य माघादिपदस्य च भाद्राद्युपलक्षकत्वं न दोषाय। अत एव स्मार्त्तेन स्वमतानुसारेण एतद्वचनव्याख्यानावसरे कृष्णैकादश्यभावे एवामावस्या ग्राह्येत्युक्तम्। कथं च नेति मरणप्रवासमरणश्रवणादिना केनापि चिह्नेनेत्यर्थः। एवं च मरणसम्बन्धिमासाज्ञाने च मरणमासीयप्रवासतिथिर्ग्राह्येत्याद्यपि सूचितं भवति। अत्र च मरणसम्बन्धितिथ्याद्यज्ञाने प्रस्थानसम्बन्धिनो मरणश्रवणसम्बन्धिनश्च तिथ्यादेर्ज्ञाने प्रस्थानसम्बन्धितिथ्यादिकमेव ग्राह्यम्। प्रागुदाहृतबृहस्पतिवचने मरणसम्बन्धितिथ्याद्यज्ञाने प्रस्थानसम्बन्धितिथ्यादीनामेव ग्राह्यत्वावगमात्। प्रस्थानस्य श्रवणापेक्षया प्राथम्याच्चेति बहवः। वस्तुतस्तु श्रवणदिने मरणस्य परम्परया मृताहसम्बन्धावगतेः मुख्यतयावगतस्य सांवत्सरिकतिथिसजातीयतिथ्यवच्छेदकत्वरूपस्य सम्बन्धविशेषस्य बाधेऽपि अर्थादवगतस्य सम्बन्धसामान्यस्य सति सम्भवे आनुबन्ध्याग्नीषोमयोः साद्यस्के प्रकृतिदृष्टपौर्वापर्य्यमात्रस्येव त्यागायोगात् मरणसम्बन्धितिथ्याद्यज्ञाने श्रवणसम्बन्धितिथ्यादिकमेव ग्राह्यम्। न च बृहस्पतिवचनविरोधः। मरणस्येति षष्ठ्याः सम्बन्धमात्रवाचित्वेन श्रवणद्वारकत्वेऽपि न कदाचित् क्षतिः "सप्तदशारत्निर्वाजपेयस्य" इतिवत्। (अ०३पा० १ अधि० ९) तस्मात् मरणसम्बन्धितिथ्याद्यज्ञाने श्रवणसम्बन्धितिथ्यादिग्रहणं तदज्ञाने च प्रस्थानसम्बन्धितिथ्यादिग्रहणं तस्याप्यज्ञाने प्रभासखण्डोक्तकालग्रहणमिति विवेकः। यत्त्वत्र वाचस्पतिना मासस्याज्ञाने न कार्य्यं मूलाभावादित्युक्तं, तत् कालादर्शहेमाद्रिस्मार्त्तभट्टाचार्य्यादिधृतपूर्वोक्तबृहस्पत्यादिवचनैर्मासाज्ञाने भाद्रादिमासानां विहितत्वादुपेक्ष्यम्। यस्य तु अज्ञातदेशगतस्य जीवनमरणान्यतरानिर्धारणात्पञ्चदशवर्षाणि प्रतीक्ष्य पश्चात्प्रतिकृतिदाहाद्यौर्ध्वदेहिकं क्रियते तस्य दाहसम्बन्धितिथ्यादिसजातीया मासपक्षातिथयो ग्राह्याः। तथा च—

जातुकर्ण्यः,

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तु प्रतिरूपकम्॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना तथा।

तदानीमिव सर्वाणि शेषकार्याणि सञ्चरेत् ।

तदानीमिव=तदानीं मृतस्येव । शेषकार्याणि=मासिकाब्दिकादीनि । यत्तु-

यस्य न श्रूयते वार्त्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणम् ॥

इति बृहस्पतिवचनम् ,

प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥
जीवन् यदि स आगच्छेत् घृतकुम्भे नियोजयेत् ।
उद्धृत्य स्नापयित्वा तु जातकर्म्मादि कारयेत ॥
द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वाथ तत्र तु ॥
इष्टीमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ।

इतिवृद्धमनुवचनं च द्वादशवर्षप्रतीक्षाविधायकं तत् पित्रतिरिक्तपरम् । प्रागुदाहृतजातूकर्ण्यवाक्ये पितरीतिविशेषोपादानात् । केचित्तु पञ्चाशद्वर्षन्यूनवयस्कस्य पञ्चदशवर्षप्रतीक्षा तदधिकवयस्कस्य द्वादशेति व्यवस्थामाहुः । तन्न । वाक्यानारूढतयास्या निर्मूलत्वात् । जीवन्नित्यादि तु पितर्य्यपि भवत्येव । व्रतचर्य्या ब्रह्मचर्यरूपा ।

इति मृताहाज्ञाने सांवत्सरिककालनिर्णयः ।

अथ श्राद्धविघ्ने निर्णयः ।

तत्राशौचेन तावत्क्षयाहश्राद्धप्रतिबन्धे आशौचान्त्यदिनोत्तरदिने तत्कर्त्तव्यम् । तथा च--

ऋष्यशृङ्गः,

देये पितॄणां श्राद्धे तु आशौचं जायते यदि ।
तदाशौचे व्यतीते तु तेषां श्राद्धं विधीयते ॥
शुचिभूतेन दातव्यं या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन ॥ इति ।

देय इतिविशेषणं मृताहातिरिक्तश्राद्धव्यावृत्त्यर्थम् । तेषामाशौचे शङ्खवचनेनादेयत्वावगमात् ।

यथा,

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च ।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्त्तते ॥ इति ।

ननु पितृकर्मत्वाविशेषान्मृताहश्राद्धस्यापि पर्युदस्तत्वेनादेयत्वा-त्कथं मृताहश्राद्धव्यतिरिक्तश्राद्धस्यैवादेयत्वम् । अत्र केचिदाहुः । प्रेतपिण्डक्रियापदस्य प्रेतैकोद्दिष्टपरत्वात्प्रेतैकोद्दिष्टस्याशौचे देयत्वसिद्धौ तद्विकारे सांवत्सरिकैकोद्दिष्टेऽपि अतिदेशेन देयत्वे प्राप्ते ऋष्यशृङ्गवचनेनाशौचान्तकालविधिरिति । तन्न । साग्निकौरसकर्त्तृकस्य पार्वणविधिना क्रियमाणस्य प्रत्याब्दिकश्राद्धस्यैकोद्दिष्टधर्मानतिदेशाद्देयत्वाप्रसक्तेराशौचान्तकर्त्तव्यता न स्यात् । न चेष्टापत्तिः शिष्टाचारविरोधापत्तेः । किञ्च शङ्खवचनात्प्रेतैकोद्दिष्टव्यतिरिक्तपितृकर्मणो देयत्वे सिद्धे सांवत्सरिकैकोद्दिष्टस्यापि उपदेशनादेयत्वप्राप्तेर्नातिदेशावगतदेयत्वप्रसक्तिः । वस्तुतस्तु प्रेतपिण्डक्रियापदं न प्रेतैकोद्दिष्टपरं तत्परत्वे लक्षणापत्तेः । किन्तु पिण्डदानमात्रपरम् । अतश्च प्रेतैकोद्दिष्टस्यापि आशौचे अदेयत्वान्नातिदेशेन सांवत्सरिकैकोद्दिष्टे देयत्वप्रसक्तिरस्ति । तस्मान्नेदृक्व्याख्यानं युक्तम् ।

अन्ये तु न देय इतिविशेषणेन पार्वणादीनामाशौचान्ते अकर्त्तव्यता किन्तु कामधेनौ मृताहप्रकरण एवैतस्य ऋष्यशृङ्गवचनस्य लिखितत्वादाकरेऽपि मृताहप्रकरण एवैतदित्यनुमीयते । अतश्च प्रकरणान्मृताहकर्तव्यश्राद्धस्यैवाशौचान्तकर्त्तव्यतानेन विधीयते न पार्वणादीनामित्याहुः । तन्न । देयपदस्यानर्थक्यापत्तेः । कामधेनुलिखनमात्रेणाकरे मृताहप्रकरणस्थत्वकल्पनस्यान्याय्यत्वाच्च । तस्माद्देय इतिविशेषणवशादेव पार्वणादिव्यावृत्तिः कथम् । तेषां तावददेयत्वं शङ्खवचनात्स्पष्टमेव । मृताहश्राद्धस्य देयत्वं तु —

श्राद्धविघ्ने समुत्पन्ने मृताहेऽविदिते तथा ।
एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः ॥

इतिलघुहारीतवचनेन । अत्र हि मृताहपदं श्राद्धविघ्न इत्यस्यापि विशेषणं मध्यगतत्वेन विशेषाग्रहणात्साकाङ्क्षत्वाच्च । अथ वा यद्यपि मृताहपदमविज्ञात इत्यनेनैव सम्बध्यते तथापि उपस्थितत्वात्तत्रत्य एव विघ्नो बोध्यः । अतश्च विघ्नमात्रे मृताहश्राद्धस्य देयत्वावगमादाशौचविघ्नेऽपि देयत्वप्रसक्तिः । न चैकादश्यादिकालपुरस्कारेणात्र देयत्वावगमान्न ऋष्यशृङ्गवचनेनाशौचान्तकालविधिसम्भव इतिवाच्यम् । अस्य सत्यपि देयताविशेषपरत्वे आर्थिकस्य देयतासामान्यस्योपजीवनेनात्र कालान्तरविधिः सम्भवत्येव । यथा सत्यपि आग्नेय्याः स्तोत्रादिविशेषसम्बन्धेऽर्थसिद्धं क्रतुसामान्यसम्बन्धं लाघवादुपजीव्य "आग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्राग्नीध्रोपस्थानाङ्गत्वेन विधिः । एवं च अत्रत्यस्य एकादश्या-

दिकालस्य "न त्वन्या वै कदाचन" इतिऋष्यशृङ्गवचनेन निषेधान्मृताह-प्रत्यासन्नमुख्याशौचानन्तरदिनापेक्षया गौणत्वम्। निषेधार्थमुपजीव्य-स्य तस्य सर्वथा प्रतिषेद्धुमशक्यत्वेन प्रतिषेधस्य सम्भवद्विषयत्वात्। अत एव स्मृतिचन्द्रिकाकालादर्शहेमाद्रिप्रमुखैर्लघुहारीतवचनमाशौचविघ्नेऽपि व्याख्यायाशौचान्तकालापेक्षया एकादश्यादिकालस्य गौणत्वमुक्तम्। एतेन यत्केनचिदुक्तमाशौचविघ्ने आशौचान्ततिथौ देयं न कृष्णैकादशी प्रतीक्षणीया तस्या "न त्वन्या वै कदाचन" इत्यनेन प्रतिषेधात् वि-घ्नान्तरविषयत्वमिति। यच्च गौडैकदेशिनोक्तम्—

श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके।
एकादश्यां न कर्त्तव्यं दर्शे वापि विचक्षणैः॥

इतिबहुनिबन्धधृतवचनादाशौचान्त एव कार्य्यमिति, तदप्यपास्तं वेदितव्यम्। उदाहृतवचनं तु सम्भवद्विषयं व्याख्येयम्। अन्यथा—

प्राप्ते प्रत्याब्दिके श्राद्धे त्वन्तरा मृतसूतके।
आशौचानन्तरं कुर्य्यात्तन्मासेन्दुक्षयेऽपि वा॥

इतिकालादर्शधृतगोभिलवचनस्य निर्विषयत्वापत्तेः। तस्मादाशौचेन श्राद्धप्रतिबन्धे आशौचान्ते कार्य्यम्। तत्र प्रमादादिना श्राद्धासम्भवे अ-मावास्यायां, तस्याः प्रागुदाहृतकालादर्शधृतगोभिलवचनेनाशौचपुरस्कारेण विहितत्वात्। तत्राप्यसम्भवे कृष्णैकादश्यां लघुहारीतवचने विघ्नसामान्ये तस्या विहितत्वात्। तत्राप्यसम्भवे शुक्लैकादश्यां तस्या अपि विशेषत इ-त्युक्त्यानुकल्पत्वेन सूचितत्वात्। यत्त्वत्र वाचस्पतिना लघुहारीतवचनस्य आ-शौचातिरिक्तमृताहप्रतिबन्धविषयत्वमुक्तं तत् "न त्वन्या वै कदाचन" इत्यप्राप्तकालप्रतिषेधानुपपत्तेरयुक्तम्। शूलपाणिरप्येवम्। इयं चाशौचविघ्ने तदन्तकर्त्तव्यता पुरुषप्रयत्नानपनेयाशौचविघ्ने न तु पुरुषप्रयत्नापनेये तस्य श्राद्धाहर्विहितशौचादेवापगमात्। तथा च क्षताशौचस्यापि पु-रुषप्रयत्नानपनेयत्वात् क्षताशौचेन विघ्ने तदन्त एव कार्यमितीति के-चित्। अन्ये तु क्षताशौचस्य आशौचत्वे प्रमाणाभावात् आशौचि-त्वेऽपि वा—

श्राद्धविघ्ने समुत्पन्ने त्वन्तरा मृतसूतके।

इतिपूर्वोदाहृतवचनेन जननमरणाशौच एव तदन्तकर्त्तव्यताविधा-नात् न क्षताशौचे तदन्ते कार्य्यं किन्तु एकादश्यादावेवेत्याहुः। एवञ्च यन्मते तदन्तकर्त्तव्यता तन्मते पूर्वदिनकर्त्तव्यनियमस्यापि उत्तरेद्युरे-वानुष्ठाने पूर्वदिने निर्व्रणीभावसंशयेन प्रधानकर्त्तव्यत्वानिश्चयात्। न चोत्तरेद्युरपि पूर्वाह्णरूपकालाभावादननुष्ठानमिति वाच्यम्। अङ्गानुरो-

धेन प्रधानलोपस्यान्याय्यत्वात्। न वाऽकाले कृतमकृतमिति वाच्यम्। गौणकालस्य विद्यमानत्वात्। अन्यथा अशक्त्या सद्यस्कालायाममावास्यायां पूर्वदिनसाध्यान्वाधानादिलोपापत्तेः। एवञ्च यद्वाचस्पतिनोक्तं व्रणाशौचस्थले पूर्वदिनकृत्यमनङ्गमेव निर्व्रणीभावसंशयेन पूर्वदिने प्रधानकर्त्तव्यत्वानिश्चयादुत्तरदिने च तन्निश्चये पूर्वाह्णरूपकालाभावात्स्पर्शाश्लेषे ज्यायामावाहनस्यैव बाध इति, तन्निरस्तम्। गौणकालसत्त्वेनाङ्गलोपस्यान्याय्यत्वात्। यदपि च दृष्टान्तकथनं तदपि दशमे आवाहनस्य निमित्तानन्तरं कर्त्तव्यत्वाभिधानात् आकराज्ञानमूलम्। एवञ्च जननमरणाशौचान्त्यदिनोत्तरदिने श्राद्धकरणे तद्दिन एव पूर्वदिनकृत्यानुष्ठानं पूर्वदिने आशौचसत्त्वेन अनधिकारात्। यानि तु अर्थलुप्तानि एकभक्तादीनि तेषां लोप एव। वाचस्पतिस्तु पूर्वदिन एव कार्य्यं तत्र शौचस्यातन्त्रत्वात् एकादशाहश्राद्धवदित्याह। अत्र च "देये पितॄणां" इत्यत्र मृताहनिरूप्यश्राद्धस्य तस्मिन्नहनि आशौचे तदन्तकर्त्तव्यता बोध्यते। अतश्च मासिकोनषाण्मासिकत्रैपक्षिकादीनामपि लाभः। तेन मासिकसांवत्सरिकयोराशौचविघ्ने तदन्ते कर्त्तव्यता तदसम्भवे तु अमावास्यादौ। आशौचातिरिक्तविघ्ने तु मासिकैकोद्दिष्टं मासिकान्तरदिने कार्य्यम्। तथाचात्रिः—

तदहश्चेत्प्रदुष्येत केन चित्सूतकादिना।
सूतकानन्तरं कुर्य्यात्पुनस्तदहरेव वा॥ इति।

अत्र च प्रथमस्य कालस्य सूतकविघ्नविषयत्वं ऋष्यशृङ्गवचनैकवाक्यत्वात्। द्वितीयस्य तु आदिशब्दोक्तसूतकातिरिक्तविघ्नविषयत्वम्। ऋष्यशृङ्गवचनस्य सामान्यवचनत्वेऽपि अनयोः पक्षयोर्विकल्पस्य अष्टदोषदुष्टत्वाद्भिन्नविषयत्वं युक्तमेव। न चैतस्य मासिकैकोद्दिष्टविषयत्वे मानाभावः।

मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते॥

इतिवचनैकवाक्यतालाभेन तथा निश्चयात्। अत एव हेमाद्रौ देवलवचनम्—

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते।
मासेऽन्यस्मिंस्तिथौ तस्मिन्श्राद्धं कुर्य्यात्प्रयत्नतः॥ इति।

यद्यपि चात्र निमित्तकथनवेलायामेकोद्दिष्टपदं मासिकाब्दिकसाधारणं प्रतीयते तथापि मासेऽन्यस्मिन्नितिवचनान्मासिकैकोद्दिष्टपरमेव। अन्यथा अब्देऽन्यस्मिन्निति ब्रूयात्। इदं च मासिकान्तरादिनरूपकाल-

विधानं न कृष्णैकादश्याद्यसम्भवे तस्य मासिकपुरस्कारेण विशेषविहितत्वात्। अत एव स्मृतिचन्द्रिकाकारेण "अमावास्यायां प्रकुर्वीत" इतिवचनं सांवत्सरिकश्राद्धविषयमित्युक्तम्। गौडनिबन्धे तु एकादश्यादावकरणे मासिकान्तरदिने कार्य्यमित्युक्तम्। अत्र चोक्तवचने एकोद्दिष्टग्रहणादेकोद्दिष्टरूपेष्वेव मासिकेषु दिनान्तरकालविधानं न पार्वणरूपेषु अनुमासिकेष्विति चन्द्रिकाकारः। अत्र च पतितमासिकं कृत्वा पश्चात्तद्दिनमासिकं कार्य्यं क्लृप्तक्रमत्यागे प्रमाणाभावात् इति गौडाः। तत्र एककालकर्त्तृकत्वेन तन्त्रस्यैव युक्तत्वात्। श्राद्धक्रमस्य आर्थिकत्वेन तद्बाधेऽप्यवैगुण्यात्। अस्तु वा क्रमस्याङ्गत्वं तथापि अनुपादेयकालानुरोधेन तद्बाधो युक्त एव। न च अपराह्णादेः अतिशयमात्रार्थत्वात्तद्बाधेऽपि न श्राद्धकालबाध इति वाच्यम्। तादृशापराह्णाद्यनुरोधेनापि तन्त्रस्य युक्तत्वात्। अन्यथा कालबाधाभावे भिन्नप्रयोगवचनपरिगृहीतत्वात् सङ्क्रान्त्यमावास्यादिश्राद्धानामपि भेदेन करणापत्तिः। तस्मात्तन्त्रमेव युक्तम्। अत एव "तत्तदुत्तरसातन्त्र्यात्" इतिपूर्व्वोदाहृतवचने तन्त्रमुक्तम्। तच्चाङ्गानां न तु प्रधानस्यापि षोडशसङ्ख्याव्याघातापत्तेः। तस्मात्पतितमासिकं मासिकान्तरदिने तद्दिनमासिकेन सह तन्त्रेण कार्य्यम्। आब्दिकं तु आशौचातिरिक्ते पाकासम्भवादिना विघ्ने तदुत्तरामावास्यादिषु कार्य्यं न तु आमेन।

व्यापन्नोऽप्याब्दिकं नैव कुर्य्यादामेन कर्हिचित्।
अन्नेनैवममायां तु कृष्णे वा हरिवासरे॥

इति कार्ष्णाजिनिवचनात्। व्यापन्नः=पाकासम्भवादिना। आमनिषेधसाहचर्य्यात्। व्याध्यादिना अशक्तेन तु पुत्रादिद्वारा तद्दिन एवान्नेन करणीयम्। अनुपादेयकालानुरोधेनोपादेयकर्त्तृप्रतिनिधेर्न्याय्यत्वात्। यत्तु—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्।
अमावास्यादिनियतं माससंवत्सरादृते॥
एकोद्दिष्टं तु कर्त्तव्यं पाकेनैव सदा स्वयम्।
अभावे पाकपात्राणां तदह्नः समुपोषयेत्॥

इति लघुहारीतवचनं, तन्न प्रतिनिधिमात्रस्य निषेधकं किन्तु असगोत्रप्रतिनिधिनिषेधकम्। तथा च प्रेतक्रियामधिकृत्य ब्रह्मपुराणे—

न कदाचित्सगोत्राय श्राद्धं देयमगोत्रजैः।

अगोत्रजैः=द्वारभूतैः न तु सकृत्कर्त्तृभिः सगोत्रायेत्यनन्वयापत्तेः। अतश्च प्रेतश्राद्धविकृतित्वात्सांवत्सरिकेऽपि असगोत्रप्रतिनिधिनिषे-

धात्तदैकवाक्यतया लघुहारीतवचनस्थस्वयंपदमसगोत्रप्रतिषेधकमेव । शूलपाण्यादिनिबन्धा अप्येवम् । केचित्तु स्वयं पाकेनेत्यन्वयमाहुः । अभाव इति पाकपात्राभावोऽत्र पाकसामग्र्यभावोपलक्षकः । तदहःसमुपोषयेत् इति मुख्यकालाकरणनिमित्तं प्रायश्चित्तरूपमुपोषणं तदह्नि कर्त्तव्यमित्यर्थः । श्राद्धं पुनः कृष्णैकादश्यादौ कार्य्यम् । अन्यथा पूर्वोदाहृतकार्ष्णाजिनिवचनविरोधापत्तेः । उपनयनादिकालातिपातेऽपि प्रायश्चित्तं कृत्वा उपनयनाद्यकरणापत्तेश्च । तस्मात्तदह्नि उपोषणरूपं प्रायश्चित्तं कृत्वा कृष्णैकादश्यादौ पुनः श्राद्धं कार्य्यमेव । मैथिलास्तु उपोषणमेव श्राद्धस्थानीयमाहुः । तस्माद्व्याध्यादिनासम्भवे पुत्रादिद्वारा कार्य्यम् । भार्यारजोयोगे तु तदहरेवात्मादिपक्केनान्नेन मासिकादि कार्य्यम् । यत्तु—

मृताहनि तु सम्प्राप्ते यस्य भार्या रजस्वला ।
श्राद्धं तदा न कर्त्तव्यं कर्तव्यं पञ्चमेऽहनि ॥

इतिहेमाद्रिमाधवादिलिखितं वचनं, तत् यस्य मृतस्य श्राद्धकर्त्री भार्या रजस्वलेति व्याख्येयम् । न तु श्राद्धकर्त्तुर्भार्या रजस्वलेति । हेमाद्रिस्तु गृहस्थस्य भार्य्यया सहैव श्राद्धेऽधिकाराद्रजस्वलादशायां स्नपनाविकारात् व्यासज्यवृत्तेर्भर्त्तृगतस्याप्यधिकारस्य निवृत्तत्वात्तस्यास्तद्दशापगम एव श्राद्धं कार्य्यम् । एतन्न्यायमूलकं च मृताहनीतिवचनम् । यत्तु—

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित् ॥

इति लौगाक्षिवचनं तदधिकृतभार्यान्तरसद्भावविषयमित्याह । तन्न । दम्पत्योः श्राद्धे सहाधिकारेप्रमाणाभावात् । न च "पाणिग्रहणाद्धि सहत्वं सर्वकर्म्मसु" इति वचनं मूलमितिवाच्यम् । एतस्य यत्र श्रौतस्मार्त्ताग्निसाध्येषु कर्म्मसु प्रमाणान्तरेण उभयाधिकारोऽवगतस्तदनुवादकत्वेन पूर्त्तादिष्विव श्राद्धे उभयाधिकारविधायकत्वाभावात् । न च श्राद्धस्यापि अग्निसाध्यत्वादुभयाधिकारिकत्वमिति वाच्यम् । अग्निसाध्यत्वेऽपि अधिकारस्य वक्तुमशक्यत्वात् । मृतपित्रादिकस्य अमावास्यादावकरणप्रत्यवायपरिहारार्थं पितृपितामहादिगततृप्त्युद्धारादिफलार्थं वा श्राद्धे पितृत्वाद्यनिरूपिकायास्तस्या मृतपितृकत्वाभावेन अधिकारासम्भवात् । न चाधानगतात्मनेपदविरोधः । आत्मनेपदाद्धि अग्निस्वामिगतं फलं जनयन्त्यग्निसाध्यानि कर्म्माणि न अस्वामिगतमित्येतावदवगम्यते न तु सर्वस्वामिगतं फलं जनयन्ति इति । दम्पत्यो-

मध्ये एकस्य रोगादिपीडितस्य तत्परिहारार्थमिष्टेः क्रियमाणायां तद्सम्भवात्। न च श्राद्धाङ्गपाकस्य मध्यमपिण्डप्राशनस्य च पत्नीसाध्यत्वात् पत्नीशब्दस्य च यज्ञस्वामिवचनत्वात्तस्या अधिकाराभावे कथं तत्कर्त्तृकत्वोपपत्तिरितिवाच्यम्। उक्तरीत्या अधिकारासम्भवे पत्नीशब्दस्य लक्षणया यजमानभार्यामात्रपरत्वात्। तस्मादधिकारसद्भावे प्रमाणाभावात्तस्यां रजस्वलायामात्मादिपक्केनान्नेन तदहरेव श्राद्धं कार्य्यम्।

इति श्राद्धविघ्ने निर्णयः।

अथ प्रेतश्राद्धानां कालाः।

तत्र तावत् द्विविधानि प्रेतश्राद्धानि नवानि नवमिश्राणि च।
नवश्राद्धं दशाहानि नवमिश्रं तु षडृतून्।

इति स्मृतेः। तेन अन्तर्दशाहं क्रियमाणानां श्राद्धानां नवानीतिसंज्ञा। संज्ञाकरणं तु 'चान्द्रायणं नवश्राद्धे' इति प्रायश्चित्ताद्युपयोगार्थम् तान्यनेकविधान्युक्तानि हेमाद्यदाहृतनागरखण्डे भर्तृयज्ञेन।

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतम्।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं तु कारयेत्॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः।
ततः सञ्चयनस्थाने तृतीयं श्राद्धमिष्यते॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा।
दशमैकादशे चैव नवश्राद्धानि तानि वै॥

अत्र चैकादशाहिकस्यापि नवमितिसंज्ञा। उक्तं च—

कात्यायनेन,

चतुर्थे पञ्चमे चैव नवमैकादशेऽहनि।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥

अङ्गिराः—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा।
नवमैकादशे चैव षण्नवश्राद्धमुच्यते॥
नवमं चैकादशं चेति द्वन्द्व इति कालादर्शः।

ब्रह्मपुराणे—

तृतीयेऽहनि कर्त्तव्यं प्रेतदाहावनौ द्विजाः!।
सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते॥ इति

व्यासः—

प्रथमे सप्तमे चैव नवमैकादशेऽहनि।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥ इति।

यद्यप्येतान्यनेकविधानि तथापि वृद्धवाशिष्ठोक्तान्येव ।

प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमे तथा ।
एकादशे पञ्चमेऽह्नि नवश्राद्धानि षट् तथा ॥

इति साम्प्रतं शिष्टाचारगोचराणि । बौधायनेन तु पञ्चैवोक्तानि । तत्रापि नवमदिवसकर्त्तव्यस्य नवश्राद्धस्य विघ्नादिना विच्छेदे तदेकादशेऽह्नि कर्त्तव्यमित्युक्तम् । मरणाद्विषमेषु दिनेषु एकैकं नवश्राद्धं कुर्यादानवमात् । यत्र नवमं विच्छिद्येतैकादशेऽह्नि तत्कुर्यादिति । काण्वस्तु यस्य कस्यापि नवश्राद्धस्यान्तराये उत्तरसमानतन्त्रताकर्त्तव्यतामाह—

नवश्राद्धं मासिकं च यद्यन्तरितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥ इति ।

शिवस्वामी तु—

नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।
आपस्तम्बाः षडित्याहुर्विभाषामैतरेयिणः ॥

इति आश्वलायनशाखिनां पञ्च, आपस्तम्बानां षडिति द्वयोः पक्षयोर्व्यवस्थितिः । ऐतरेयिणां च पञ्च षड् वेतिविकल्पं च वक्ति । वर्णतोऽपि व्यवस्थोक्ता—

भविष्यपुराणे,

नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् ।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥
विशां नव राज्ञां सप्त विप्रशूद्रयोः षडिति ।
नवश्राद्धनिमित्तं तु एकमेकादशेऽहनि ।

इति अत्रिणा त्वेकमेवोक्तम् । हेमाद्रौ कालकाण्डे तु—

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥
इति शङ्खवचने यत् आद्यं तदपि नवमिति व्याख्यातम् ।

कात्यायनगृह्येऽपि इदं नावमित्युक्तं तदपि स्वार्थेऽण्करणान्नवमेव नावमिति । नवश्राद्धानां च यद्यपि—

नवश्राद्धानि कुर्वन्ति प्रेतोद्देशेन यत्नतः ।
एकोद्दिष्टविधानेन नान्यथा तु कदाचन ॥

इति ब्रह्माण्डपुराणात् सपिण्डनपूर्वभावित्वाच्चैकोद्दिष्टरूपत्वम् । तथापि तत्र ब्राह्मणा युग्मसङ्ख्याकाः कार्याः ।

प्रेताय च गृहद्वारि चतुर्थे भोजयेत् द्विजान् ।
द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म्म च बान्धवैः ॥

चतुर्थे बान्धवैः सर्वैरस्थनां सञ्चयनं भवेत् ।
पूर्वान् विप्रान्नियुञ्जीत युग्मांस्तु श्रद्धया शुचीन् ॥
पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
युग्मांस्तु भोजयेद्विप्रान् नवश्राद्धं तु तद्विदुः ॥

इति कूर्म्मपुराणात् । शूलपाणौ तु—

अयुग्मान्भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते इतिपाठः । यत्त्वत्र ब्रह्म-पुराणाद्युक्तम्—

चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभृताम् ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परम् ॥ इति ।
चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः ।
यदिष्टं जीवतश्चासीत्तद्दद्यात्तस्य यत्नतः ॥

चतुर्थेऽहनि— सञ्चयाहनीत्यर्थः । तस्य प्रेतस्य जीवतो यत्किञ्चिदभी-ष्टमासीत्तद्दद्यादित्यर्थः ।

गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः ।

इति बृहस्पत्युक्तं च धर्मजातं तत् सविस्तरमन्यत्र ज्ञेयम् । यद्यपि चै-कादशेऽह्नि नवश्राद्धमपि विहितम् ।

तथाच— ( अ० १ आ० प्र० श्लो० २५६ )

मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
इत्यभिधाय–आद्यमेकादशेऽहनि ।

इति याज्ञवल्क्येनाद्यमासिकस्य मृतदिने प्राप्तस्यैकादशेऽहनि उत्कर्षा-भिधानादाद्यमासिकं च तत्र प्रसक्तम् । तथापि वक्ष्यमाणतद्वाक्यपर्या-लोचनया एकादशेऽहनि क्रियमाणं महैकोद्दिष्टं ताभ्यां भिन्नमेव । तथाहि—

एकादशाहे यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि ॥

इतिभविष्योत्तरे ।

वराहपुराणे च—

एकादशाहे कर्त्तव्यं श्राद्धं प्रेताय यत्नतः ।
श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ॥

इत्यत्र च विधीयमानं प्रेतोद्देशेन श्राद्धं ताभ्यां भिन्नमेव । नवश्रा-द्धमासिकयोरत्रात्यन्तमबुद्धिस्थत्वात् । कूर्मपुराणेऽपि–"एकादशेऽह्नि कुर्वी-त प्रेतमुद्दिश्य"इत्यादिना सधर्मकस्य प्रकृतिभूतस्यैकादशाहिकस्यैको-द्दिष्टस्यैव धर्म्मातिदेशो मासिकेषु दृष्टः ।

मात्स्यपुराणेऽपि—

ततस्त्वेकादशाहे तु द्विजानेकादशैव तु ।
क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ।
इत्यादिना सधर्मकं विधाय—
अनेन विधिना सर्वमनुमासं समाचरेत् ।

इति तथैवैकोद्दिष्टं प्रकृतित्वेन विधायानुमासिकादीना विकृतित्वेनाभिधानम् ।

बृहस्पतिरपि—

एकोद्दिष्टविधानेन यदेकस्य प्रदीयते ।
आवाहनाग्नौकरणरहितं दैववर्जितम् ॥
वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥
भोजनं वानेकविधं कारयेत् व्यञ्जनानि च ।
यथाशक्त्या प्रदद्याच्च गोभूहेमादिकं तथा ॥ इति ।

अत्रापि नवश्राद्धमासिकयोरनुपस्थितेरकोद्दिष्टमेव नानाधर्मविशिष्टं भिन्नमेव ताभ्यामिति किं भूयसा । तत्र च पूर्वोदाहृतमात्स्यपुराणवचनादेकस्मिन्नेव प्रेतस्थाने एकादश ब्राह्मणा इति मुख्यः कल्पः । सत्यव्रतोऽप्येवमाह—प्रातरुत्थाय प्रेतब्राह्मणानेकादशामन्त्र्य अपराह्ने नानाभक्ष्यान्नरसविन्यासैरित्यादिना ।

अथाशौचव्यपगमे प्रातः सुप्रक्षालितपाणिपादः स्वाचान्तः एवं विधानेव ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत् ।

इति विष्णुना यथाशक्ति ( इत्यनेन ) बहवोऽप्युक्ताः । वराहपुराणे तु एकस्यैव ब्राह्मणस्य तत्र तत्र परामर्शादेकस्यापि नियोजनम् ।

यथा—

गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्पथः ।
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् । इति,
स्नापनाभ्यञ्जने दद्याद्विप्राय विधिपूर्वकम् । इति,
ब्राह्मणं शीघ्रमानयेत् ।
आगतं च द्विजं दृष्ट्वा कर्त्तव्या स्वागतक्रिया ॥ इति ।
आवरणार्थं छत्रं तद्ब्राह्मणाय प्रदीयते ।
पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे ॥

सन्तप्तवालुकां भूमिं महाकण्टकिता तथा ।
सन्तारयति दुर्गाणि प्रेतं ददुपानहौ ॥ इति ।

यद्यपि बहुब्राह्मणपक्षस्तदापि प्रेतोपभुक्तवस्त्रशय्यादिकमेकस्मा एव गुणवते देयमितरेभ्यो यथाशक्ति दक्षिणामात्रमित्युक्तम्—

भविष्योत्तरे, एकादशेऽहनीत्यनन्तरम्—

भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने ।
वस्त्रालङ्कारशय्याद्यं पितुर्यद्वाहनादिकम् ॥
गोगृहासनदासांस्तु दद्यात्सम्पूज्य भक्तितः ।
प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः ॥

इत्यादिविस्तारोऽन्यत्र ज्ञेयः । इह च बहुषु वाक्येषु एकादशाह- ग्रहणं न आशौचोत्तरदिनोपलक्षकम् ।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
सर्वेषामेव वर्णानां सूतकं तु पृथक् पृथक् ॥

इति पैठीनसिवचनात् ,

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

इति शङ्खवचनाच्च । क्षत्रियादिभिरपि वचनादाशौचे सत्यपि मर- णादेकादशाह एवाद्यश्राद्धं कर्त्तव्यम् । तथा एकाहत्र्यहाशौचिभिरपि ।

सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्याशनादिषु ॥

इति शङ्खवचनादेकादशाह एव । शूलपाण्यादयस्तु—"अथाशौचव्यपग- मे" इति,

तथा,

क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ।

इति वैष्णवमात्स्यवचनतः क्षत्रादिभिरपि स्वस्वाशौचान्ते एकाहत्र्यहा- शौचिभिरपि तन्मध्ये दशाहकृत्यानुष्ठाने तदन्त एवैकादशाहश्राद्धं नैकादशेऽह्नीति वदन्ति । तन्मते "सद्यः शौचेऽपि दातव्यम्" इति शङ्खवचनस्य का गतिरिति विवेक्तव्यमिति । अस्मिन्पक्षे विष्णुवचनेन विरोधस्तावन्नास्त्येव । तस्य ब्राह्मणाभिप्रायेणाप्युपपत्तेः । सङ्कोचमात्रं हि तदा न तु कस्यचिल्लक्षणा । एकादशाहशब्दस्याशौचान्तमात्रपर- तयोपलक्षणत्वे एकादशाहशब्दे विधौ लक्षणा स्यात् । न च मात्स्यव- चोविरोध इति शङ्कनीयम् । अविरोधोपपादनार्थं तस्यायमर्थः । ब्राह्मण एकादशाहे तत्कुर्वन्न एकेन भोजयेत् किन्तु तत्र त्र्यकेन यथासङ्ख्यब्रा-

ह्मणभोजनपर्याप्तेनामेन सूतकान्ते पक्त्वा भोजयेदिति । एवं च सति एकादशाहसूतकान्तरूपकालद्वयोपेतं ब्राह्मणक्षत्रियादिविषयं विधिद्वयमर्थवद्भवति अन्यथा विष्णुवचनादेव सूतकान्तरूपकालोपेतेनैकेनैव विधिना सर्ववर्णसाधारणाद्यश्राद्धविधिसिद्धौ मात्स्यमनर्थकं स्यात् । अयुजो द्विजानिति अयुग्मसङ्ख्या च नवसप्तत्रयोदशादिरूपा । आह बृहस्पतिः—

श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश । इति ।

अत्रिः—

प्रेतार्थं सूतकान्ते तु ब्राह्मणान् भोजयेत्ततः ।
नवश्राद्धनिमित्तं तु एकमेकादशाहेऽहनि ॥

एवञ्च सत्येकादशाहिकान्नवश्राद्धादाशौचान्ते विधीयमानं ब्राह्मणभोजनं कर्मान्तरमिति गम्यते इति हेमाद्रिः । यदा च "ब्राह्मणे दश पिण्डाः स्युः" इति पारस्करवचनात्प्रतिवर्णं दशद्वादशपञ्चदशत्रिंशत्पिण्डाः, यदा वा "सर्वेभ्य" इति वाक्यात् द्वितीयो दशैव पिण्डा इति पक्षः, सर्वेषां च स्वस्वाशौचान्त्यदिने दशमः पिण्डस्तदापि क्षत्रियवैश्यशूद्रादीनामेकादशेऽह्नि प्रेतत्वनिवृत्त्यर्थं कृतेनापि श्राद्धेन अन्त्यदिनाक्रियमाणदशमपिण्डसहितेनैव प्रेतत्वनिवृत्तिरित्यन्यत्र विस्तरः ।

शातातपः—

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥ इति ।

गालवः—

शावे तु सूतकं चेत्स्यान्निशाशेषे तथैव च ।
नवश्राद्धानि देयानि यथाकालं यथाविधि ॥ इति ।
अन्वारोहणेऽपि भिन्नानि नवश्राद्धानि ।
नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् ।
एक एव वृषोत्सर्गो गौरेका तत्र दीयते ॥ इति ।

क्वचिद्धर्मप्रदीप इत्युक्त्वा लिखितम्—

दैवाद्यदि नवश्राद्धमतीतं प्रथमेऽहनि ।
तृतीयेऽहनि कर्त्तव्यं विषमे वाप्यसम्भवात् ॥ इति ।

तत्रैवायमन्यो विशेषः ।

तथा—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
नवश्राद्धं न कुर्वीत त्रिपादे पञ्चके तथा ॥ इति ।

ऋष्यशृङ्गेण विशेषान्तरमुक्तम्—

नवश्राद्धं सपिण्डत्वं पक्वान्नेन समाचरेत् । इति ।

नवश्राद्धानामावश्यकत्वमुक्तं वृद्धवशिष्ठेन,

अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते ।
अर्वाक्तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ॥ इति ।

इति नवश्राद्धानां कालः ।

अथावयवपिण्डकालाः ।

तत्र ब्रह्मपुराणादौ "शिरस्त्वाद्येन पिण्डेन" इत्यारभ्य-"दशमेन तु पूर्णत्वं" इत्यन्तेन ब्राह्मणे दशमपिण्डस्य दशमदिने कर्त्तव्यतामुक्त्वा—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ॥
शूद्राणां दशमः पिण्डो मासे पूर्णे विधीयते ।

इति प्रतिवर्णं कालभेदेन पिण्डा दशैवोक्ताः । विष्णुना तु आशौचदिनसङ्ख्यया पिण्डसङ्ख्योक्ता "यावदाशौचं प्रेतस्योदकं पिण्डमेकं च दद्युः" इति ।

पारस्करेणापि—

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः ॥ इति ।
प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्युर्दशैव तु ।
इत्यपरोऽपि दशपिण्डपक्षस्तेनैवोक्तः ।

प्रचेतसापि—

पिण्डः शूद्राय दातव्यो दिनान्यष्टौ नवाथवा ।
सम्पूर्णे तु ततो मासे पिण्डशेषं समापयेत् ॥

इत्युक्तम् । अत्रैवं व्यवस्थोक्ता । यावदाशौचं पिण्डदानमिति मुख्यः पक्षः । राज्ञां द्वादशे वैश्यानां पञ्चदश इत्यादिना दशमपिण्डमात्रोत्कर्षस्तु मध्यमः । तत्राप्यशक्तौ दशादिनं दशपिण्डदानमिति जघन्य इति । अन्ये त्वाहुः । अत्रैतद्व्यवस्थाकर्त्तुर्मते आद्यपक्षादिषु शूद्रादीनां मासं यावद्गात्रपूरकपिण्डासमाप्तौ कथमेकादशाहिकश्राद्धविधिः कथं च विष्णूक्तः—

मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम् ।

इतिद्वादशाहे सपिण्डीकरणविधिश्चेत्यादि चिन्त्यम् । अतश्च—

सर्वेषामेव वर्णानां सूतके मृतकेऽथ वा ॥
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥

इत्याङ्गिरसवचनात्सर्वेषां दशाहमेवाशौचमिति पक्षः साम्प्रतं चायमेव बहुधा प्रचारीभूतः क्षत्रियाद्याचारसंवादी च । तदा न कस्यापि

वचनस्यानुपपत्तिः ।, तथाहि—"प्रेतेभ्यः सर्ववर्णेभ्य" इतिपारस्करवचनमुपपन्नं, शूद्रेऽपि एकादशाहिकश्राद्धं द्वादशाहिकसपिण्डीकरणं चोपपन्नमिति । केन चिद्धर्मप्रदीप इत्युक्त्वा लिखितम्—

प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमेऽपि वा ।
द्वौ द्वौ पिण्डौ प्रदातव्यौ शेषांस्तु दशमेऽहनि ॥ इति च ।

तेन "आशौचव्यगम"इतिविष्ण्वादिवाक्यैराशौचवृद्धौ तदन्त एव कर्त्तव्यता, यानि तु एकादशाहप्रतिपादकानि तानि दशाहाशौचविषयाणि । एवं च गात्रपूरकपिण्डदानप्रकाराणामपि अनयैव रीत्याऽविरोध इति, तन्न । "आद्यं श्राद्धमशुद्धोऽपि"इत्यादिशङ्खवचनविरोधात् । तेन पूर्वोक्तैव व्यवस्था ज्यायसीति सिद्धम् । त्र्यहाशौचे विशेष उक्तः शातातपेन,

आशौचस्य च ह्रासेऽपि पिण्डान् दद्याद्दशैव तु ।

पारस्करः—

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ।
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा ॥ इति ।

दक्षस्त्वन्यथाऽऽह—

प्रथमेऽहनि पिण्डं तु द्वितीये चतुरस्तथा ।
तृतीये पञ्च वै दद्याद्दशपिण्डविधिः स्मृतः ॥ इति ।

युद्धादिहतेऽपि मनुः—(अ० ५ श्लो० ९८ )

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ।
सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥ इति ।

यज्ञः=पिण्डदानादिरूपः । सन्तिष्ठते=समाप्तो भवतीत्यर्थः ।

ब्रह्मपुराणेऽपि—

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा । इति ।

अथ पाथेयश्राद्धकालः ।

शातातपः,

भूलोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् ।
तत्पाथेयं हि भवति मृतस्य मनुजस्य च ॥ इति ।

अत्र च शिष्टैः प्रथमदिने क्रियमाणत्वादाद्यदिनं ग्राह्यम् । स्मृत्यर्थसारे तु सञ्चयने कृते मनुष्यलोकात्प्रेतलोकं गच्छत आमेन पाथेयश्राद्धमेकोद्दिष्टविधानेन इत्युक्तम् । तेन दिनान्तरमपि तस्य कालः ।

अथास्थिसञ्चयने कालः ।

तत्र सम्वर्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमेऽपि वा।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह॥ इति।

विष्णुस्तु चतुर्थमपि दिनमाह—"चतुर्थे दिवसेऽस्थिसञ्चयनं कुर्यात्तेषां गङ्गाम्भसि प्रक्षेप" इति।

दिवोदासनिबन्धे ब्रह्मपुराणे वर्णपुरस्कारेणापि कालविशेष उक्तः—

कुर्युस्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च।
पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि।

त्र्यहाद्याशौचे विशेषस्तत्रैव—

त्र्यहाशौचे द्वितीयेऽह्नि कर्त्तव्यस्त्वास्थिसञ्चयः।
सद्यः शौचे तत्क्षणं तु कर्त्तव्य इति निश्चयः॥

अस्थिपलाशदाहे तु शौनकः—

पालाशे त्वस्थिदाहे च सद्यः सञ्चयनं भवेत्।

भृग्वादिमरणे मनुना विशेष उक्तः—

तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः। इति।

यत्तु कैश्चिन्नवीनैः सर्वकालानां सर्ववर्णविषयत्वेनोपन्यसनं तद्ब्रह्मपुराणवाक्यादर्शनमूलकमित्यश्रद्धेयमेव। न च ब्रह्मपुराणोक्तव्यवस्थापक्षे सप्तमनवमदिनपक्षयोर्निर्विषयता स्यादिति वक्तव्यम्।

श्राद्धचिन्तामणौ—

सप्तमे वैश्यजातेस्तु नवमे शूद्रजन्मनः।

इत्यस्यैव पाठस्यादरणात्। अत्र वारनक्षत्रनिषेधोऽपि यमेनोक्तः—

भौमार्कमन्दवारेषु तिथियुग्मेषु वर्जयेत्।
वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसञ्चयम्॥
प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः। इति।

तदेतदस्थिसञ्चयनं साग्न्यनग्निकयोरपि दाहादिनादेव कार्यमित्याहाङ्गिराः—

अनाग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।
शुद्धिः सञ्चयने दाहान्मृताहस्तु यथाविधि॥ इति।

अथोदकदानकालः।

गौतमः—प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रियेति।

अथ दशाहमध्ये दर्शपाते भविष्यपुराणे—

प्रवृत्ताशौचतन्त्रस्तु यदि दर्शः प्रपद्यते।
समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत्॥

आशौचसमाप्तिपर्यन्तमिति शेषः ।

ऋष्यशृङ्गः—

आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् ।
समाप्तिं प्रेततन्त्रस्य कुर्य्यादित्याह गौतमः ॥

पैठीनसिरपि—

आद्येन्दावेव कर्त्तव्याः प्रेतपिण्डोदकक्रियाः ।
द्विरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ॥

द्विरैन्दवे=चन्द्रद्वये । दर्शात्प्राचीन एकः क्षीण इन्दुर्दर्शोत्तरमपरो भावी वृद्धिमान् । कालादर्शे तु एतदग्रे तथेति कृत्वा वचनान्तरं लिखितम् ।

चन्द्रद्वये तिथिर्नैव देयः प्रेतस्य शान्तये ।
यदि दद्याद्विचन्द्रेऽन्नं दातुः कुलविनाशनम् ॥

एवं सामान्येन मातापितृविषयेऽपि दर्श एव पिण्डोदकदानादितन्त्रसमाप्तिप्रसक्तौ—

श्लोकगौतमः,

अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात्पिण्डतिलाञ्जलीन् ॥

पित्रोरिति विरूपैकशेषः । एवं सति यद्गालवेनोक्तम्—

पित्रोराशौचमध्येऽपि यदि दर्शः समापतत् ।
तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम् ॥ इति ।

तस्यायमर्थः । पित्र्याशौचमध्येऽपि दर्शपाते समाप्तिरुत्तरतन्त्रस्योचिता किमुतान्याशौचमध्ये इति पितृव्यतिरिक्तसपिण्डविषये उत्तरतन्त्रस्यावश्यकसमाप्तिप्रदर्शनार्थं न पुनः पितृविषयेऽपि नियमार्थमिति । भवतु वा पितृविषयेऽपि नियामकं तथापि "अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु" इत्यनेन न्यायेन शिष्टाचारसहकृतेन "पित्रोस्तु यावदाशौचं" इत्यनेन गौतमवचनेन गालववचनं बाध्यत इति पित्र्याशौचमध्ये दर्शपातेऽपि यावदाशौचं पिण्डादिकं दद्यात् इतरेषां तु दर्शावधिकमेवोत्तरतन्त्रसमापनमिति विवेकः । अथ वा क्षेत्रजस्य बीजिपितृविषयं दत्तकादिपुत्राणां प्रतिग्रहीत्रादिमातापितृविषयं वा गालववचनं गौतमवचनं तु औरसपुत्रिकापुत्रयोर्मातापितृविषयम् । अथ वा औरसादीनां सर्वेषामपि स्वमातापितृविषये आपदनापत्कल्पाश्रयणेन व्यवस्था विज्ञेयेति मदनपारिजातः । माधवनिर्णयामृतादौ त्र्यहानन्तरं दर्शपाते मातापितृतन्त्रस्यापि समाप्तिर्न तु त्र्यहमध्ये दर्शपाते गौतमवचनमपि तद्विषयकमेव । मातापितृव्यतिरिक्तानां तु दशाहमध्ये यदा कदाचिद्दर्शपाते तन्त्रसमाप्तिरेवेति । दशाहमध्ये दर्शपाते दर्शात्पूर्वं प्रमादालस्यादिना यदा प्रेत-

तन्त्रमनारब्धं तदा तस्य दर्शोत्तरमपि आरम्भः समाप्तिश्चोचितैव तदा द्विरैन्दवतादोषोऽपि परिहृतो भवति। नच "आद्यैन्द्रावेव कर्त्तव्या" इति वचनात् दर्शानुरोधेनारम्भोऽपि दर्शात्पूर्वमाक्षिप्त इति शङ्कनीयम्। आद्यैन्द्रावेवेत्यत्र कर्त्तव्या इति न विधीयते तथासति "आद्यैन्द्रौ" इति "कर्त्तव्या" इति च विधेयद्वये वाक्यभेदः स्यात्। तेनात्रापि द्विरैन्दव इति निषेधात् द्विरैन्दवत्वमेव निषिध्यत इति। कश्चिद्दर्शपातवत् सङ्क्रान्तिव्यतीपातयोरपि पाते तन्त्रसमाप्तिः वचनं च सङ्गृह्य इतिकृत्वा लिखितम्।

दर्शः सङ्क्रमणं पातो दशाहान्तर्यदा भवेत्।
तावतैवोत्तरं तन्त्रं समाप्यमिति केचन॥ इति,

तत्तु निबन्धृभिरधृतं निराकरमिव प्रतिभाति। व्यतीपातसङ्क्रान्तिपाते तन्त्रसमाप्तेः शिष्टाचारेऽप्यदर्शनाच्च इति।

अथ नवमिश्राणि षोडशश्राद्धानि चेत्येवंप्रसिद्धानां मासिकानां कालः।

तत्राश्वलायनः नवमिश्रं तु षडृतूनिति।

षड्ऋतूनित्यस्यार्थोऽग्रे विवक्ष्यते। तानि च मरणमासादारभ्य संवत्सरं यावत्प्रतिमासं विधीयमानानि द्वादश ऊनमासिकं त्रैपाक्षिकम् ऊनषाण्मासिकमूनाब्दिकं चेत्येवं षोडश भवन्ति। आह—

जातूकर्ण्यः,

द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
त्रैपाक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥ इति।

अत्र द्वादशप्रतिमास्यानीति पृथगभिधानादाद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। आह—

गोभिलः,

ऊनषाण्मासिकं षष्ठे मास्यूने चोनमासिकम्।
त्रैपाक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा॥ इति।

ऊनषाण्मासिकमूने षष्ठे मासि, त्रैपाक्षिकं तृतीये पक्षे, ऊनाब्दिकमूने द्वादशे मासि, ऊनमासिकं तु द्वादशाहे ऊनमासि वा कार्यम्।

मरणात् द्वादशाहे स्यान्मास्यूने वोनमासिकम्।

इति तेनैवोक्तत्वात्। अत्रोनमासिकादीनि ऊनमासादिषु कार्याणीत्युक्तम्। तत्र कियद्भिर्दिनैरूनेषु कार्याणीत्याकाङ्क्षायां—

गालवः,

त्रिभिर्वा दिवसैरूने द्वाभ्यामेकेन वा तथा।
आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम्॥ इति।

श्लोकगौतमोऽपि-

एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः॥ इति

ऊने=ऊनत्वे। आदिशब्दादूनषाण्मासिकोनाद्यमासिकयोर्ग्रहणम्।

जातूकर्ण्यः—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूनाः, संवत्सरश्चैव स्यातां षाण्मासिके तदा॥ इति।

षाण्मासिके=ऊनषाण्मासिकोनाब्दिके। एकेनाह्ना न्यूने एकदिनपूर्त्तिन्यूने तदन्तिमे दिने इत्यर्थः। अत एव—

पैठीनसिः,

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा॥ इति।

पूर्वेद्युः=मृताहात्पूर्वदिने। षाण्मासिकाब्दिके=ऊनषाण्मासिकोनाब्दिके इति मदनरत्नः। त्रैपक्षिककालमाह—

कार्ष्णाजिनिः,

ऊना न्यूनेषु मासेषु विषमाहे समेऽपि वा।
त्रैपक्षिके त्रिपक्षे स्यान्मृताहेष्वितराणि तु॥ इति।

भविष्ये—

षष्ठे षाण्मासिकं कुर्यात् द्वादशे मासि चाब्दिकम्।
त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम्॥ इति।

न च कार्ष्णाजिनिना 'त्रिपक्षे' इत्युक्तं भविष्ये तु 'वृत्ते त्रिपक्षे' इत्युक्तं तेन विरोध इति वाच्यम्। वृत्तेऽतीत इति नार्थः, किन्तु त्रिपक्ष इत्याधिकरणसप्तम्यनुरोधाद्वृत्ते प्रवृत्ते इत्यर्थ इति कश्चित्। केचित्तु-

सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते।
द्वादशेऽहनि मासे च त्रिपक्षे च ततः परम्॥

इति ब्रह्मपुराणवाक्येऽपि पूर्वोदाहृतवचनोपात्त-वृत्त इति पदस्य अतीत इति यथाश्रुतमेवार्थं कृत्वा अत्रापि त्रिपक्षे इत्यस्याग्रेऽतीत इति शेषं पूरयन्ति।

व्यासः—

द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके।
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः॥

अयमर्थः। द्वादशाहे इत्यनेन तत्र क्रियमाणमूनमासिकं, षण्मास इत्यनेनोनषाण्मासिकं, मासिकं प्रतिमासं मृताहे क्रियमाणं द्वादशसङ्ख्याकम्,

आब्दिकमूनाब्दिकम् । अत्र च द्वितीयादिमासिकानि द्वितीयतृतीयादिमासेषु मृताहे कर्त्तव्यानि आद्यमासिकं तु एकादशेऽह्नि कर्त्तव्यमित्याह—

याज्ञवल्क्यः, ( अ० १ श्रा० प्र० श्लो० २५६ )

मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥

वत्सरमिति वत्सरपूर्त्तिपर्यन्तं, "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ ) इति द्वितीयेति । अत्र केचित् । आद्यमृततिथिं गृहीत्वोत्तरमृततिथेः पूर्वतिथिपर्यन्तं त्रिंशत्तिथिसमुदायात्मकचान्द्रमासमानेन चैत्रशुक्लपञ्चम्यां मृतस्याग्रिमशुक्लचतुर्थ्यां मासिकम् , एवमूनषाण्मासिकोनाब्दिकयोरेकाहन्यूनतापक्षे द्व्यहन्यूनतापक्षे च तृतीयायां प्रतिपदि च तयोरनुष्ठानमिति । तत्तुच्छम् । "मृतेऽहनि तु कर्त्तव्यं" इति पूर्वोक्तयाज्ञवल्क्यवचनात् , "मृताहस्त्वितराणि तु" इति कार्ष्णाजिनिवचनाच्च "मासिकानि स्वकीये तु दिवसे" इति, "षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते" इति पूर्वोपन्यस्तपैठीनसिवचनाच्च । तेन पञ्चमीप्रमीतस्याग्रिमपञ्चम्यामेव मासिकमूनषाण्मासिकादि तु चतुर्थ्यामेव । द्व्यहन्यूनतापक्षे द्वितीयायामेव । अत एवोक्तं कालादर्शे,

मासिकान्यपि चोनानि चाष्टाविंशतिमे दिने । इति ।

माधवेन तूनषाण्मासिकं सप्तमासगतमृताहादिनात्पूर्वेद्युरनुष्ठेयम् ऊनाब्दिकं च द्वितीयवत्सरादेर्मृताहादिनात्पूर्वेद्युः कर्त्तव्यमिति । अत्रायं मुग्धव्यामोहनिवृत्त्यर्थं स्पष्टः कालविवेकः । मासे भवं मासिकमिति व्युत्पत्त्या, मासेऽतीते भवं मासिकमिति व्युत्पत्त्या वा, माससम्बन्धि मासिकमिति हेमाद्र्युक्तव्युत्पत्त्या वा, मासादौ भवं मासिकमिति व्युत्पत्त्या वा मासिकस्य यद्यपि तन्मासभवनं तन्माससम्बन्धो वा तन्मासान्तर्गतयत्किञ्चित्तिथ्यधिकरणकत्वेनापि सम्भवति ज्योतिष्टोमस्येव वसन्तकालिकत्वं श्राद्धस्येवापरपाक्षिकत्वम् । तथापि प्रथमातिक्रमे कारणाभावात् वक्ष्यमाणस्मार्त्तबहुवचनानुरोधाच्च मासोपक्रम एव कर्त्तव्यता निश्चीयते । तानि तु वचांसि "मासिकानि स्वकीये तु दिवसे" इति "मृताहस्त्वितराणि तु" इति "मृतेऽहनि तु कर्त्तव्यं" इति च ।

ब्रह्मपुराणेऽपि—

द्वादशेऽहनि मासे च त्रिपक्षे च ततः परम् ।
मासि मासि तु कर्त्तव्यं यावत्संवत्सरं द्विजैः ॥
ततः परतरं कार्यं सापिण्डीकरणं क्रमात् ।

कृते सपिण्डीकरणे पार्वणं प्रोच्यते पुनः॥
ततः प्रभृति निर्मुक्तः प्रेतत्वात्पितृतां गतः।

व्याघ्रपादोऽपि—

एकादशे चतुर्थे च मासि मासि च वत्सरम्।
प्रतिसंवत्सरं चैवमेकोद्दिष्टं मृताहनि॥ इति।

एवं सत्याद्यमासिकमेकादशाहे, ऊनमासिकमूने मासि द्वादशाहे वा, द्वितीयमासिकं द्वितीयमासस्याद्यमृततिथौ, तृतीयमासिकं तृतीयमासस्याद्यमृततिथौ क्रियमाणत्वाच्चैत्रशुक्लपञ्चमीप्रमीतस्य वैशाखशुक्लपञ्चम्यां क्रियमाणं द्वितीयमासिकं ज्येष्ठशुक्लपञ्चम्यां तृतीयमासिकं भवति। एवमग्रेऽपि तत्तन्मासे बुध्वा द्वादशमासस्य फाल्गुनस्याद्यमृततिथौ पञ्चम्यां द्वादशमासिकं कृत्वा ऊनाब्दिकं चैत्रशुक्लचतुर्थ्यां भवति। यदा तु सपिण्डीकरणे "ततः संवत्सरे पूर्णे सपिण्डीकरणम्" इतिकात्यायनपक्षस्तदा तस्मिन्नेव दिने ऊनाब्दिकसपिण्डीकरणयोर्वैयुत्क्रमत्वादूनाब्दिकं कृत्वा सपिण्डीकृतिः। यदा त्वाश्वलायनपक्षः "अथ सपिण्डीकरणं संवत्सरान्त इति, तदा पूर्वदिने चतुर्थ्यामूनाब्दिकं कृत्वा चैत्रशुक्लपञ्चम्यां द्वितीयवत्सराद्यमृततिथौ सपिण्डीकरणं कृत्वा तत्रैवाब्दिकमितिबोद्धव्यम्। वस्तुतस्तु न पक्षद्वयम्। कात्यायनवाक्येऽपि संवत्सरे पूर्णे सति द्वितीयदिने सपिण्डीकरणमिति व्याख्यासम्भवात्। विश्वादर्शेऽपि मासिकानामाद्यमृततिथिकालिकत्वं कण्ठरवेणोक्तम्—

मासेषूक्तं यदेकादशसु मृतदिनेष्वाद्यमेकादशाहे
न्यूनाब्दे यत्तदर्धे यदपि तदपरे द्वादशाहे त्रिपक्षे। इति।

तत्राद्यमासिकं मृताहे प्राप्तम्—"आद्यमेकादशेऽहनि" इतिवचनादेकादशेऽह्नि उत्कृष्य विधीयते। ततश्चैकादशेऽह्नि श्राद्धत्रयं नवश्राद्धान्त्यम् आद्यमासिकं स्वतन्त्रैकोद्दिष्टं चेति। स्मृत्यर्थसारेऽप्युक्तं स्वतन्त्रैकोद्दिष्टे क्रियमाणे अन्येषां तन्त्रेणानुष्ठानसिद्धिरिच्छतामस्ति पृथगनुष्ठानपक्षे चादौ स्वतन्त्रैकोद्दिष्टं कार्यमिति। एवं च प्रथममासिकोनमासिकत्रैपक्षिकतृतीयमासिकचतुर्थपञ्चमषाण्मासिकोनषाण्मासिकसप्तमाष्टमनवमदशमैकादशद्वादशमासिकोनाब्दिकानि षोडशश्राद्धानि दद्यादिति हेमाद्र्युदाहृतसूत्रबोधितः श्राद्धक्रमोऽप्युपपद्यते। अन्यथोनानां तत्तन्मासिकोत्तरत्वं त्रैपक्षिकस्य च द्वितीयोत्तरत्वं न स्यात्। एतेन यच्छूलपाणिनोक्तं मासे भवमित्येव समाख्याव्युत्पत्तिः, न चैवं सर्वाद्यमृततिथौ मासिकापत्तिर्मृततिथेर्मृततिथिं यावच्चान्द्रस्य विवक्षितत्वात्। मृततिथेरिति वावधौ पञ्चमी तेनान्यमृततिथेरेव पूर्वमासशब्दार्थत्वम्। अतश्च प्रथममासिकं

द्वितीयमृततिथावेवेति। तन्निरस्तम् । उदाहृतसूत्रविरोधात्। ननु "प्रति-संवत्सरं चैवं" इतिवचनादाद्यमृततिथिं गृहीत्वा आद्यसांवत्सरिकस्यापि आद्यमासिकवत्प्रवृत्तिः स्यादिति चेत्, सत्यम्। "आद्यमेकादशेऽहनि" इति मासिक इव यद्यत्र वचनं स्यात्। प्रत्युत तस्य द्वितीयवत्सराद्यमृततिथावुत्पन्नत्वादाद्यमृततिथौ प्राप्तिरेव नास्तीति द्वितीयवत्सरादौ क्रियमाणमाब्दिकमित्युच्यते तृतीयवत्सरादौ तु प्रत्याब्दिकमिति । अत एवोक्तम्—

स्मृत्यर्थसारे, द्वितीयसंवत्सरादावाब्दिकं तृतीयसंवत्सरादौ प्रत्याब्दिकमिति क्रम इति ।

निर्णयामृते तु—

ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा ।
पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥ इति ।

अतश्चैकादशेऽह्नि विधीयमानम् आद्याब्दिकमिति । अधिकमास-पाते अधिकं मासिकं कार्यम् । तदा सप्तदश भवन्ति—

आद्यमेकादशे कार्यमधिके चाधिकं भवेत् ।

इति लौगाक्षिवचनात् ।

अब्दमम्बुघटं दद्यादन्नं वापि सुसञ्चितम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् ॥

इति कौथुमिस्मरणाच्च ।

संवत्सरातिरेके वै मासाश्चैव त्रयोदश ।
तस्मात्त्रयोदशे श्राद्धं न कुर्यान्नोपतिष्ठते ॥

इति ऋष्यश्रृङ्गवचने त्रयोदशमासिकस्य निषेधश्रवणादधिकमासेऽपि मासिकविकल्प इति केचित् । वस्तुतस्तु एतस्यामावास्याविशेषविहितकाम्यश्राद्धविषयत्वस्य स्थापितत्वान्मासिकवृद्धिरेव युक्ता । यत्तु हेमाद्र्यादौ षोडशश्राद्धानां प्रकारान्तरेण गणनं सपिण्डीकरणादीनां च षोडशश्राद्धान्तर्गतत्वेनोपवर्णनम् । तथाहि—

ब्रह्मपुराणे,

नृणां तु त्यक्तदेहानां श्राद्धाः षोडश सर्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्मासैः श्राद्धा द्वादशसङ्ख्यया ।
कर्त्तव्याः श्रुतितस्तेषां तत्र विप्रांश्च तर्पयेत् ॥

भविष्यपुराणेऽपि—

अस्थिसञ्चयने श्राद्धं त्रिपक्षे मासिकानि च ।
रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश ॥ इति ।

रिक्तयोश्च तिथ्योरित्येकेनाह्ना न्यूने षष्ठे द्वादशे च मासे इत्यर्थः । जातूकर्ण्यः—

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणं चैवमित्येतच्छ्राद्धषोडशम् ॥

आद्यम्=एकादशाहिकम् । षाण्मासिके=ऊनषाण्मासिके । एकं पूर्वषट्कान्तर्गतमूनषाण्मासिकमपरमुत्तरषट्कान्तर्गतमूनाब्दिकम् । तत्र यत्तावत्सपिण्डीकरणस्य षोडशश्राद्धान्तर्गतत्वाभिधानं तद्बहुस्मृतिवचोविरोधादसमञ्जसमिव प्रतिभाति ।

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।

इति लौगाक्षिवचनात्,

तथा—

अर्वाक् सपिण्डीकरणात् कुर्याच्छ्राद्धानि षोडश ।

इति पैठीनसिवचनात्,

श्राद्धानि षोडशादत्वा नैव कुर्यात्सपिण्डनम् ।

इति गोभिलवचनाच्च सपिण्डीकरणादीनां षोडशश्राद्धेभ्यः पृथग्भावात् । तस्मात्प्रेतत्वनिवृत्त्यर्थकत्वाभिप्रायेण तदन्तर्भावोत्कीर्त्तनं स्मृतिवाक्येषु द्रष्टव्यम् । तेन पूर्वोक्तमासिकस्वरूपसङ्ख्यानुकूल्यं शिष्टाचारश्चानुगृहीतो भवति । विरुद्धगणनस्य तु शाखाभेदेन देशभेदेन वा व्यवस्था द्रष्टव्येति । क्षत्रियादिभिरप्येतदाद्यं श्राद्धं सत्यप्याशौच एकादशेऽह्न्येव कार्यम् । आह पैठीनसिः—

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकं तु पृथक्पृथक् ॥ इति ।

शङ्खोऽपि—

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति ।

सद्यःशौचादावप्याद्यं श्राद्धमेकादशेऽह्न्येव ब्राह्मणादिभिस्सर्वैः कार्यम् । तथाच—

स एव,

सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥ इति ।

सद्यःशौच इत्येकाहत्र्यहाशौचयोरुपलक्षणम् । आहिताग्नेर्मरणदिनादन्यस्मिन् दिने दाहे सति दाहदिनादारभ्य नवश्राद्धैकादशाहिकत्रैपक्षिकान्तानि कुर्यात् । अनाहिताग्नेस्त्वेकाग्नेर्निरग्नेर्वा मरणदिनादारभ्य ।

तदूर्ध्वानि तूभयोरपि मरणादिनादेव। तदाह—

कात्यायनः,

श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा॥ इति।
ध्रुवाणीति त्रैपक्षिकादूर्ध्वानां संज्ञा।
ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत्।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः॥

इति जातूकर्ण्यवचनाच्च। अग्निमत इति बह्वग्निमान् गृह्यते।

मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निभिः।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः॥

इति शङ्खवचनैकवाक्यतालाभात्। मरीचिर्मासिकानां मुख्यगौणादि-कल्पमाह—

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति।
द्वादशाहेन वा कुर्यादेकाहे द्वादशापि वा॥ इति।

प्रतिमासं मृताहे मासिकं श्राद्धमिति मुख्यः कल्पः। अपर्याप्तौ=प्रति-मासं श्राद्धकरणाशक्तौ ऋतु प्रति। ऋतोरत्र चान्द्रस्य सौरस्य वाऽस-म्भवान्मासद्वयश्राद्धमग्रिममासि कार्यमिति तस्यार्थः। अयमर्थः। पूर्व-मासे मृतितिथिमुल्लङ्घ्योत्तरमासे मृतितिथौ अतिक्रान्तश्राद्धं प्राप्त-कालं च श्राद्धं चेति द्वयं तत्र कार्यम्। क्वचित्त्रयमपि। यथा एकादशा-हे आद्यं निर्वर्त्य ऊनमासिकं च स्वकाले कृत्वा ततो द्वितीयमासिकं त्रैपाक्षिकं च तृतीयमासिकेन सह, चतुर्थमासिकेन सह चतुर्थं, पञ्चमेन सह षष्ठम्, ऊनषाण्मासिकं च सप्तमेन सह, अष्टमं नवमेन, दशममेका-दशेन, द्वादशमूनाब्दिकेन सहेति पूर्वमप्युक्तम् "नवमिश्रं तु षड्तरम्" इति। तस्याप्ययमेवार्थ इति द्वितीयकल्पः। अथ वा द्वादशाहेन द्वादशभि-र्दिनैः अपवर्गे तृतीया। तावद्भिर्दिनैरपवृत्तानि द्वादशमासिकानि कार्या-णि। तत्राशौचोत्तरदिने एकादशाहे आद्यं, ततस्तदुत्तरदिने तूनाद्यं द्विती-यं च, ततस्तदुत्तरदिने त्रैपाक्षिकं तृतीयं च, ततस्तदुत्तरेषु त्रिषु दि-नेषु क्रमेण चतुर्थपञ्चमषष्ठानि, तत उत्तरदिने तूनषाण्मासिके सप्तमं च, ततस्तदुत्तरदिनेषु अष्टमनवमदशमैकादशानि, तत उत्तरदिने द्वादशमूनाब्दिकं चेति द्वादशभिर्दिनैः षोडश श्राद्धानि कृत्वा तदुत्तर-दिने सपिण्डीकरणम्। श्राद्धचिन्तामणौ तु द्वादशाहमुपक्रम्य द्वादशभिर्दि-नैर्द्वादश मासिकानि श्राद्धानि कृत्वा ततः परेऽहनि सपिण्डीकरणमित्यु-क्तम् इति तृतीयकल्पः। अथ वा एकस्मिन्नेव दिने एकाहे एकादशाहे

द्धादशाहे वा द्वादशापि मासिकानि कृत्वा सपिण्डीकरणं कार्यमिति चतुर्थः कल्पः । द्वादशापि षोडशापीत्यर्थः ।

कण्वः—

नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत् ।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥ इति ।

ऋष्यशृङ्गः—

एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिन तिथौ तस्यां कुर्यादन्तरितं च यत् ॥

अन्तरितं मासिकं तदुत्तरसम्बन्धिनि मासि कुर्यादिति कालादर्शे । अत्र चकारेण तन्मासिकसमुच्चयः । अन्तरितं तन्मासिकं कुर्यादिति निर्णयामृते । आशौचादिना तु मासिकान्तराये आशौचान्ते उत्तरमासे मृततिथौ वा अमावास्यायां वा कृष्णैकादश्यां वा अनुकल्पेन शुक्लैकादश्यामपि वेति । उक्तं च कालनिर्णये—

आशौचोपहतौ तु मासिकविधेराशौचकालात्ययः
शस्तो वोत्तरमासि तद्दिनममावास्या सितैकादशी ।
शुक्ला वाप्यनुकल्पतोऽत्र गदितेत्यादि ।

एतानि षोडश श्राद्धानि संवत्सरादर्वाक् द्वादशाहादौ सपिण्डीकरणे कर्त्तव्ये अपकृष्य सपिण्डीकरणात्पूर्वं कर्त्तव्यानि ।

श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम । इति लौगाक्षिवचनात् ।
अर्वाक् सपिण्डीकरणात्कुर्यात् श्राद्धानि षोडश ।
इति पैठीनसिवचनाच्च । सपिण्डीकरणात् प्रागपकृष्य कृतान्यपि सापिण्डनोत्तरं पुनस्तानि स्वस्वकाले कर्त्तव्यानि । तदाह—

अङ्गिराः,

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥ इति ।

गालवोऽपि—

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं कृतम् ।
षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः ॥ इति ।

अत्र विशेषमाह कार्ष्णाजिनिः—

अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः ॥ इति ।

अस्यार्थः । षोडशानां मध्ये यानि स्वस्वकाले द्वित्राणि कृतानि ततः सपिण्डन उपस्थिते तत्पूर्वं यानि अवशिष्टानि अपकृष्य कृतानि

तान्येव पुनः कुर्यात न त्वन्यानि स्वस्वकाले कृतानीत्यर्थः। विवाहाद्युपस्थितौ तु सपिण्डीकरणात्पूर्वमपकृष्य कृतान्यपि वृद्ध्यनन्तरं पुनर्नैव कार्याणीत्याह—

कात्यायनः,

निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्।
अयातयामं मरणं न भवेत्पुनरस्य तु॥ इति।

वृद्ध्यनन्तरं मासिकानि न कुर्यात्तदा अयातयामं नूतनं मरणं न भवेत्। अन्यथा नूतनं मरणं भवेदित्यर्थः।

प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं द्विजः॥

इति शाट्यायनिश्च। सपिण्डीकरणोत्तरं वृद्ध्यादिपाते तु अनुमासिकान्यपि अपकृष्टव्यानि।

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि।
पुनरप्यकृष्यन्ते वृद्ध्युत्तरनिषेधनात्॥

इति कार्ष्णाजिन्युक्तेः। अतः सपिण्डीकरणादर्वाक् ऊर्ध्वं चापकर्षः सिद्धः। ननु—

प्रेतसंस्कारकर्म्माणि यानि श्राद्धानि षोडश।
यथाकालं तु कार्याणि नान्यथा मुच्यते ततः॥

इति हारीतवचनान्नापकर्षः सिद्ध्यतीतिचेत्, सत्यम्। संवत्सरान्ते सपिण्डीकरणे अपकर्षो न। अर्वाक्सपिण्डीकरणे तु केन निरोद्धव्योऽपकर्ष इति षोडशश्राद्धानि कृत्वैव सपिण्डीकरणं संवत्सरात्प्रागपि कर्त्तव्यमिति। सोऽयमापत्कल्पः। यदा प्राक्सपिण्डीकरणात् प्रेतश्राद्धानि करोति तदैकोद्दिष्टविधानेन कुर्यात्। यदा तु तदूर्ध्वं करोति तदाब्दिकं श्राद्धं यो यथा करोति पार्वणमेकोद्दिष्टं वा तथा मासिकानि कुर्यात्।

सपिण्डीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि॥

इति स्मरणादिति विज्ञानेश्वरः। तथा संवत्सरपर्यन्तं प्रतिदिनं प्रेतोद्देशेन भोजनपर्याप्तान्नसहित उदकुम्भो देयः।

पद्मपुराणे—

उदकुम्भश्च दातव्यो भोज्यभक्ष्यसमन्वितः।
यावद्वर्षं नरश्रेष्ठ! सतिलोदकपूर्वकम्॥ इति।

हेमाद्रौ स्मृतिसमुच्चये--

एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः।
दिने दिने प्रदातव्यो यावत्स्याद्वत्सरः सुतैः॥ इति।

पारस्करेण पिण्डदानमप्यत्र पाक्षिकमुक्तम्—अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात्पिण्डमप्येके निपृणन्तीति।

अस्मै प्रेताय तदुद्देशेनेत्यर्थः। अर्वाक्सपिण्डीकरणेऽपि देय इत्याह—

याज्ञवल्क्यः, (अ० १ श्रा० प्र० श्लो० २५५)

अर्वाक्सपिण्डीकरणं यस्य संवत्सराद्भवेत्।
तस्याप्येतत् सोदकुम्भं दद्यात्संवत्सरं द्विजः॥ इति।

सपिण्डीकरणोत्तरं मासिकेष्विव नात्र प्रेतशब्दोल्लेखः। अस्मादेव वचनादुदकुम्भस्यापकर्षो नास्तीति प्रतीयते। यत्तु गोभिलश्राद्धकल्पभाष्ये स्कान्दवचो लिखितम्—

अन्नं चैव स्वशक्त्या तु सङ्ख्यां कृत्वाब्दिकस्य तु।
दातव्यं ब्राह्मणेभ्यस्तु यद्वा तन्निष्क्रयं च यत्॥
अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना नराः।
दरिद्रा दुःखिनस्तात! भ्रमन्ति च भवार्णवे॥
ततोऽपकृष्य दातव्यं प्रेतस्याप्युदकुम्भकम्।

इति उदकुम्भस्याप्यपकर्षकं, तत्तु याज्ञवल्क्यवचोविरोधान्नापकर्षपरं किन्तु प्रतिदिनमुदकुम्भान्नदानाशक्तौ एकस्मिन्नपि दिने तावन्तो यथासम्भवं यदा कदाचिद्वा वत्सरमध्ये तावन्तो देया इति तदर्थः आचारस्यापि तथादृष्टत्वात्। अत्र क्वचित्कुम्भस्यान्नसाहित्यं क्वचिदन्नस्य कुम्भसाहित्यं यद्यपि, तथापि गुणप्रधानभावाविवक्षया इदमन्नमेष कुम्भ इति पृथगेव त्यागः कार्यः। अत्र च यदा प्रेतोद्देशनान्नस्य तत्स्थानीयस्य वा द्रव्यस्य श्रद्धया त्यागः श्राद्धमिति विज्ञानेश्वरोक्तं श्राद्धलक्षणं, ब्राह्मणस्वीकारपर्यन्तः पितॄनुद्दिश्य द्रव्यत्यागः श्राद्धमिति कल्पतरूक्तं, पित्रादींश्चतुर्थ्यन्तपदैरुद्दिश्य हविस्त्यागः श्राद्धमिति शूलपाण्युक्तं च श्राद्धलक्षणं, तदापि एतच्छ्राद्धलक्षणाक्रान्तत्वादन्नोदकुम्भत्यागोऽपि श्राद्धरूप एव। यत्तु शूलपाणिना अस्य नित्यश्राद्धत्वमुक्तम्—

अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते।

इति भविष्यपुराणोक्तनित्यश्राद्धलक्षणस्यात्रापि सत्त्वादिति, तन्न। अहन्यहनि यच्चोदितं तन्नित्यामत्यभिधानात्तत्रावधिदिनविशेषानुपादानेन जीवनावधि नियोज्यत्वं प्रतीयते तन्नित्यम्। "कुर्यादहरहः श्राद्धं" इत्यत्र

च तादृशचोदनाचोदितत्वाद्भवति नित्यत्वप्रतीतिः। न तु प्रकृते। अन्यथा कतिपयदिनक्रियमाणेऽपि—

अश्वयुक्कृष्णपक्षेऽपि श्राद्धं कुर्याद्दिनेदिने।

इत्यापरपाक्षिके नित्यश्राद्धत्वप्रसङ्गादिति। ऊनमासिकोनषाण्मासिकोनाब्दिकानि नन्दादिषु न कार्याणि।

गार्ग्यः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे।
ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्॥

मरीचिरपि—

द्विपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने।
चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे॥ इति।

त्रिपुष्करं च त्रिपान्नक्षत्रं भद्रा तिथिर्गुरुभौमरविवाराणामन्यतमस्य मेलने भवति। द्वयोर्मेलने द्विपुष्करम्।

रत्नमालायाम्—

विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते
सुरगुरुरविक्ष्मापुत्राणां कथं चन वासरे।
मुनिभिरुदितः सोऽयं त्रिपुष्करसंज्ञकः॥ इति।
त्रिपाद्भं चेत्तिथिर्भद्रा भौमेज्यरविभिः सह।
तदा त्रिपुष्करो योगो द्वयोर्योगो द्विपुष्करः॥ इति।

द्वितीयासप्तमीद्वादशीनां भद्रातिथीनां पुनर्वसूत्तराफाल्गुनीविशाखोत्तराषाढापूर्वाभाद्रपदनक्षत्राणां भानुभौमशनैश्चराणां च मेलने त्रिपुष्करं द्विमेलने द्विपुष्करम्। नन्दाः प्रतिपत्षष्ठ्येकादश्यः। शेषं प्रसिद्धम्।

इति मासिकानां कालनिर्णयः।

अथ प्रेतक्रियासु विहितनिषिद्धकालाः।

गार्ग्यः—

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत्।
आशौचमध्ये क्रियते पुनःसंस्कारकर्म चेत्॥
शोधनीयं दिनं तत्र यथासम्भवमेव तु।
आशौचविनिवृत्तौ तु पुनःसंस्क्रियते मृतः॥
संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि।
प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम्॥
कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनक्षयम्।

प्रेतश्राद्धं प्रकृत्य गार्ग्यः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
तत्र श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

मरीचिः—

एकादश्यां तु नन्दायां सिनीवाल्यां भृगोर्दिने ।
नभस्यस्य चतुर्दश्यां कृत्तिकासु त्रिपुष्करे ॥

श्राद्धं न कुर्वीतेत्यनुषङ्गः । प्रेतक्रियामेव प्रकृत्य—

भारते,

नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्यं तथाग्नेये च भारत ! ॥
दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत् ।
ज्यौतिषे यानि चोक्तानि तानि यत्नेन वर्जयेत् ॥

उक्तानि वर्ज्यत्वेनेति शेषः । दारुणानि—

दारुणं चोरगं रौद्रमैन्द्रं नैर्ऋतमेव च ।

इत्युक्तानि । प्रत्यरिः=पञ्चमतारा ।

ज्योतिः पराशरः—

साधारणध्रुवोग्रे मैत्रे नो शस्यते मनुष्याणाम् ।
प्रेतक्रिया कथञ्चित्त्रिपुष्करे यमलधिष्ण्ये च ॥

साधारणे कृत्तिकाविशाखे । ध्रुवाणि=उत्तरात्रयं रोहिणी च । उग्राणि=पूर्वात्रयं भरणी मघा च । मैत्रमनुराधा । यमलधिष्ण्यं=धनिष्ठा ।

कश्यपः—

भरण्याद्रा तथाश्लेषा मूलत्रिचरणानि च ।
प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यं च पञ्चकम् ॥

वराहपुराणे—

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् ।
प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥
करणे विष्टिसंज्ञे च शनैश्चरदिने तथा ।
त्रयोदश्यां विशेषेण जन्मतारात्रयेऽपि च ॥

जन्मतारात्रयम्=आद्यदशमैकोनविंशानि ।

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात् ॥

इत्यादयश्च निषेधाः प्रेतक्रियातिरिक्ते न प्रवर्त्तन्ते । प्रेतश्राद्धेष्वपि सावकाशेषु न प्रवर्त्तन्ते । निरवकाशेषु स्वकालेऽनुष्ठीयमानेषु प्रवर्त्तन्ते ।

तदाह गोभिलः—

नन्दायां शुक्रवारेषु चतुर्दश्यां त्रिजन्मसु ।
एकादशाहप्रभृति नैकोद्दिष्टं निषिध्यते ॥

वैजवापः—

युगमन्वादिसङ्क्रान्तिदर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥

इति प्रेतक्रियाविहितनिषिद्धकालाः ।

अथ सपिण्डीकरणकालः ।

तत्र यजमानप्रेतयोरनाहिताग्नित्वे संवत्सरान्तो मुख्यः । उपस्थितवृद्धिपूर्वकालो वा । तथाच—

भविष्यपुराणे,

सपिण्डीकरणं कुर्याद्यजमानो ह्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ! ॥

तथा पुलस्त्योऽपि—

निरग्निः सहपिण्डत्वं पितुर्मातुश्च धर्मतः ।
पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत् ॥

अत्र हि कर्तुरुद्देश्यस्य निरग्नित्वे निमित्ते कालो नियम्यते तस्यैव कर्माङ्गत्वेन विधीयमानत्वात् । यत्तु काले कर्म विधीयते न कर्मणि काल इतिन्यायविद्वचनं तदनुपादेयत्वाभिप्रायम् । न पुनरविधेयत्वपरम् । तथात्वे हि कालस्याङ्गत्वमेव न स्यादविधीयमानत्वात् । न ह्यविधीयमानमङ्गं भवतीति । अत्र हि पूर्णे इति वर्षसमाप्त्युत्तरदिन इत्यर्थः ।

तथाचोशना—

पितुः सपिण्डीकरणं वार्षिके मृतवासरे ।
आधानाद्युपसम्प्राप्तावेतत्प्रागपि वत्सरात् ॥

नागरखण्डेऽपि—

पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम् ।
वृद्धिरागामिकी चेत्स्यात्तदर्वागपि कारयेत् ॥

यच्च पैठीनसिना वत्सरान्ते सपिण्डीकरणमित्युक्तम् । तत्रापि सति सम्भवेव न तु दशान्ते पद इतिवद्वाचकत्वं पूर्वोदाहृतवाक्यविरोधात् । यच्च स्मृत्यर्थसारे द्वादशमासोपान्त्यदिने ऊनाब्दिकं तदुत्तरदिने सपिण्डीकरणं तदुत्तरदिने मृताहरूपे प्रथमाब्दिकमिति, तदेतत् "वार्षिके मृतवासर" इतिवचनविरोधादुपेक्षणीयम् । एवञ्च सति एकोद्दिष्टप्रधानकत्वेन मध्याह्ने सापिण्डनं विधाय पार्वणप्रधानकत्वेन वापराह्णे सपिण्ड-

नं कृत्वा सम्भवेऽपराह्ण एव गौणकालरूपसायाह्ने वा सांवत्सरिकं कार्यं न तु लोपस्तस्य। केचित्तु मृताहदिने सपिण्डने आह्निककलोप एव मुख्यकालस्याभावात्, शेषभोजनं विना सपिण्डीकरणश्राद्धापरिसमाप्तेः श्राद्धान्तरारम्भस्यानुचितत्वाच्चेति वदन्ति। तन्न। नहि गौणकालेऽनुष्ठानं निषिद्धमपि तु मुख्यकालेऽनधिकृतस्य गौणकाले। न च प्रकृते मुख्यकालेऽनधिकारप्रतिपादकं किञ्चिदस्ति। यच्च शेषभोजनं विना कर्म्मासमाप्तेर्न कर्मान्तरारम्भ इति। तन्न। विसर्जनेनैव प्रयोगस्य परिसमाप्तत्वात्। तदुत्तरं च रागतः प्राप्ते भोजने प्रतिपत्तिमाकाङ्क्षमाणस्य शेषस्य नियमो न तु शेषभोजनं श्राद्धाङ्गम्। भवद्वा तद्धि, न रात्रिगतब्रह्मचर्यादिवत्प्रयोगबहिर्भूतमेवाङ्गं तच्च प्रत्याब्दिकेनावश्यकर्त्तव्यतया विहितेन व्यवहितं सदाब्दिकश्राद्धाङ्गकशेषभोजनेन सह तन्त्रेणैकस्मिन् दिने दैववशापन्नानेकवार्षिकशेषभोजनमिवानुष्ठातुं शक्यमिति न किञ्चिदनुपपन्नम्। वृद्धिरभ्युदयः।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा।
सहपिण्डाक्रियां कृत्वा कुर्यादभ्युदयं ततः॥

इति लघुहारीतोक्तेः।

गोभिलोऽपि यदहर्वा वृद्धिरापद्यते इति वृद्धिर्वा यदहः स्यादिति।

अत्र वृद्ध्यहः सन्निहितं दिनान्तरमुच्यते। अन्यथा तस्मिन्नेव दिने सपिण्डीकरणापत्तिः। तच्च विरुद्धम्। सपिण्डीकरणस्य मध्याह्नकालत्वात् वृद्धिश्राद्धस्य च प्रातःकालिकत्वात्। स्पष्टं चोक्तम्—

नागरखण्डे,

पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्।
वृद्धिरागामिनी चेत्स्यात् तदर्वागपि कारयेत्॥

उपलक्षणं चैतन्नान्दीनिमित्तस्य कर्ममात्रस्य। तथा च—

शाट्यायनिः,

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा।
अपकृष्यापि कुर्वीत कर्त्ता नान्दीमुखं द्विजः॥ इति।

अयं चापकर्षः सपिण्डनं विना पित्रादीनां पार्वणार्हपितृत्वप्राप्त्यभावेन नान्दीश्राद्धस्य कर्त्तुमशक्यत्वात् ज्ञेयो न तु वाचनिक इति केचित्। अपरे तु न ह्यदृष्टार्थे हेतुना प्रयोजनम्। न ह्यपकर्षे देवताऽसम्भवः प्रयोजकः किन्तु विधिः। देवताया अभावे तु जीवत्पितृकस्येव कर्मलोप एव युक्तः। देवतानुरोधेनैवापकर्षे तीर्थश्राद्धाद्यनुरोधेनापकर्षापत्तेः। तस्माद्वचनादेवापकर्षः। किञ्चाहिताग्नेर्दौहित्रस्य विद्यमानेऽपि

निरग्नौ मातुले पार्वणानुरोधेन मातामहसपिण्डीकरणं प्राप्नुयाद्दौहित्रानुरोधेन वा मातुलस्य गौणकालेऽनुष्ठानप्रसङ्गः, "न पार्वणं नाभ्युदयम्" इति पृथकुवचनवैयर्थ्यापत्तेश्च। अभ्युदयश्च अवश्यकर्त्तव्यो न काम्यः। तस्य सपिण्डीकरणानपकर्षेऽपि पृथक्कर्त्तुं शक्यत्वात्। साग्नेः प्रेतस्य निरग्निकर्त्तृकसपिण्डीकरणकालमाह—

लघुहारीतः,

अनग्निस्तु यदा वीर! भवेत्कुर्य्यात्तदा गृही।
प्रेतश्चेदग्निमांस्तस्य त्रिपक्षे वै सपिण्डनम्॥

गृही=कर्त्ता।

सुमन्तुरपि—

प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत्।
सपिण्डीकरणं कार्यं तदा पक्षे तृतीयके॥

अत्र च 'त्रिपक्षे वै सपिण्डनम्' इत्यत्र तृतीयस्य पक्षस्याधिकरणतोक्ता सप्तमीश्रवणात्। न चास्तु सप्तमी परं तु सतिसप्तमी सा, एवं च मासिकाब्दिकादिश्राद्धवन्मृततिथिसजातीयायां तिथौ सपिण्डीकरणमिति वाच्यम्। "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इतिन्यायात्सतिसप्तमीतोऽधिकरणसप्तम्या एव बलीयस्त्वात्पूरणार्थकप्रत्ययबलाद्द्वितीयपक्षस्यैव लाभात्। न च "पूर्णे संवत्सरे षण्मासे त्रिपक्षे यदहर्वा वृद्धिरापद्यते" इति गोभिलवाक्ये संवत्सर इव षण्मासत्रिपक्षयोरपि पूर्ण इत्यनुषङ्गेणान्वयात्तदुत्तरदिनस्यैव ग्रहणमिति वाच्यम्। प्रमाणाभावेन "मासं दर्शपौर्णमासाभ्यामिष्ट्वापवसाद्भिश्चरान्ति" इत्यत्र मासस्योपसत्स्विवात्र पूर्ण इत्यस्य षण्मासत्रिपक्षयोरननुषङ्गात्। तेन सम्पूर्णस्य तृतीयस्याधिकरणत्वमिति। हेमाद्रिस्तु पक्षत्रये पूर्ण इति वदन्नपि तृतीयपक्षसम्पूर्त्तिदिनस्यैवाधिकरणत्वमाह सप्तमीस्वारस्यात न तु तदुत्तरदिनस्येति। कर्त्तुः साग्नित्वे—

सुमन्तुः,

यजमानोऽग्निमान् राजन्! प्रेतश्चानग्निमान् भवेत्।
द्वादशाहे भवेत्कार्यं सपिण्डीकरणं सुतैः॥

कात्यायनः—

एकादशाहं निर्वर्त्य अर्वाग्दर्शाद्यथाविधि।
प्रकुर्वीताग्निमान् विप्रो मातापित्रोः सपिण्डनम्॥ इति।

अत्रार्वाक्दर्शादित्युक्तावपि "एकादशाहे द्वादशाहे वा" इत्यादि बौधायनाद्युक्तविहितकाल एव कर्त्तव्यं, तदबाधेनैवोपपत्तौ बाधायोगात् स्वतन्त्र-

कालकल्पनाप्रसङ्गाच्च । हेमाद्रिस्तु स्वतन्त्रं कालान्तरमित्याह । यत्तु—

या तु पूर्वममावास्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥

इति जाबालिवचनं तत् मरणादिनावधिकदशमदिनपरम् । एवंचैकादशं दिनमुक्तं भवति । यदा च दर्शो द्वाविंशतिदिनादूर्ध्वं भवति तदाशौचात्परतो द्वादशसु दिवसेषु षोडशश्राद्धानि कृत्वा त्रयोदशदिवसे सपिण्डीकरणं कार्यम् । सपिण्डीकरणं प्रकृत्य—

मासिकार्थवत् द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् ।

इति विष्णूक्तेः । अस्यार्थः । मासिकानामर्थः प्रयोजनं प्रेतभावनिवृत्तिस्तद्वच्छ्राद्धम् । गणाभिप्रायमेकवचनम् । तत्रोनमासिकत्रैपक्षिकोनषाण्मासिकानि प्रथमद्वितीयषष्ठद्वादशदिवसेषु कार्याणि दिवसस्य मासस्थानीयत्वात् । अत एवाग्रे "संवत्सराभ्यन्तरे यद्यधिकमासको भवेत्तदा। मासिकार्थे दिनमेकं वर्धयेत्"इति तेनैवोक्तम् द्वादशाह त्रयोदश इति चाशौचोत्तरादिनमारभ्यैव "परतो दशरात्रस्य"इति जाबालोक्तेः । अत्र दशरात्रग्रहणं तत्तदाशौचोपलक्षणम् । तथा साग्निना प्रवसितेन विच्छिन्नाग्निना वा पार्वणश्राद्धानुरोधेनापि अपकर्षः कार्यः । तथा च—

हेमाद्रौ प्रजापतिः,

नासपिण्ड्याग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

इत्यवश्यकर्त्तव्याभ्युदयसाहचर्येण पार्वणस्योक्तत्वात् । अर्वाक् दर्शादितिदर्शोपादानाद्दर्शसम्बन्धिपितृयज्ञवत्पार्वणस्यापि ग्रहणाच्च । एतच्च यन्मते पिण्डपितृयज्ञनिमित्तं सपिण्डीकरणापकर्षणं तन्मतेऽपि पितुरिव मातुरपि कार्यम् ।

एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके ।
पत्नी पतिपितॄणां तु तस्मात्तद्गोत्रभागिनी ॥
सपिण्डीकरणादूर्ध्वं यत्पितृभ्यः प्रदीयते ।
सर्वेष्वंशहरा याता इति धर्मेषु निश्चयः ॥

इति यज्ञपार्श्वबौधायनवचनाभ्यां पितृपिण्डे तस्या अंशभागित्वात् । न चैवं तस्या उद्देश्यत्वापत्तिरिति वाच्यम् ।

एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते ।

इति वचनेन सपत्नीकत्वेनानुद्देशेऽपि भर्तृपिण्डांशोपभोगोक्तेः । अन्यथा मातामहेन सह सपिण्डने मातामहपिण्डभोक्तृत्वं न स्यात् । न हि सदुहितृकेतिमातामहानामुद्देशः प्रमाणाभावात् । तस्मात्साग्नि-

ना कर्त्रा आशौचोत्तरं द्वादशसु दिवसेषु मासिकानि कृत्वा त्रयोदशे ऽह्नि मरणदिनादारभ्य वा द्वादशे दिने एकादशेऽहनि एव वा दर्शपाते तत्रैव सपिण्डनं कार्यम्। अत्र च प्रमादादकरणे त्रिपक्षादिषु विहितेषु कालेषु कार्यम्। तथाच—

गोभिलः,

द्वादशाहादिकालेषु प्रमादादननुष्ठितम्।
सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु॥

इदं च साग्निकस्यैव। तस्यैव द्वादशाहादीनां मुख्यत्वात् तदग्रिमाणामनुकल्पत्वेन विधानमुक्तं न तु निरग्निकस्य। तस्य वर्षान्तस्यैव मुख्यत्वात्, न च तदुत्तरं विहितः कालोऽस्तीति।

भविष्यपुराणे—

द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।
एकादशेऽपि वा मासि माङ्गल्यस्याप्युपस्थितौ॥

अत्र षष्ठे वेत्यत्र मासीति सम्बध्यते। तथा च—

बौधायनः-अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे तृतीयमासि षष्ठे वैकादशे वा द्वादशाहे वेति।

अत्रापि पूर्वोक्तयुक्त्याधिकरणत्वे सिद्धे यदतीते षष्ठे मासीति कस्यचिद्व्याख्यानं तत्र मूलं मृग्यम्। कालान्तरमाह—

पैठीनसिः, संवत्सरान्ते विसर्जनं नवममास्यमित्येके।

विष्णुरपि—

मासिकार्थवत् द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात।

व्याघ्रः साधारण्येनैव द्वादशाहप्राशस्त्यमाह—

आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते॥

कुलधर्म्माणां=कुलाचारान्नियतकालिकानां वृद्धिश्राद्धवतां चूडाद्यनुष्ठानानाम्। अस्थितिश्च राजोपद्रवादिना देशत्यागसम्भावनारूपा रोगादिना कर्मासामर्थ्यरूपा वा। प्राशस्त्यं च मुख्यकालानुष्ठितेनेव तस्मिन् कालेऽनुष्ठितेनाप्यनेन प्रेतत्वनिवृत्तिर्भवतीति। द्वादशाहश्च द्वादशश्च तदहश्चेतिव्युत्पत्त्या द्वादशं दिनं तच्च मृतदिनावधिकमेव। द्वादशानामह्नां सङ्घातो द्वादशाहः षोडशश्राद्धापकर्षकः कालः स चाभ्युदयरूप इति शूलपाणिः। ननु कथमस्य प्रशस्तत्वं सपिण्डीकरणं हि पितृत्वप्राप्त्यर्थं न च द्वादशाहे कृतं केवलं तत्पितृत्वापादकं भवति। यतो—

विष्णुधर्मोत्तरे,

कृते सपिण्डीकरणे नरः संवत्सरात्परम्।

प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ॥ इति।

अग्निपुराणेऽपि—

अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत्।
प्रेतत्वमपि तस्यापि ज्ञेयं संवत्सरं नृप ! ॥ इति।

अतः पूर्वं कृतेऽपि सपिण्डने वत्सरान्त एव प्रेतत्वनिवृत्तेः कथमस्य प्रशस्तत्वमितिचेत्, षोडशश्राद्धान्यकृत्वा कृते सपिण्डने न पितृत्वप्राप्तिरित्येतत्परमिदं वचनद्वयम्।

श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम्।

इत्यनेनैकवाक्यत्वात्। अस्मादेव वचनात्षोडशश्राद्धान्यपकृष्टव्यानीत्यप्युक्तं भवति। कथमन्यथा षोडशश्राद्धानामपकर्षाभावे तत्साध्यप्रेतत्वनिवृत्तेरभावेन कृतं सपिण्डीकरणश्राद्धमप्यर्थं स्यात्। ननु षोडशश्राद्धान्यपकृष्य कृते सपिण्डने प्रेतत्वनिवृत्तेर्जातत्वात्पुनर्मासिकोदकुम्भश्राद्धं न स्यात्। सत्यम्। यदि—

यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत्।
मासिकं चोदकुम्भं च देयं तस्यापि वत्सरम् ॥

इतिलौगाक्षिवचनं न स्यात्। तस्माद्वचनादेव पुनरावृत्तिरिति। केचित्तु वृद्धिनिमित्तं विनापकृष्टे सपिण्डने संवत्सरान्त एव प्रेतत्वनिवृत्तिः। वृद्धिनिमित्तं त्वपकर्षणे सपिण्डनोत्तरमेवाऽव्यवधानेन प्रेतत्वनिवृत्तिः। अत एव "अर्वाक्संवत्सराद्वृद्धौ" इत्यनेन सपिण्डनापकर्षमभिधायाह—

शातातपः,

न पृथक्पिण्डदानं च तस्मादूर्ध्वं विधीयते।
प्रेतानामिह सर्वेषां ये मन्त्रैश्च नियोजिताः ॥
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ता पितृगणं तु ते। इति।

यदि वाऽशक्त्या गौणेकालेऽनुष्ठानं दैवात्तदुत्तरं वृद्ध्याद्यापद्येत तदा वृद्धिकालं प्राप्य प्रेतत्वपरिहारो भवति तस्य वत्सरान्तकालतुल्यत्वादिति वदन्ति। अत्रैवं प्रतिभाति। कथमस्य वत्सरान्तकालतुल्यत्वमिति। यदि चाहिताग्नेर्द्वादशाहस्यैव मुख्यत्वेन प्रेतत्वनिवृत्तिफलकस्य सपिण्डनस्यात्र विहितत्वादिति, तदा विहितत्वं गौणस्याप्यस्त्येव। मुख्यकालश्च न स्वरूपेण प्रयोजकः अन्यथा वत्सरान्ते सपिण्डनाभावेऽपि प्रेतत्वनिवृत्तिः स्यादेव तस्मान्मुख्यकालेऽनुष्ठितमेव सपिण्डनं प्रेतत्वनिवर्त्तकं वाच्यम्। एवं सति विहितस्यानर्थकत्वानुपपत्त्या विहितकालेऽनुष्ठितमेव प्रेतत्वनिवर्त्तकमित्यस्तु कृतं मुख्यत्वेनेति। तस्मात्षोड-

शश्राद्धसहितं सपिण्डीकरणमात्रं प्रेतत्वनिवर्त्तकं न मुख्यकालसहित-मिति। केचित्तु सर्वेषामपि कालानामनाहिताग्निं प्रति मुख्यत्वेन द्वादशादिकालेषु कृतं सपिण्डनं वृद्धिपूर्वं कृतमिव प्रेतत्वनिवर्तकमिति। ते च कालाः। तत्र तावत् चतुर्विंशतिमते--

सपिण्डीकरणं चाब्दे सम्पूर्णेऽभ्युदयेऽपि वा।
द्वादशाहे तु केषाञ्चिन्मतं चैकादशे तथा॥ इति।

केचित्तु इदं सकलसाधारणमुख्यकालसङ्ग्राहकं न तु निरग्नेरेकादशाहादिप्रतिपादकम्। अन्यथा साग्नेरपि संवत्सरान्तकालसाधकं स्यात्। एवं च "या तु पूर्वममावास्या" इत्यादिवाक्यैस्तांस्तान् प्रति प्राप्तानेव कालान् विदधन्नापूर्वश्रुतिमूलमित्याहुः।

पराशरमाधवीये भविष्ये,

सपिण्डीकरणं कुर्याद्यजमानस्त्वनाग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ!॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।
एकादशेऽपि वा मासि माङ्गल्यस्याप्युपस्थितौ॥ इति।

एते च सर्वे मुख्याः। एषु द्वादशाहः प्रशस्तः। आनन्त्यादिवचनात्। अन्यत्रेच्छया विकल्प इति माधवः। अन्ये तु वत्सरान्तो मुख्यस्तत्सन्निहित एकादशो मासो जघन्यः। एवमन्ये विप्रकृष्टा यथापूर्वं जघन्या इति। यदा च सपिण्डीकरणार्थं षोडशश्राद्धान्यपकृष्यन्ते तदा मृततिथिसजातीयायां तिथौ कार्य्याणि। एकस्यापि मुख्यकाललाभात्। असम्भवे तु सपिण्डनदिने एव निमित्ते सन्निधानात्। अथ वा सति कालव्यवधाने प्रागुदाहृतविष्णुवाक्यात् द्वादशसु दिवसेषु षोडशश्राद्धानि विदध्यादिति। शूद्राणां तु द्वादशाह एव सपिण्डनम्। तथाच—

विष्णुः, मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नीति।

न च कात्यायनेन—

सर्वेषामेव वर्णानां सूतकान्ते सपिण्डनम्।

इति विधानान्मासं शूद्रस्याशौचसत्त्वादवयवपिण्डस्य दशमस्य तं प्रति सूतकान्ते विहितत्वात् कथं द्वादशाहे शूद्रस्य सपिण्डनमिति-वाच्यम्।

सर्वेषामेव वर्णानां दशाहं सूतकं भवेत्।

इत्येतत्पक्षमाश्रित्य वा सच्छूद्रस्य दर्शश्राद्धानुरोधेन एकादशाह-विधिवद्वचनबलात्सूतकानिवृत्तिमभ्युपेत्य वा वचनात् सूतकमध्य एव

वा कार्य्यमिति न दोषः । वस्तुतो द्वादशाहपदं न मरणादिनादारभ्य द्वादशाहपरं किन्तु सूतकान्तदिवसादूर्ध्वं द्विजातिवत् द्वादशसु दिवसेषु द्वादश मासिकानि कृत्वा द्वादशाह एव सपिण्डनं कार्य्यं न तु द्विजातिवत्त्रयोदशाहे । अत एव तत्रोक्तम्—यद्यधिमासस्तदा त्रयोदशे दिन इति । एतेन यत्किञ्चिच्छ्राद्धवृद्धिर्न दिनवृद्धिरिति तदपि परास्तम् । देशान्तरस्थिते तु पुत्रे इतिविशेषः । तत्र शातातपः—

देशान्तरगतानां च पुत्राणां च कथं भवेत् ।
श्रुत्वा तु वपनं कार्यं दशाहं तु तिलोदकम् ॥
ततः सपिण्डीकरणं कुर्य्यादेकादशेऽहनि ।

वर्षान्तकालातिक्रमे कालान्तरमुक्तं माधवीये—
ऋष्यश्रृङ्गः,

सपिण्डीकरणं श्राद्धमुक्तकाले न चेत् कृतम् ।
रौद्रहस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥

एतच्च नक्षत्राद्यनुसारेण वृद्ध्याद्युपस्थितौ विहितकालान्तरालाभेऽपि द्रष्टव्यम् ।

इति सपिण्डनकालः ।

अथ सामान्यश्राद्धतिथिनिर्णयः ।

श्राद्धं च त्रिविधं पार्वणमेकोद्दिष्टं दैविकं च ।

तत्र कण्वः—

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्त्तितम् ।
त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः ॥

पारस्करः—

देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते ।
तन्नित्यश्राद्धवत्कुर्यादुद्वादश्यादिषु यत्नतः ॥

तत्र यस्यां तिथौ पार्वणश्राद्धं विहितं सा यदि दिनद्वयसम्बन्धिनी भवेत्तदा यस्मिन्पूर्वस्मिन्परस्मिन्वा दिनेऽपराह्णव्यापिनी तस्मिन् दिने पार्वणमनुष्ठेयम् ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति याज्ञवल्क्यवचनात् ।

मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथि र्भवेत् ।
अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥

इति गौतमवचनाच्च । यदा पूर्वेद्युरपराह्णव्यापिनी तदा पूर्वैव

ग्राह्या।

तथाच मनुः—

यस्यामस्तं रविर्याति पितरस्तामुपासते।
सा पितृभ्यो यतो दत्ता ह्यपराह्णः स्वयंभुवा॥

यस्यामपराह्णसम्बन्धिन्यां रविरस्तं याति सा पितृकार्ये प्रशस्तेत्यर्थः।

तथा च हारीतः—

अपराह्णः पितॄणां तु याऽपराह्णानुयायिनी।
सा ग्राह्या पितृकार्ये तु न पूर्वा स्तानुयायिनी॥

अस्तानुयायिनी=अस्तमात्रानुयायिनी। तथा च याऽपराह्णव्यापिन्यस्तानुयायिनी सा पितृकार्ये ग्राह्येत्यर्थः। यदा तु दिनद्वयेऽपि नापराह्णव्यापिनी तदापि पूर्वैव ग्राह्या। तथाच—

वृद्धयाज्ञवल्क्यः,

दैवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥

शिवरहस्यसौरपुराणयोः—

प्रायः प्रान्त उपोष्या हि तिथिर्दैवफलेप्सुभिः।
मूलं हि पितृतृप्त्यर्थं पैत्रं चोक्तं महर्षिभिः॥

नारदीयपुराणे—

तिथेः प्रान्तं सुराख्यं हि उपोष्यं कवयो विदुः।
पित्र्यं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः॥
पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते।
न तत्रौदयिकी ग्राह्या दैवे ह्यौदयिकी तिथिः॥

गोभिलः—

सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता।
सायाह्नव्यापिता च त्रिमुहूर्त्तान्यूनाया एव भवति।

बौधायनोऽपि—

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः॥

भानावुदिते सति यद् द्विमुहूर्त्तं मुहूर्त्तद्वयं तद्दैवतं=दैवकर्मयोग्यम्। अस्तमिते अस्तं गन्तुमारब्धे भानौ अस्तमयात्पूर्वं यत् त्रिमुहूर्त्तं तत्पित्र्यं=पित्र्यकर्मयोग्यम्। तस्मात्तद्वर्त्तिनी तिथिर्हव्यकव्ययोर्ग्राह्येत्यर्थः। दिनद्वयेऽपि वैषम्येणापराह्णैकदेशव्याप्तौ तदाधिक्यवती ग्राह्या 'अणुरपि विशेषोऽध्यवसायकर' इति न्यायात्। दिनद्वयेऽपि साम्येनापराह्णैकदेशव्या

तिथिश्च श्राद्धाङ्गतिथेर्वृद्ध्या क्षयेण साम्येन वा भवति, तत्र कस्मिन्दिने पार्वणमिति संशये--

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी॥

इति व्याघ्रपचनान्निर्णयः। खर्वः=साम्यवांस्तिथिः, दर्पो वृद्धिस्तद्वां स्तिथिः, हिंसा क्षयस्तद्वानिति त्रिविधं तिथिलक्षणं तिथिस्वरूपम्। अत्र खर्वत्वादीनां ग्राह्यतिथिगतत्वं खर्वदर्पयोः परयोर्हिंसायाश्च पूर्वस्या ग्राह्यत्वाभिधानात्। सा च तुल्यकालैकदेशव्याप्तिर्ग्राह्यतिथेर्वृद्धिक्षयसाम्यैरित्थंभवति समरात्रिन्दिवसमये यदा विंशतिघटीपरिमिता पूर्वातिथिर्भवति द्वाविंशतिघटीपरिमिता चोत्तरातिथिस्तदा दिनद्वयेऽपि साम्येन घटीचतुष्टयपरिमितापराह्णैकदेशव्याप्तिर्भवति। ग्राह्यतिथिश्च घटीद्वयेन वर्धते। यदा च द्वाविंशतिघटीपरिमिता पूर्वतिथिर्विंशतिघटीपरिमिता चोत्तरतिथिस्तदापि साम्येन घटीद्वयरूपापराह्णैकदेशव्याप्तिर्भवति तिथिश्च घटीद्वयेन क्षीयते। यदा च पूर्वोत्तरदिनयोः पूर्वोत्तरे तिथी एकविंशतिघटीपरमिते स्तस्तदापि साम्येनैव घटीत्रयपरिमितापराह्णैकदेशव्याप्तिर्भवति तिथिश्च साम्यमुपैति। अत्र वृद्धिसाम्ययोः परा ग्राह्या क्षये पूर्वेति।

इति पार्वणनिर्णयः।

एकोद्दिष्टस्य तु कालमाह हारीतः--

आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्॥

उपक्रमकालमाह व्यासः--

कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्।
आवर्त्तनसमीपे वा तत्रैव नियतात्मवान्॥

समाप्तिकालमाह श्लोकगौतमः--

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥

एवं च कुतपरौहिणयोर्मुहूर्त्तयोरेकोद्दिष्टकालत्वात् तद्व्याप्त्यादिनैव निर्णयः। अत्रापि पूर्वेद्युरेव मध्याह्नव्याप्तिरपरेद्युरेव मध्याह्नव्याप्तिरित्यनयोः पक्षयोः--

मध्याह्नव्यापिनी या तु तिथिः पूर्वा परापि वा।
तस्यां पितृभ्यो दातव्यं ह्रासवृद्धी न कारणम्॥

इति बौधायनवचनान्निर्णयः। दिनद्वयेऽपि मध्याह्नव्याप्तित्वे तत्स्पर्शाभावे वा पूर्वेद्युरेवानुष्ठानम्।

दैवकार्ये तिथिर्ज्ञेया यस्यामभ्युदितो रविः।
पितृकार्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः॥

इति वृद्धयाज्ञवल्क्यवचनादिपूर्वोदाहृतशिवरहस्यसौरपुराणादिवचनेभ्यः। दिनद्वयेऽपि साम्येनैकदेशव्याप्तौ पूर्ववदेव खर्वादिवाक्यान्निर्णयः। वैषम्येणैकदेशव्याप्तौ तु महत्त्ववशान्निर्णयः। दैविकः श्राद्धकाल उक्तो—

ब्रह्मपुराणे,

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

पूर्वाह्णस्तु—

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्तथापरः।

इत्युक्तः। तत्राऽपि—

प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः।
नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः॥

इतिमाधवोदाहृतात्छिवराघवसंवादवाक्यात्प्रातःकालविहितवृद्धिश्राद्धातिरिक्तेषु श्राद्धेषु प्रातः कालस्य निषेधात्तदतिरिक्तपूर्वाह्णो दैविकश्राद्धकालः तद्व्याप्त्यैव पूर्ववन्निर्णयः। विशेषस्तु यदा वृद्धिक्षयादिभिर्दिनद्वयेऽपि तुल्यकाला कर्मकालव्याप्तिस्तदोत्तरैव ग्राह्या।

उदिते दैवतं भानौ पित्र्ये चास्तमिते रवौ।
द्विमुहूर्त्ते त्रिरह्नो वा सा तिथिर्हव्यकव्ययोः॥

इति बौधायनवचनात्। खर्वादिवाक्यस्य चैतद्भिन्नपिऽयविषयत्वात्।

इतिसामान्यश्राद्धतिथिनिर्णयः।

अथापराह्णदिलक्षणानि।

स्कन्दपुराणे—

आवर्त्तनात्तु पूर्वाह्णोऽप्यपराह्णस्ततः परः। इति।

आवर्त्तनादित्यत्राङ्प्रश्लेषः कार्य्यः। आवर्त्तनं नाम दिनमध्यं तथा च आवर्त्तनावधिकः पूर्वो भागः पूर्वाह्णस्तदवधिकः परो भागोऽपराह्ण इत्यर्थः। इममेव विभागमभिप्रेत्य—

मनुराह, ( अ० ३ श्लोक० २७८ )

यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते॥ इति।

अत्र मासस्य भागयोः पूर्वपक्षापरपक्षयोर्दृष्टान्तीकरणात्पूर्वाभ्यांप·

रार्धरूपौ पूर्वाह्णापराह्णावह्नो भागौ प्रतीयेते । त्रेधाविभक्तस्याह्नस्त्रयो भागाः पूर्वाह्णमध्यन्दिनापराह्णाः श्रुतौ विनियुक्ताः ।

पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददातीति ।

अत्र विधेयापराह्णस्य स्तुत्यर्थमुक्तस्य पूर्वाह्णमध्यन्दिनयोर्देवमनुष्यसम्बन्धस्य प्रमाणान्तराप्रतीतत्वात्पूर्वाह्णे देवेभ्यो ददाति मध्यन्दिने मनुष्येभ्य इति विधी कल्प्येते इति ।

स्कन्दपुराणे—

ऊर्ध्वं सूर्य्योदयात्प्रोक्तं मुहूर्त्तानां तु पञ्चकम् ।
पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परः ॥
अपराह्णस्ततः प्रोक्तो मुहूर्त्तानां तु पञ्चकम् ॥

शातातपोऽपि—

तस्मादह्नस्तु पूर्वाह्णे देवा अशनमभ्यवहरन्ति ।
मध्यन्दिने मनुष्या अपराह्णे पितर इति ॥

चतुर्धा विभागमाह गोभिलः,

पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा ।
आतृतीयादपराह्णः सायाह्नश्च ततः परः ॥ इति ।

पञ्चधा विभागद्योतिका शतपथश्रुतिः-आदित्यस्त्वेव सर्व ऋतवः स यदैवोदेत्यथ वसन्तो यथा सङ्गवोऽथ ग्रीष्मो यथा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्त इति ।

पञ्चदशमुहूर्त्तात्मकस्य दिवसस्य त्रिमुहूर्त्तपरिमित एको भागः । एवं पञ्च भागाः प्रातःसङ्गवमध्याह्नसायाह्नापराह्णसंज्ञा भवन्ति ।

व्यासोऽपि—

मुहूर्त्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः ॥
सायाह्नस्त्रिमुहूर्त्तस्तु सर्वधर्मबहिष्कृतः । इति ।

पञ्चदशधा विभाग उक्तः प्रभासखण्डे—

अह्नो मुहूर्त्ता विज्ञेया दश पञ्च च सर्वदा । इति ।

अहस्त्रिंशद्घटीपरिमितत्वे न्यूनाधिकत्वे वा मुहूर्त्ताः पञ्चदशैवेति सर्वदेत्यस्यार्थः । मुहूर्त्तानां क्रमेण नामानि—

रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः स्मृतः ।
सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा ॥
रोहिणस्तिलकश्चैव विभवो निर्ऋतिस्तथा ।

शर्वरो विजयश्चैव भेदाः पञ्चदश स्मृताः ॥ इति ।
अष्टधा विभागादयस्तु तादृशव्यवहाराभावान्न निरूपिताः ।

अथैषामह्नर्भागानां परिमाणानि निरूप्यन्ते ।

तत्र प्रातःसङ्गवयोस्त्रिमुहूर्त्तपरिमितत्वमेव पूर्वाह्णस्तु द्विधाविभागे सार्धसप्तमुहूर्तपरिमितः, त्रिधा विभागे पञ्चमुहूर्त्तपरिमितः, चतुर्धाविभागे सार्धप्रहरपरिमितः । एवं त्रिविधः पूर्वाह्णः । मध्याह्नोऽपि त्रिधाविभागे पञ्चमुहूर्त्तपरिमितश्चतुर्धाविभागे प्रहरपरिमितः पञ्चधाविभागे त्रिमुहूर्त्तपरिमित इति त्रिविधः । अपराह्णोऽपि द्विधाविभागे सार्धसप्तमुहूर्त्तपरिमितः, त्रिधाविभागे पञ्चमुहूर्तपरिमितः, चतुर्धाविभागे प्रहरार्धपरिमितः, पञ्चधाविभागे त्रिमुहूर्त्तपरिमित इति चतुर्विधोऽपराह्णः । सायाह्नश्च चतुर्धाविभागे प्रहरपरिमितः, पञ्चधाविभागे त्रिमुहूर्त्तपरिमित इति द्विविधः सायाह्नः । एते च पूर्वाह्णादयस्तु तत्तत्कर्मसु यथाविनियोजकं यथालाभं ग्राह्या यवव्रीह्यादिवत् । यद्वा "आवर्त्तनात्तु पूर्वाह्ण" इत्यादिवाक्यैस्सार्धसप्तमुहूर्त्तात्मकस्य कालस्य पूर्वाह्णत्वे बोधिते तदन्तर्गतसार्धप्रहराद्यात्मकस्याल्पपरिमाणस्य तदन्तर्गतत्वात्पूर्वाह्णत्वप्राप्तौ "पूर्वाह्णः प्रहरं सार्धम्" इत्यादिवचनानां वैयर्थ्यापत्तेराधिकाधिकपरिमाणपूर्वाह्णाद्यपेक्षयाऽल्पाल्पपरिमाणपूर्वाह्णादेस्तरतमभावः कल्पनीय इति हेमाद्रिः ।

अथ कुतपकालः ।

स्कन्दवायुपुराणयोः,

कुं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे ।
स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम् ॥

कुं=पृथिवीम् । गोपतिः=सूर्य्यः । गोभिः=किरणैः । सर्वपृथिवीतापकत्वं खमध्यगतस्य सूर्य्यस्य भवतीति तदुपलक्षितः कालः कुतपशब्देनोच्यत इत्यर्थः । स चाह्नोऽष्टमो मुहूर्त्तः । तदुक्तम्—

वायुपुराणे,

मुहूर्त्तात्सप्तमादूर्ध्वं मुहूर्त्तान्नवमादधः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥

कालिकापुराणे—

ब्राह्मणः कम्बलो गावो सूर्य्योऽग्न्यतिथयोऽपि च ।
तिला दर्भाश्च मध्याह्नो नवैते कुपाः स्मृताः ॥

प्रभासखण्डेऽपि—

मध्याह्नः खड्गपात्रं च तथा नेपालकम्बलः ।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

इति कुतपः ।

अथ श्राद्धवेला ।

तत्र निषेधमुखेन तावत्सा निरूप्यते ।

मनुः—( अ० ३ श्लो० २८० )

रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥ इति ।

अत्र सन्ध्याशब्देन—

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमिष्यते ।
सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ॥

इति परिभाषिता सन्ध्या न गृह्यते । किन्तु मुख्यैव रविमण्डलोपलम्भयोग्यकालरूपा । परिभाषितायाः रात्रिनिषेधेनैव सिद्धेः ।

मत्स्यपुराणे—

सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् ।

बौधायनः—

चतुर्थे प्रहरे प्राप्ते श्राद्धं तत्र न कारयेत् ।

एते च न निषेधा विकल्पप्रसङ्गात् । न च "दीक्षितो न ददाति" इतिवद्विकल्पपरिहारः । विधिनिषेधयोरुभयोरपि प्रकरणाच्छ्राद्धार्थत्वेन भिन्नविषयत्वात् । तेनैते पर्युदासा एव । यत्त्वत्र शूलपाण्यादिभिरुक्तं न विकल्पभिया पर्युदासाङ्गीकरणं विधिनिषेधयोः सामान्यविशेषरूपत्वेन तुल्यबलत्वाभावात् तदप्रसक्तेः, किन्तु एकवाक्यतालाघवात् इति । तन्तु आकराज्ञानप्रयुक्तम् । अन्यथा "न तौ पशौ करोति" इत्यत्रापि विकल्पाभावप्रसङ्गाच्च । तस्मादुक्तविधयैव पर्युदासत्वम् । एतेषां च पर्युदासत्वम् अमावास्याविधिशेषतया रात्र्यादीतरामावास्यायामिति शूलपाणिः । तदयुक्तम् । रात्र्यादिभागानां सावनदिनावयवत्वेन अमावास्याशब्दवाच्यचान्द्रतिथ्यवयवत्वाभावेनेदृशपर्युदासानुपपत्तेः । तेन रात्र्याद्यतिरिक्तसावनदिनभागे इति सावनदिनसङ्कोचेनैव पर्युदासत्वम् । न च सावनदिनविध्यभावात्कथं तच्छेषत्वेन पर्युदासत्वम् । अमावास्यादिविधीनामेव सावनदिनविधायकत्वात् । ते हि अहोरात्रं

विना कर्मकरणाशक्तेस्तद्वदहोरात्रपरा भवन्ति। यथा वसन्तादेर्निमित्तस्य श्रवणम् अजीवतोऽनुष्ठानासम्भवाद्वसन्ताद्यवच्छिन्नजीवनपरं भवति। अत एवाद्येत्यादिसङ्कल्पवाक्ये सावनदिनस्याधिकरणत्वेनोल्लेखः शिष्टानाम्। पुराणेष्वपि च "अद्य जन्माष्टमीं प्राप्य" इति सङ्कल्पवाक्यं सावनदिनस्य विधिं सूचयति। तेन सावनदिनसङ्कोचेनैव पर्य्युदासः। ननु पर्युदासस्यापि पर्युदसनीयप्राप्तिसापेक्षत्वात्सर्वश्राद्धेषु च पूर्वाह्णापराह्णादितत्तत्कालानां नियतत्वेन रात्र्यादिप्राप्त्यभावात्कथमेते पर्युदासा इति चेत्, प्रातःसन्ध्यातत्समीपपर्य्युदासस्तावत्प्रातर्वृद्धिनिमित्तकवचनप्राप्तपुत्रजन्मातिरिक्तवृद्धिश्राद्धविषयः। समीपमपि चात्र मुहूर्त्तमात्रं "सूर्योदयमुहूर्त्ते च" इति शातातपवचनात्। सायंसन्ध्या तत्समीपसायाह्नादिपर्युदासाश्च पार्वणश्राद्धविषयाः।

तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते।

वासरस्य तृतीयेंऽशे—

इत्यादिवचनैर्द्वेधात्रेधाविभागान्तर्गतापराह्णस्य रात्रिपर्यन्तस्य तत्र विहितत्वात्। चतुर्थप्रहरसायाह्नदिवसाष्टमभागान्त्यमुहूर्त्तानां च तारतम्येन वर्ज्यत्वं द्रष्टव्यम्। रात्रिपर्युदासस्य तु ग्रहणपुत्रजन्मादिनिमित्तश्राद्धविषयत्वम्। तथा—

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु।

स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च॥

इत्यादिदेवलादिवाक्ये रात्रौ प्राप्तत्वात्। दर्शप्रकरणगतस्यापि च निषेधस्य प्रकरणे निवेशासम्भवादुत्कर्ष इति केचित्। अन्ये तु विधिपर्युदासयोरेकग्रहणादिविषयत्वेन तुल्यबलत्वाद्विकल्पापत्तेस्तीर्थश्राद्धविषयत्वं रात्रिपर्युदासस्य। तद्धि प्रकृतिप्राप्तस्यापराह्णस्य औपदेशिकेन निमित्तानन्तर्येण बाधाद्रात्रावपि सामान्यतः प्राप्नोति न तु ग्रहणादिवत्तत्पुरस्कारेण विधिरस्तीति तत्र विकल्पप्रसक्त्यभावात्स एव रात्रिपर्युदासस्य विषयः। यत्तु—

अकालेऽप्यथवा काले तीर्थश्राद्धं च तर्पणम्।

इत्यादिवचनं तदपि वाशब्दोपनिबन्धाद्वचनान्तरपर्युदस्तरात्रेरन्यत्र प्राप्तप्रातस्सायाह्नादिगौणकालस्यापि मुख्यत्वद्योतनार्थं न पुना रात्रावपि तत्कर्त्तव्यतापरमित्याहुः। अपरे तु प्रकरणाबाधे सम्भवति तद्बाधस्यायोगात्प्रकृतावेव दैवान्मानुषाद्वा प्रतिबन्धादसमाप्ते श्राद्धे यदि रविरस्तमियात्तदा प्रारब्धत्वाद्रात्रावपि तत्समापने प्रसक्ते न नक्तं श्राद्धं कुर्वीतेति पर्युदासः। तथा च सामिकृतमेव स्थापयित्वा परेद्युः कृत्वा

तत्समापनीयं यजमानेनापि च तदुत्तरमेव भोक्तव्यम्। अत एव "प्रारब्धे वा योजनमासमापनात्" इत्यापस्तम्बसूत्रम् अध्येतृभाष्यानुगतमित्याहुः। वस्तुतस्तु अपराह्णादिविधयो न नियमार्थाः किन्तु प्राशस्त्यातिशयार्थाः।

दर्शश्राद्धं तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्।
अपराह्णे पितॄणां तु तत्र दानं प्रशस्यते॥

इत्यादि शातातपादिवचनेभ्यस्तथैवावगमात्। अतश्च तेषामनियतत्वात्तत्र सर्ववेलानां प्रसक्तौ युक्तो रात्रिपर्युदासः। तेन रात्रिसन्ध्याद्वयतदन्तिकप्रातःसायाह्नव्यतिरिक्ततदन्तरालवर्त्तिमुहूर्त्तनवकमपि अनैमित्तिकश्राद्धानां काल इति सिद्धम्। तन्मध्येऽपि कुतपादिमुहूर्त्तपञ्चकं पार्वणेऽतिप्रशस्तम्।

ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्त्तचतुष्टयम्।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते॥

इति शातातपवचनात्। एकोद्दिष्टे च मध्याह्नः शस्तः। स चात्र गान्धर्वं हित्वा कुतपरौहिणात्मकमुहूर्त्तद्वयमेव।

प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत्॥

इति गौतमवचनात्। सायाह्नस्य च निषिद्धस्यापि—

स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं तयाऽवधिः।

इति व्यासवचनेन पुनर्विधानात् गौणत्वम्। तत्रापि आद्यद्वितीयतृतीयमुहूर्त्तानां गौणगौणतरगौणतमता। दिनाष्टमभागान्त्यमुहूर्त्तयोः पुनर्निषेधात् न तु सर्वथा विहितत्वमेव रात्रिप्रातःकालवत्। तयोः सायाह्नवत् पार्वणैकोद्दिष्टविषये पुनर्विधानाभावात्। न चाद्यमुहूर्त्तस्य पुनर्निषेधात्तच्छेषभागस्य गौणतयाऽभ्यनुज्ञा गम्यत इति वाच्यम्। तस्य सामर्थ्याद्वृद्धिश्राद्धस्योक्तत्वात्। सङ्गवस्तु न निषिद्धो नापि प्रशस्तः। भवतु वा एकोद्दिष्टवृद्ध्यादिषु मध्याह्नप्रातरादिश्रुतिर्नियमार्था अपराह्णश्रुतिस्तु पार्वणे पूर्वोदाहृतवाक्यैः प्राशस्त्यातिशयार्थैव। अतश्च युक्तो रात्र्यादिपर्युदासः। अत्र च पार्वणस्यापराह्णकालत्वेऽपि प्रारम्भः कुतप एव।

अह्नो मुहूर्त्ता विज्ञेया दश पञ्च च सर्वदा।
तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः॥
मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते॥

इति मत्स्यपुराणात् । न चेदं वचनमेकोद्दिष्टविषयम् । तद्विषयत्वे प्रारम्भग्रहणस्य वैयर्थ्यापत्तेः । एतस्यापि च विकृतिभूते पार्वणे व्यवस्था स्मर्यते मार्कण्डेयेन—

शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणं तु न लङ्घयेत् ॥ इति ।

शूलपाण्यादिभिस्तु वायुपुराणत्वेनेदं वचनं लिखितम् । इदं हि वचनं शुक्लपक्षसम्बन्धिनां युगमन्वादिसांवत्सरिकादीनां सर्वेषां सर्वस्य प्रयोगस्य पूर्वाह्णकालत्वं कृष्णपक्षसम्बन्धिनां चापराह्णकालत्वं न विदधाति । एकत्रापराह्णादेर्बाधप्रसङ्गात् अपरत्र च प्राप्तत्वात् । नच कृष्णपक्षांशेऽनुवादः शुक्लपक्षांश एव तु प्रकृतिप्राप्तापराह्णबाधेनैव पूर्वाह्णविधिरिति वाच्यम् । अबाधेनोपपत्तौ तस्याप्यन्याय्यत्वात् । तेन द्वेधाविभक्तपूर्वाह्णान्तर्गतस्य कुतपपूर्वभागस्य तादृशापराह्णान्तर्गतस्य च तदुत्तरभागस्य पक्षभेदेनोपक्रमकालत्वव्यवस्थापनमेवानेन वाक्येन क्रियत इति सिद्धम । एतेनैवैतद्वचनसिद्धमेवार्थं युगादिषु प्रतिपादयत्—

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पौर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥

इति स्मृत्यन्तरवचनं व्याख्यातम् । अन्ये तु यथाश्रुतान्येव वचनान्येतानि व्याचक्षते । तदेवं पार्वणैकोद्दिष्टवेला । देवश्राद्धादौ तु "पूर्वाह्णे दैविकं श्राद्धं" इत्यादिवचनात्पूर्वाह्णो ग्राह्यः । दैवश्राद्धं च—

देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमुच्यते ।

इत्यादिना विश्वामित्रोक्तम् । पूर्वाह्णशब्देनात्र सङ्गवो गृह्यते । प्रातःकालनिषेधस्यात्रापि प्रवृत्तौ बाधकाभावात् । एवमामश्राद्धं तु पूर्वाह्णे इत्यत्रापि स एव ।

कालात्प्रातस्तनादूर्ध्वं त्रिमुहूर्त्ता तु या तिथिः ।
आमश्राद्धं तत्र कुर्याद्विमुहूर्त्तापि वा तिथिः ॥

इति व्याघ्रपादवचनात् । अयं चामश्राद्धे पूर्वाह्णविधिर्द्विजातिकर्त्तृकामश्राद्ध एव न तु शूद्रकर्त्तृकामश्राद्धेऽपि । द्विजातिकर्त्तृकेऽह्नि प्रयोगे आमस्यानियतत्वाच्छूद्रकर्त्तृकप्रयोगे च नियतत्वादुभयत्र पूर्वाह्णविधौ नित्यानित्यसंयोगविरोधापत्तेः । एवञ्च—

मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः ।
आममात्रेण तत्रापि पितॄणां दत्तमक्षयम् ॥

इति शातातपवचनस्यापि सविषयकत्वं भवेदिति हेमाद्रिः । तन्न । नि-

त्यसंयोगविरोधो हि फलचमसाधिकरणन्यायेन ( अ० ३ पा० ५ अधि० १८ ) वा स्यात् संस्थाधिकरणन्यायेन वा । ( अ० ८ पा० ३ अधि० ४ ) नाद्यः, पूर्वाह्णादिकालस्याभिषवादिवदामादिद्रव्यधर्मत्वाभावात् । न द्वितीयः, आमश्राद्धस्यान्नश्राद्धापेक्षया भिन्नत्वात् । वचनं तु यदि साकरं तदा सर्वत्रामश्राद्धे पूर्वाह्णत्रिकल्पितं कालान्तरं विधत्तां न तु शूद्रामश्राद्धे कश्चिद्विशेषः । तेन शूद्रेणापि पूर्वाह्ण एवामश्राद्धं कार्य्यम् । एवं "प्रातर्वृद्धिनिमित्तकं" इति वचनात्पुत्रजन्मातिरिक्तनान्दीश्राद्धस्य प्रातः कर्त्तव्यता । पुत्रजन्मनि तु निमित्तस्वाभाव्यात्तदनन्तरकालस्यैव मुख्यत्वम् । अत्र च प्रातःकालः पञ्चधाविभागेन पक्षान्तरेषु प्रातर्विभागाभावात् । यस्तु त्रेधाचतुर्धावमकादिनाद्यभागयोरपि क्वचित्प्रातःशब्दप्रयोगः स गौण इत्युक्तं पर्वनिर्णये ।

इति श्राद्धवेला ।

अथ पिण्डदाननिषिद्धकालाः ।

तत्र पुलस्त्यः—

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्वासु पिण्डनिर्वपणादृते ॥

मत्स्यपुराणे—

सङ्क्रान्तिषु च कर्त्तव्यं पिण्डनिर्वापणादृते ।

अत्र सङ्क्रान्तिग्रहणेनैवायनादिलाभे पुनस्तद्ग्रहणं दोषातिशयार्थमिति हेमाद्रिः । अन्ये तु भ्रान्तिप्राप्तनिषेधमाहुः । वस्तुतस्तु ऋषिभेदान्निषेधोपपत्तिः । यत्तु वाचस्पतिनोक्तम्—

ततः प्रभृति सङ्क्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥

इतिमत्स्यपुराणवचनात्सङ्क्रान्त्यादावपि त्रिपिण्डं श्राद्धं कार्यम् । न चोक्तवचने निषेधानुपपत्तिः तस्य समूलत्वे विकल्पेनोपपत्तेरिति, तन्न । त्रिपिण्डपदस्य पार्वणपरत्वात् । अन्यथा पिण्डानुवादेन त्रित्वविधाने प्रसरभङ्गापत्तेः । नच त्रिपिण्डपदेन पिण्डमात्रविधानं त्रित्वं तु अवयुत्यानुवाद इति वाच्यम् । भवन्मते निषेधवाक्यस्य निर्मूलत्वेन पिण्डदानरूपप्राकृताङ्गस्य पुनर्विधाने पूर्वत्वापत्तेः । पिण्डदानस्य प्राधान्यपक्षे तु तस्य श्राद्धपदेनैव सिद्धेः पुनर्विधाने ब्राह्मणभोजनरूपप्रधानान्तरपरिसङ्ख्यापत्तेः । न च निषेधस्य समूलत्वाङ्गीकारेणैव पाक्षिकत्वोपपादनार्थं पिण्डदानविधिरिति वाच्यम् । त्रिपिण्डपदस्य प्रकृतिप्राप्तपार्व-

णानुवादकत्वेनैकोद्दिष्टविधिशेषत्वापत्तौ वाक्यभेदविकल्पयोरन्याय्य-त्वात्। ब्रह्मपुराणे मत्स्यपुराणीयश्लोकं पठित्वा—

यदा च श्रोत्रियोऽभ्यति गृहं वेदविदग्निचित्। इति।

मघायुक्तां भाद्रपदापरपक्षत्रयोदशीम्।

प्रकृत्य देवीपुराणम्—

तत्रापि महती पूजा कर्त्तव्या पितृदैवते।

तत्र पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत्॥

पूजा=श्राद्धलक्षणा। पितृदैवतं=मघा।

बृहत्पराशरः—

भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि।

अयं च भरणीप्रयुक्तश्राद्धे पिण्डदाननिषेधः। तस्या अपि महाल-यान्तर्गतायाः श्राद्धकालत्वस्य—

भरणी पितृपक्षे तु महती परिकीर्तिता।

अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत्॥

इति मत्स्यपुराणे उक्तत्वात्।

तथा स्मृत्यन्तरे—

गण्डवैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः।

अत्रापि तत्तत्प्रयुक्तश्राद्ध एव निषेधः। यानि तु—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च।

पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥

तथा—

नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे।

इत्यादीनि प्रयोगपारिजातोदाहृतवाक्यानि तानि महालयापरपक्षविहि-तसकृदादिपक्षेषु। यानि—

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मसु।

रेवत्यां च मघायां च कुर्यान्नापरपाक्षिकम्॥

इत्यादीनि श्राद्धनिषेधकानि वचनानि तदेकवाक्यतया श्राद्धनिषे-धकानि व्याख्येयानीति केचित्। वस्तुतस्तु हेमाद्रौ तिथौ वारे च श्राद्ध-स्य विहितत्वात्तत्प्रयुक्तश्राद्ध एव पिण्डदाननिषेधः। अत एव पठन्ति।

तिथिवारप्रयुक्तो यो दोषो वै समुदाहृतः।

स श्राद्धे तन्निमित्ते स्यान्नान्यश्राद्धे कदाचन॥ इति।

स्मृतिरत्नावल्याम्—

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्य्ययोः।

श्राद्धं कुर्य्यात्प्रयत्नेन पिण्डनिर्वपणादृते॥

एवञ्च—

मकरे वर्त्तमाने तु ग्रहणे चन्द्रसूर्ययोः ।
दुर्लभं त्रिषु लोकेषु गङ्गायां पिण्डपातनम् ॥

इति हेमाद्रिधृतब्रह्मवैवर्त्तवचनं तद्गङ्गायां ग्रहणाविषयम् ।

कार्ष्णाजिनिः—

विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्य्यात्तिलतर्पणम् ॥
वृद्धिमात्रे तथाऽन्यत्र पिण्डदाननिराक्रिया ।
कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणाम् ॥

इदं च सपिण्डानामपि । तथा च—

ज्योतिःपराशरः—

विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापे मौञ्जीबन्धे षडेव हि ॥

अस्यापवादस्तत्रैव—

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ।

ननु उक्तेषु वाक्येषु न पिण्डदाननिषेधसम्भवः । किमयं प्रतिषेधो वा स्यात्पर्युदासो वा । नाद्यः । शास्त्रप्राप्तस्य पिण्डदानस्य निषेधे "न तौ पशौ करोति" इति विकल्पापत्तेः । न द्वितीयः । तत्तच्छ्राद्धविध्येकवाक्यत्वाभावात् । अत्र हि अनेकानि श्राद्धानि एकस्मिन् वाक्ये उपादाय पिण्डदाननिषेधः श्रूयमाणो न तत्तच्छ्राद्धप्रकरणे पठित इति वक्तुं शक्यते । अतश्च यथैव "न तौ पशौ करोति" इत्यत्राङ्गविधेरसन्निधानात्पर्युदासासम्भवस्तथैवात्र स्मृत्यन्तरविहिततत्तच्छ्राद्धविधीनामसन्निधानान्न पर्युदाससम्भवः । अतः कथमुक्तश्राद्धेषु पिण्डदाननिवृत्तिरिति चेत्, न ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।

इत्यादिवाक्येषु स्मृत्यन्तरविहितश्राद्धानुवादेन न पिण्डदानं पर्युदस्यते येनोक्तदोषावकाशः स्यात् किन्तु अपूर्वकर्मोत्पत्तिः क्रियते । स्मृत्यन्तरत्वाच्च न विहितस्य विधानं दोषाय । तेन पिण्डनिर्वपणरहित

इत्यस्य स्ववाक्यविहिततत्तच्छ्राद्धविध्येकवाक्यत्वसम्भवात्पर्युदासत्वोपपत्तेर्युक्तैव पिण्डदाननिवृत्तिः।

इति पिण्डदाननिषेधकालः।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजित
चरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-
श्रीमहाराजमधुकरसाहसूनु-
चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकाविकासदिनकर-
श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु
सकलविद्यापारावारपारीणधुरीणजगद्दारि-
द्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे
समयप्रकाशे श्राद्धकालनिर्णयः।

अथ प्रकीर्णककालाः।

तत्र वैशाखस्नानकालः—

मधुमासस्य शुक्लायामेकादश्यामुपोषितः।
पञ्चदश्यां च भो वीर! मेषसङ्क्रमणे तु वा॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया।
मधुसूदनमभ्यर्च्य कुर्यात्सङ्कल्पपूर्वकम्॥

इति पाद्मे। कार्त्तिकश्च—

प्रारभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः।

प्रातः स्नानं प्रकुर्वीत—

इति विष्णुरहस्ये।

पूर्ण आश्वयुजे मासि पौर्णमास्यां समाहितः।
मासं समग्रं परया भक्त्या स्नायीत कार्त्तिके॥

इत्यादित्यपुराणे। इदं चानुदिते।

कार्त्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः।
स्नास्यत्यनुदिते भानौ भानुजातस्य भीः कुतः॥

इति स्कान्दोक्तेः।

माघेऽपि विष्णुः,

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः।

ब्राह्मे—

एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ।
द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनम् ॥

विष्णुः—

दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् ।

इदं चाभ्युदिते रवौ । "किञ्चिदभ्युदिते रवौ" इति पाद्मोक्तेः ।

ब्राह्मे तु—

अरुणोदयमारभ्य प्रातःकालावधि प्रभो ! ।
माघस्नानवतां पुण्यं क्रमात्तत्र च धारणा ॥ इति ।

अथ प्रतिपत्प्रभृतिपुण्यातिथयः ।

तत्र प्रतिपत् पाद्मे—

चैत्रे मासि महाबाहो ! पुण्या प्रतिपदा पुरा ।
तस्यां यस्तपनं दृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ! ।

पुनस्तत्रैव—

एतास्तिस्रः पुरा प्रोक्तास्तिथयः कुरुनन्दन ! ।
कार्त्तिकाश्वयुजे मासि चैत्रे वापि तथा नृप ! ॥ इति ।
एता इति पूर्व्वोक्ताः प्रतिपदः ।

इति प्रतिपत् ।

अथ द्वितीया ।

स्कन्दपुराणे—

आश्विने मासि वै पुण्या द्वितीया शुक्लपक्षगा ।
दानं प्रदत्तमेतस्यामनन्तफलमुच्यते ॥

लिङ्गपुराणे—

वृश्चिके च द्वितीयायां शुक्लायां प्रतिपूजनम् । इति ।

इति द्वितीया ।

अथ तृतीया ।

चैत्रमासं प्रक्रम्य पद्मपुराणे—

तृतीयायां यजेद्देवीं शङ्करेण समन्विताम् ।
गन्धपुष्पधूपदीपैर्दमनेन सुमालिना ॥
वैशाखमासे यत्पुण्या तृतीया शुक्लपक्षजा ।
अनन्तफलदा ज्ञेया स्नानदानादिकर्मसु ॥

भविष्योत्तरे—

गुडापूपाश्च दातव्या मासि भाद्रपदे तथा ।
तृतीयायां पायसं च वामदेवस्य तृप्तये ।

माघे मासि तृतीयां गुडस्य लवणस्य च।
दानं श्रेयस्करं राजन्! स्त्रीणां च पुरुषस्य च॥

इति तृतीया।

अथ चतुर्थी।

भविष्यपुराणे—

शिवा शान्ता सुखा राजन्! चतुर्थी त्रिविधा मता।
मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता॥
मासि माघे तथा शुक्ला या चतुर्थी महीपते!।
ज्ञेया सा शान्तिदा नित्यं शान्तिं कुर्यात्सदैव तु॥
यदा शुक्लचतुर्थ्यां तु वारो भौमस्य वै भवेत्।
तदा सा सुखदा ज्ञेया सुखानामेति कीर्त्तिता॥

इति चतुर्थी।

अथ पञ्चमी।

भविष्यपुराणे—

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना।
श्रीर्विष्णुलोकान्मानुष्यं सम्प्राप्ता केशवाज्ञया॥
तस्मात्तां पूजयेत्तत्र यस्तां लक्ष्मीर्न मुञ्चति।

तथा—

पुण्या भाद्रपदे प्रोक्ता पञ्चमी नागपञ्चमी।

स्कन्दपुराणे—

शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी।
स्नानदानैर्बहुफला नागलोकप्रदायिनी॥

अथ षष्ठी।

भविष्यपुराणे—

येयं भाद्रपदे मासि षष्ठी तु भरतर्षभ!।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते॥

तथा—

येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ!।
योऽस्यां पश्यति गाङ्गेयं दक्षिणापथवासिनम्॥
ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशयः।

तथा—

या षष्ठी शुक्लपक्षस्य मार्गशीर्षे हरिप्रिया।
महाषष्ठी तु सा ख्याता—इति।

इति षष्ठी।

अथ सप्तमी ।

भविष्यपुराणे—

मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप ! ।
अपराजितेति विख्याता महापातकनाशिनी ॥
या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी ।
तदा सा कथिता वीर ! सर्वानन्दकरी शुभा ॥
स्नानदानादिकर्माणि यस्यामक्षयमश्नुते ।

तथा—

नन्दा मार्गशिरे शुक्ला सप्तम्यानन्ददायिनी ।
जयन्तीनाम सा प्रोक्ता महापापापहा तिथिः ॥

विष्णुः—

सूर्य्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।

इति सप्तमी ।

अष्टम्यश्च जयन्त्यष्टकादुर्गाष्टमीरूपास्तत्र तत्रोक्ताः ।

इत्यष्टमी ।

अथ नवमी ।

देवीपुराणे—

आश्विनस्य तु मासस्य नवमी शुक्लपक्षगा ॥
जायते कोटिगुणितं दानं तस्यां नराधिप ! ।
शुक्लपक्षे नवम्यां तु कार्तिकस्य समाहितः ।
स्नायाद्द्याममस्कुर्यादक्षयं लभते फलम् ॥

इति नवमी ।

अथ दशमी ।

ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥

ब्रह्माण्डपुराणे—

कार्तिकस्य तु मासस्य दशमी शुक्लपक्षगा ।
तस्यां व्रतादि कुर्वाणो लभते वाञ्छितं फलम् ॥

एकादशी द्वादशी च ।

वाराहपुराणे—

एकादश्यामुपवसेत्पक्षयोरुभयोरपि ।
द्वादश्यां योऽर्चयेद्विष्णुमनन्तफलभाग्भवेत् ॥

अथ त्रयोदशी ।

स्कान्दे—

चैत्रे त्रयोदशी पुण्या तस्यां दशगुणं फलम् ।

अथ चतुर्दशी।

स्कान्दे—

चैत्रे चतुर्दशी शुक्ला श्रावणप्रोष्ठपादयोः।
माघस्य कृष्णपक्षे या दाने बहुफला हि सा॥

इति चतुर्दशी।

अथ पौर्णमासी।

विष्णुधर्मोत्तरे—

वैशाखी कार्त्तिकी माघी पौर्णमासी महाफला। इति।

अथ नक्षत्रवारादिवशात्पुण्यास्तिथय उच्यन्ते।

श्रवणेन समायुक्ता तृतीया या विशेषतः।
बुधश्रवणसंयुक्ता तृतीया यदि लभ्यते॥
तस्यां स्नानोपवासादि अनन्तफलदं भवेत्।
भविष्योत्तरे माघशुक्लतृतीयां प्रकृत्य—
श्रवणेन समायोगात् कुरुक्षेत्रसमा स्मृता॥
विशेषाद्बुधसंयुक्ता तृतीया तु विशेषतः।

यमः—

चतुर्थ्यां भरणीयोगे शनैश्चरदिनं यदि।
तदाभ्यर्च्य यमं देवं मुच्यते सर्वकिल्बिषैः॥

भविष्यपुराणे—

शुक्लपक्षस्य सप्तम्यां भानुवारो भवेद्यदि।
सप्तमी विजयानाम तत्र दत्तं महाफलम्॥

तथा—

शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम्।

पुण्यमिति वक्ष्यमाणेन सम्बन्धः। रोहिण्याश्लेषाहस्तपुष्यमघाः पञ्चतारकात्वेन ज्योतिःशास्त्रे प्रसिद्धाः।

शुक्लपक्षे तु सप्तम्यां यदा सङ्क्रमते रविः।
महाजया तदा स्याद्धि सप्तमी भास्करप्रिया॥
स्नानं दानं जपो होमः पितृदेवादिपूजनम्।
सर्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा॥

आदित्यपुराणे—

रेवती रविसंयुक्ता सप्तमी स्यान्महाफला।

महाभारते—

शशिपुत्रसमायुक्ता परिपूर्णा सिताष्टमी।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः॥

शशिपुत्रः=सौम्यः।

भविष्यपुराणे—

पौषे बुधाष्टमी शुक्ला महाभद्रा महाफला । इति ।

ब्रह्माण्डपुराणे—

पौषे मासि यदा देवि ! अष्टम्यां यमदैवतम् ।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते ॥
तदा सा तु महापुण्या जयन्ती चाष्टमी स्मृता । इति ।

यमदैवतं=भरणी । तस्य क्रूरदेवताकत्वाद्रौद्रत्वम् ।

भविष्ये —

ज्येष्ठशुक्लदशम्यां च भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥

देवीपुराणे—

पुष्यर्क्षैकादशी शुक्ला सुपुण्या पापनाशिनी ।

विष्णुधर्मोत्तरे—

एकादश्यां शुक्लपक्षे यदर्क्षं वै पुनर्वसुः ।
नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथिः ॥
यो ददाति तिलप्रस्थं प्राप्य कालं तु वत्सरम् ।
उपवासपरस्तस्य प्रकरोति समं फलम् ॥
तस्यामाराध्य गोविन्दं जगतामीश्वरेश्वरम् ॥
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ।

विष्णुधर्मोत्तरे—

चैत्रे भाग्यर्क्षसंयुक्ता द्वादशी स्यान्महाफला ।
हस्तयुक्ता तु वैशाखे ज्येष्ठे तु स्वातिसंयुता ।
ज्येष्ठया तु तथाषाढे मूलोपेता तु वैष्णवे ॥

वैष्णवः=श्रावणः ।

तथा भाद्रपदे मासि श्रवणेन च संयुता ।
आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता ॥
कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया युता ।

सौम्यो=मार्गशीर्षः ।

पौषे मृगशिरोयुक्ता माघे चादित्यसंयुता ।
फाल्गुने पुष्यसहिता द्वादशी पावनी परा ॥
नक्षत्रयुक्तास्वेतासु स्नानदानमुपोषणम् । इति ।
माघ्यां तु समतीतायां श्रवणेन तु संयुता ।
द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलवैष्णवी ॥

तथा,

मूलर्क्षगे शशधरे माघमासि प्रजायते ।
एकादशी कृष्णपक्षे सोपवासो जितेन्द्रियः ॥

द्वादश्यां षट्तिलाहारं कृत्वा पापैः प्रमुच्यते ।

वराहपुराणे—

चैत्रकृष्णचतुर्द्दश्यामङ्गारकदिनं यदि ।
पिशाचत्वं पुनर्न स्यात् गङ्गायां स्नानभोजनात् ॥

लिङ्गपुराणे-

कार्त्तिके भौमवारेण चित्रा कृष्णा चतुर्द्दशी ।
तस्यामाराधितः स्थाणुर्यच्छेत् शिवपुरं ध्रुवम् ॥

देवीपुराणे—

तथा कृष्णचतुर्द्दश्यां भौमाहे पितृतर्पणम् ।

विष्णुधर्मोत्तरे,

पौर्णमासीषु सर्वासु मघर्क्षसहितासु च ।
दत्तानामिह दानानां फलं दशगुणं स्मृतम् ।
महती पूर्णमासी सा युक्ता पूर्णेन्दुना गुरौ ॥

ज्योतिःशास्त्रे—

दृश्येते सहितौ यस्यां दिशि चन्द्रबृहस्पती ।
पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा ।
तस्यां दानोपवासाद्यमक्षयं परिकीर्त्तितम् ॥

तथा,

मासाख्यर्क्षे चन्द्रगुरू तस्मात्पञ्चदशो रविः ।
पूर्णिमा जीववारे तु महच्छब्दा हि सा तिथिः ॥ इति ।
हरिक्षेत्रे च गङ्गायां सामुद्रे नैमिषे तथा ।
महाशब्दतिथौ स्नानं दानं श्राद्धमनन्तकम् ॥ इति ।
ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा ।
पूर्णमासी तु सा ज्ञेया महाज्यैष्ठीति कीर्त्तिता ॥

वायुपुराणे —

आग्नेयं च यदा ऋक्षं कार्तिक्यां तु भवेत्क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानादिषूत्तमा ॥
यदा याम्यं भवेदृक्षं पुण्यं तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता ॥
प्राजापत्यं यदा ऋक्षं यदा तस्यां नराधिप ! ।
सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥
मन्दे वार्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
त्रीण्येतानि च ऋक्षाणि प्रोक्तानि ब्रह्मणा स्वयम् ॥
तत्राश्वमेधिकं पुण्यं स्नातस्य च भवेन्नृप ! ।
दानमक्षयतां याति पितृणां तर्पणं तथा ॥

ब्रह्मपुराणे-

पुण्या महाकार्त्तिकी स्याज्जीवेन्दौ कृत्तिकासु च।
मघास्वात्योश्च जीवेन्दौ महामाघीति कथ्यते॥

ज्योतिः शास्त्रे-

मेषस्थश्च यदा सौरिः सिंहे च गुरुचन्द्रमाः।
भास्करः श्रवणाख्ये तु महामाघी तु सा स्मृता॥

शातातपः-

अमावास्यां भवेद्वारो यदा भूमिसुतस्य वै।
जाह्नवीस्नानमात्रेण गोसहस्रफलं लभेत्॥

महाभारते,

अमा सोमेन भौमेन गुरुणा रविणा तथा।
तत्तीर्थं पुष्करं नाम सूर्यग्रहशताधिकम्॥

विष्णुपुराणे,

अमावास्या यदा मैत्रविशाखाऋक्षयोगिनी।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम्॥
क्वचित्तु विशाखास्वातियोगिनीति पाठः।
अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ।
द्वादशाब्दीं तथा तृप्तिं प्रयान्ति पितरोऽर्चिताः॥
वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छता।
वारुणे चाप्यदैवत्ये देवानामपि दुर्लभा॥

माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन।
ऋक्षेण कालः स परः पितॄणां न ह्यल्पपुण्यैर्नृप! लभ्यतेऽसौ॥

व्यासः-

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी।
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा॥
शनिवारेण संयुक्ता सा महावारुणी स्मृता।
शुभयोगसमायुक्ता शनौ शतभिषा यदि।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत्॥

अर्धोदय उक्तो महाभारते-

अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः॥
क्वचित्तु किञ्चिदूनो महोदय इति पाठः।
दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन। इति।

कपिलषष्ठी वाराहपुराणे-

नभस्ये कृष्णपक्षे या रोहिणीपातभूसुतैः।

युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्त्तिता ॥
व्रतोपवासनियमैर्भास्करं तत्र पूजयेत् ।
कपिलां च द्विजाग्र्याय दत्वा क्रतुफलं लभेत् ॥

पुराणसमुच्चये तु—

भाद्रमास्यसिते पक्षे भानौ चैव करे स्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिलाभिधा ॥ इति ।

अत्र च भाद्रपदो दर्शान्तमासाभिप्रायेण । तत्रैव कृष्णपक्षे षष्ठ्यां रोहिणी सम्भवति । अयं च यदा सम्पूर्णः तदैव पुण्यः । तदुक्तम्—

संयोगे तु चतुर्णां तु निर्द्दिष्टा परमेष्ठिना ।
हस्तस्थसूर्यश्च फलातिशयार्थः ।

शङ्खः—

अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण बुधवारेण चाष्टमी ॥
चतस्रस्तिथयः पुण्यास्तुल्याः स्युर्ग्रहणादिभिः ।
सर्वमक्षयमत्रोक्तं स्नानदानजपादिकम् ॥

शातातपः—

अङ्गारकदिने प्राप्ते चतुर्थी वा चतुर्द्दशी ।
भौमवारेण पुण्यासौ सोमवारे कुहूर्यथा ॥

मार्कण्डेयः—

एकादश्यां सिते पक्षे पुष्यर्क्षं यदि जायते ।
द्वादश्यां वा तदाशेषपापक्षयकरं स्मृतम् ॥

व्यासः—

शुक्ले वा यदि वा कृष्णे चतुर्थी वा चतुर्द्दशी ।
भौमवारेण पुण्यासौ सोमवारे कुहूर्यथा ॥ इति ।

इति नक्षत्रवारादियोगप्रयुक्तपुण्यातिथयः ।

अथ रात्रिकरणीयवर्ज्यानि ।

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु ॥

इति रात्रिकरणीयवर्ज्यानि ।

अथ चतुष्पथसेवावर्जनकालः ।

मध्यं दिनेऽर्धरात्रे च श्राद्धं भुक्त्वा तु सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥ इति ।

इति चतुष्पथवर्जनकालः ।

अथ तिथिविशेषवर्ज्यानि ।

तत्र सिंहार्के शुक्लचतुर्थ्यां चन्द्रदर्शनं न कार्य्यम् ।

मार्कण्डेयः—

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥ इति ।

षष्ठीवर्ज्यानि ।

षष्ठ्यां तैलं वर्जयेदभ्यङ्गे । तथाच रत्नमालायाम्—

षष्ठीषु तैलं पलमष्टमीषु क्षौरक्रियां चैव चतुर्द्दशीषु ।
स्त्रीसेवनं नष्टकलासु पुंसामायुःक्षयार्थं मुनयो वदन्ति ॥ इति ।

अथ सप्तमीवर्ज्यानि ।

तत्र भविष्यपुराणे—

सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् ।
न चाप्यामलकैः स्नानं न कुर्यात्कलहं नरः ॥
सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनम् ॥

बुधः—

निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनम् ।
सप्तम्यां नैव भुञ्जीत ताम्रपात्रेण भोजनम् ॥ इति ।

अथाष्टमीवर्ज्यानि ।

तत्र व्यासः—

षष्ठ्यष्टमी त्वमावास्या पक्षद्वयचतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
एषां केचिदासु तिथिषु क्रमेण निषेधमिच्छन्ति ।
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा ।
कामभोगश्चतुर्द्दश्याममायां तु क्षुरक्रिया ॥
इति स्मरणात् ततोऽन्यत्र दोषाभाव इति, तन्न ।
मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्द्दशी ।

इति मनुनान्यत्रापि तैलादिनिषेधात् । तैलनिषेधे च सर्वत्र तिलतैलस्यैव निषेधः तैलपदस्य तत्रैव शक्तेः । सामान्यतोऽभ्यङ्गनिषेधे तु स्नेहनिषेध एवेति । अत्राष्टम्याः पर्वरूपत्वात्तत्प्रयुक्ताः सर्वे निषेधास्तत्र प्रवर्त्तन्ते । पर्वरूपत्वं चोक्तं—

विष्णुपुराणे,

चतुर्द्दशी अष्टमी च अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र ! रविसङ्क्रान्तिरेव च ॥

इत्येतानि अभिधाय—

तत्रैव,

तैलस्त्रीमांसभोगी यः पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नरः॥ इति।

पर्वपुरस्कारेण निषेधो बौधायने,

पर्वसु नाधियीत न मांसमश्नीयात् पर्वसु हि रक्षःपिशाचव्यभिचारिवन्तिमितिनीति।

मनुः—

चतुर्दश्यष्टमी दर्शः पौर्णमास्यर्कसङ्क्रमः।
एषु स्त्रीतैलमांसानि दन्तकाष्ठानि वर्जयेत्॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः।
तैलं मांसं व्यवायं च क्षुरं चैव विवर्जयेत्॥

हारीतः—

श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया।
भगे मांसे क्षुरे तैले नित्यं तिष्ठति पर्वसु॥

मत्स्यपुराणे—

छिनत्ति वीरुधो यस्तु वीरुत्संस्थे निशाकरे।
पत्रं वा पातयेत्तेषां ब्रह्महत्यां स विन्दति॥

वीरुत्संस्थे=वनस्पतिगते। वनस्पतिगतत्वं च त्रिमुहूर्त्तचतुर्थस्थत्वम्।

त्रिमुहूर्त्तं वसेदर्के त्रिमुहूर्त्तं वसेज्जले।
त्रिमुहूर्त्तं वसेद्गोषु त्रिमुहूर्त्तं वनस्पतौ॥ इतिस्मृतेः।

पैठीनसिः—

सायंसन्ध्यां परान्नं च तिलपिष्टं तथैवच।
अमावास्यां न सेवेत रात्रौ मैथुनभोजने॥

अमावास्यां प्राप्येत्यर्थः। वस्तुतस्तु अमावास्यामिति सप्तम्यन्तम्।

वस्या वास्या वसी वासी अमापूर्वा अमेति च।
इत्येवं नवधा प्रोक्ता कृष्णपञ्चदशी तिथिः॥

इति कोशात्।

तथा—

नामायां हरितान् छिन्द्यात्कुशांश्च समिधस्तथा।

अयं च निषेधो देवपित्र्यकर्मार्थव्यतिरेकेण। तथाच कात्यायनेन अमायां दर्भच्छेदनिषेधमभिधायोक्तम्—

पितृदेवजपार्थं वा समादद्यादिति।

तथा कात्यायनस्मृतावपि—

मासे नभस्यमावास्यां दर्भो ग्राह्यो नवः स्मृतः।
अयातयामास्ते दर्भा नियोक्तव्याः पुनःपुनः॥ इति।
कुशाः शाकं च पुष्पाणि गवार्थे च तृणादिकम्।
आहरेद्देवपित्र्यर्थममावास्याहनि द्विजः॥
इति दीपिकाधृतवचनाच्च।

स्मृतिसमुच्चये—

सायंसन्ध्यां परान्नं च पुनर्भोजनमैथुने।
तैलं मांसं शिलापिष्टममावास्यां विवर्जयेत्॥

मार्कण्डेयः—

अमावास्यासु सर्वासु नवं वस्त्रं न धारयेत्।

इति पर्ववर्ज्यानि।

अथ कालविशेषवर्ज्याः।

स्कन्दपुराणे—

शिरःकपालमान्त्राणि नखचर्मतिलास्तथा।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत्॥

शिरो=नारिकेलम्। कपालमलाबू। आन्त्रं=पटोलं दीर्घम्। नखं=निष्पावाः, चर्म=मसूर्यः। तिलाः=वृन्ताकमिति। बृहतिप्रसिद्धेरिति हेमाद्रिः।

षट्त्रिंशन्मते—

सङ्क्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे।
वस्त्रं च पीडयेन्नैव क्षुरेणापि न हिंस्यते॥
हेमाद्रौ तु चतुर्थचरणे करेणापि हि बुध्यते इति पाठः।

व्यासः—

तैलं न संस्पृशेदामं वृक्षादीन् छेदयेन्न च।
पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ॥

अत्रामनिषेधोऽधिकनिषेधार्थः सामान्येन तैलस्य निषेधात्।

बृहस्पतिः—

अमावास्येन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु च।
नरश्चाण्डालयोनौ स्यात्तैलस्त्रीमांससेवनात्॥

पुराणे तु पूर्वार्धे—

कुहूपूर्णेन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु च। इति।

उत्तरार्द्धं तदेव।

वामनपुराणे—

नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम्।
पूर्णासु योषित् परिवर्जनीया भद्रासु सर्वाणि समारभेत॥

नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरं च शुक्रे च कुजे च मांसम् ।
बुधेन योषा न समाचरेत शेषेषु सर्वाणि सदैव कुर्यात् ॥
चित्रासु हस्ते श्रवणेषु तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं योषिन्मघाकृत्तिकयोत्तरासु ॥

यमः—

तथासिताष्टमीषु भूताहेन्दुक्षये तथा ।
तैलाभ्यङ्गं क्षौरकर्म्म स्त्रीसङ्गं च विवर्जयेत् ॥

वाराहपुराणे—

न मृच्च नोदकं वापि न निशायां तु गोमयम् ।
गोमूत्रं च प्रदोषे च गृह्णीयाद्बुद्धिमान्नरः ॥

अयं च निषेधः शौचाद्यतिरिक्तकर्मसु तत्र मृद्ग्रहणस्य विहितत्वात् ।

माण्डव्यः—

श्रुतिवेधजातकान्नप्राशनयात्राप्रतिमार्चाः ।
रविभवनस्थे कार्य्यं जीवे न कार्यो विवाहस्तु ॥

रविभवनं=सिंहराशिः । अयं च नर्मदोत्तरभागे, न दक्षिणे । तथा च—ज्योतिःशास्त्रे,

सिंहे गुरौ सिंहलवे विवाहो नेष्टश्च गोदोत्तरतश्च यावत् ।
भागीरथीयाम्यतरं च यावत्तावच्च दोषस्तपनेऽपि मेषे ॥

स्कान्दे—

स्नानं चैव महादानं स्वाध्यायं पितृतर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥

स्नानं काम्यं पुष्यस्नानादि ।

भविष्यपुराणे—

सुप्ते विष्णौ निवर्त्तन्ते क्रियाः सर्वाः शुभादिकाः ।
विवाहव्रतबन्धादिचूडासंस्कारदीक्षणम् ॥
यज्ञो गृहप्रवेशश्च प्रतिष्ठा देवभूभृताम् ।
पुण्यानि यानि कर्म्माणि न स्युः सुप्ते जगत्पतौ ॥ इति ।

मनुः—

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥

वृद्धमनुः—

आहारं मैथुनं निद्रां सन्ध्याकाले विवर्जयेत् ।
कर्म चाध्ययनं वापि तथा दानप्रतिग्रहौ ॥

आहाराज्जायते व्याधिर्गर्भो रौद्रश्च मैथुनात् ।
स्वपनात्स्यादलक्ष्मीकः कर्म चैवात्र निष्फलम् ॥
अध्येता नरकं याति दाता नाप्नोति तत्फलम् ।
प्रतिग्रहे भवेत्पापी तस्मात्सन्ध्यां विवर्जयेत् ॥

तथा हेमाद्रौ स्मृतिः—

रात्रौ दानं न कुर्वीत कदाचिदपि केन चित् ।
हरन्ति राक्षसा यस्मात्तस्माद्दातुर्भयावहम् ॥
विशेषतो निशीथे तु न शुभं कर्म शर्मणे ।
अतो विवर्जयेत्प्राज्ञो दानादिषु महानिशाम् ॥

अस्यापवादो देवलेनोक्तः—

राहुदर्शनसङ्क्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्य्यान्निशि काम्यव्रतेषु च ॥

वसिष्ठोऽपि—

ग्रहणोद्वाहसङ्क्रान्तियात्रार्त्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ॥

तथा—

यज्ञे विवाहे यात्रायां तथा पुस्तकवाचने ।
दानान्येतानि शस्तानि रात्रौ देवालये तथा ॥

तथा हेमाद्रौ—

अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
कोणवारे स्पृशेत् पूर्वमुत्तरं पर्वाणि स्पृशेत् ॥

कोणः=शनैश्चरः । तैलाभ्यङ्गे निषेध उक्तः सुमन्तुना—

तैलाभ्यङ्गो नार्कवारे न भौमे नो सङ्क्रान्तौ वैधृतौ विष्टिषष्ठ्योः ।
पर्वस्वष्टम्यां च नेष्टः स इष्टः प्रोक्तान्मुक्त्वा वासरे सूर्य्यसूनोः ॥

योगियाज्ञवल्क्यः—

मोहात्प्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः सह हीयते ॥
पञ्चम्यां च चतुर्दश्यां सप्तम्यां रविसङ्क्रमे ।
द्वादशीं सप्तमीं षष्ठीं तैलस्पर्शं विवर्जयेत् ॥
त्रयोदश्यां तृतीयायां प्रतिपन्नवमीद्वये ।
तैलाभ्यङ्गं न कुर्वीत कुर्युर्वा नवमीं विना ॥

यम—

पञ्चमी दशमी चैव तृतीया च त्रयोदशी ।
एकादशी द्वितीया च पक्षयोरुभयोरपि ॥

अभ्यञ्जनस्पर्शनाद्यैर्योऽत्र स्नेहं निषेवते ।
चतुर्णां तस्य वृद्धिः स्यात् धनापत्यबलायुषाम् ॥ इति ।

गर्गेण कासां चिद्ग्रहणं तत्पक्वतैलपरम् ।

सूर्यशुक्रादिवारेषु निषिद्धासु तिथिष्वपि ।
स्नाने वा यदि वाऽस्नाने पक्वतैलं न दुष्यति ॥

इति षट्त्रिंशन्मतादिति केचित् । अन्ये तु रागप्राप्ततैलविषयो निषेधः । एवं च सर्वतैलनिषेधप्राप्तौ पक्वं प्रतिप्रसूयते । विहिते च तैलाभ्यङ्गे आममप्युपादेयमेवेति सङ्क्षेपः ।

यमोऽपि—

घृतं च सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गेषु नित्यशः ॥

कात्यायनोऽपि—

माङ्गल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च ।
स्नेहमात्रसमायुक्तं मध्याह्नात्प्रविशिष्यते ॥ इति ।

मांसनिषेधकालो नन्दिपुराणे—

यदि नाम चतुर्दश्यां सदा मांसं विवर्जयेत् ।
वर्जयेदयने मुख्ये कृतस्वर्गमतिर्नरः ॥
चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
तथा पञ्चदशी वार्च्या षडशीतिमुखानि च ॥
सङ्क्रमे चापि सूर्य्यस्य विषुवे चापि वार्षिके ।
मांसात्तु विरतो मर्त्यो याति स्वर्गं दिनत्रयम् ॥
तथा चाश्वयुजं मासं वर्जयेन्मांसभक्षणे ।
बहुमासकृतं पुण्यं लभेताश्वयुजान्नरः ॥
मांसभोजनसन्त्यागात् पुरुषः शुद्धमानसः ।
यो नरः कार्त्तिके मासि मांसं तु परिवर्जयेत् ॥
संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ।

कालनिर्णयदीपिकायां तु यदि नाम चतुर्दश्यामिति स्थाने यदि नाम च शर्वर्यामिति पाठः ।

इति कालविशेषवर्ज्यानि ।

अथ पर्वानुष्ठेयानि ।

विष्णुः—पर्वसु अवश्यं तिलहोमान् कुर्यादलङ्कृतास्तिष्ठेत् एवमाचारसेवी स्यात् ।

मनुः—( अ० ४ श्लो० १५० )

सावित्रान् शान्तिहोमांश्च कुर्य्यात्पर्वसु नित्यशः ।

सावित्रान्=सवितृदेवताकान् । अत्र च द्रव्यमक्षताः ।

शान्तिकामस्तु जुहुयात् गायत्र्या चाक्षतैः शुचिः ।

इति स्मृतेः ।

कात्यायनः-

पौर्णमास्याममावास्यामधः स्वापो विधीयते ।

अनाहिताग्नेरप्येष पश्चादग्नेर्विधीयते ॥

अनाहिताग्निः=स्मार्त्ताग्निमान् ।

आपस्तम्बः—दिवा आदित्यः सत्त्वानि गोपायति । नक्तं चन्द्रमाः त-स्मादमावास्यायां सार्धीयसीमात्मनो गुप्तिमिच्छेत् । प्राजापत्येन ब्रह्मच-र्यकालेन च जायया सहैतां रात्रिं सूर्य्याचन्द्रमसौ वसत इति ।

प्राजापत्येन=स्त्र्युपसर्पणराहित्येन ।

तथा,

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।

अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः ॥

इति पर्वानुष्ठेयानि ।

अथ नानायुगधर्माः ।

तत्रौपकायनः—

श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते ।

नानाधर्म्माः प्रवर्त्तन्ते मानवानां युगे युगे ॥

श्रुत्यादिप्रमाणं शौचादिराचारश्च प्रतिकालं प्रतियुगं भिद्यते । अनेन श्लोकपूर्वार्धेन प्रतियुगमाचारशब्दवाच्याग्निहोत्रादिकर्मणां भेद उक्त-स्तद्भेदादेव च तत्प्रतिपादकश्रुत्यादिप्रमाणस्यापि भेद उक्तस्तत्र कर्म्म-भेदे हेतुमाहोत्तरार्धेन—नानाधर्म्मा इत्यादिना । धर्म्मा अरोगत्वादय-स्तदुक्तं—

मनुना, ( अ० १ श्लो० ८३।८४ )

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।

कृतत्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥

वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्म्मणाम् ।

फलन्त्यनुयुगं लोके प्रभावाश्च शरीरिणाम् ॥ इति ।

तथारण्यके पर्वणि हनूमद्दर्शने कृतादिधर्म्मानुदाहृत्योक्तम्—

पादेनैकेन कौन्तेय ! धर्मः कलियुगे स्थितः ।

तामसं युगमासाद्य कृष्णो भवति केशवः ॥

वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ।

ईतयो व्याधयस्तन्द्रीदोषाः क्रोधादयस्तथा ।
उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा ॥ इति ।

तदयमर्थः । युगस्वभावादहरहरपचीयमानज्ञानकर्मेन्द्रियशक्तीनां द्विजातीनां कतिपयाङ्गसहिताग्निहोत्रादिकर्म्मणां प्रमादालस्यादिभिस्त-त्तदङ्गहानात्तत्त्वेनाप्रत्यभिज्ञायमानानां भेदादिव तत्प्रतिपादकानां श्रुत्या-दीनामपि भेद इव भवति न पुनः श्रुत्यादीनां कर्म्मणां वा वास्तवो भेद इत्यभिप्रायः । अनयैव च दिशा एवञ्जातीयकानि वचनानि बोध्यानि ।

मनुरपि—( अ० १ श्लो० ८५ ८६ )

अन्ये कृतयुगे धर्मास्त्रेतायां ज्ञानमुच्यते ।
अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

तपः=कृच्छ्रचान्द्रायणादि । तदुक्तम्—

स्कन्दपुराणे,

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ।
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ॥ इति ।

परं=प्रधानम् । महाभारते—

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

तथा—

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमेवाहुः कलौ दानं दया दमः ॥

बृहस्पतिः—

तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्थितम् ।
द्वापरे चाध्वरः प्रोक्तास्तिष्ये दानं दया दमः ॥

तिष्यः=कलिः ।

शिवपुराणे—

ध्यानं परं कृतयुगे त्रेतायां लिङ्गपूजनम् ।
द्वापरेऽध्ययनं तिष्ये महादेवस्य कीर्त्तनम् ॥

तथा—

ध्यानं परं कृतयुगे त्रेतायां यजनं तथा ।
द्वापरे लिङ्गपूजा च कलौ शङ्करकीर्त्तनम् ॥

विष्णुधर्मोत्तरे—

ज्ञानं परं कृतयुगे त्रेतायां च ततः परम् ।

द्वापरे च तथा यज्ञः प्रतिष्ठा तु कलौ युगे ॥

कृतादिषु युगेषु प्राचुर्येण प्रवर्त्तमानानि प्रमाणान्याह—

पराशरः,

कृते तु मानवा धर्मास्त्रेतायां गौतमा मताः ।

द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

तपः परं कृतयुगे इत्याद्युक्तं तत्र हेतुमाह—

स एव,

कृते त्वस्थिगताः प्राणास्त्रेतायां मांसमाश्रिताः ।

द्वापरे रुधिरे चैव कलौ त्वन्नादिषु स्थिताः ॥

प्राणनादिवृत्तिपञ्चकोपेतो वायुविशेषः प्राणः, स चास्थिमांसादिमयेषु शरीरेषु कर्मसूत्रनिबद्धो युगसामर्थ्यादस्थ्यादिषु स्थितो भवति । साक्षात्प्रवृत्तिनिवृत्त्यनौपायिकानां युगस्वभावादिप्रतिपादकानां वचनानां प्रतिषेधे विशेषपर्यवसायितामाह—

स एव,

युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः ।

तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

तेषामित्युपलक्षणम । कामक्रोधलोभादीन् सर्वान् दोषान्कालकृतान् ज्ञात्वा कस्यापि निन्दां न कुर्यादित्यर्थः ।

नन्वेवम्—

जितो धर्मो ह्यधर्मेण सत्यं चैवानृतेन च ।

जिताश्चौरैश्च राजानः स्त्रीभिश्च पुरुषाः कलौ ॥

इत्यादिवचनबोधितयुगधर्मानुसारिणां प्राणिनामनिन्द्यत्वे,

धर्मं चर सत्यं वद,

नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।

स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥

इत्यादीनि विधिनिषेधविषयाणि श्रुतिस्मृतिशास्त्राण्यप्रमाणीकृतानि स्युरिति चेत् , न । युगानुरूपं स्वस्वसामर्थ्यमालोच्य मुख्यकल्पेनानुकल्पे न वा नित्यनैमित्तिकानि कर्माण्यनुतिष्ठतां प्रतिषिद्धानि च वर्जयतां प्रमादकृतपातकप्रायश्चित्तानि चाचरतामत्यन्ताशक्तानां वानिन्द्यत्वम् । तदन्येषां निन्द्यत्वमिति वस्तुस्थितिः । एवं सत्यपि वस्तुतो निन्द्यस्यापि स्वयं दोषान्नाविष्कुर्यादिति तेषां निन्दा न कर्त्तव्येत्यस्याभिप्राय इति।

बृहस्पतिः—

कृते यदब्दाद्धर्मः स्यात्तत्त्रेतायामृतुत्रयात् ।

द्वापरे तु त्रिपक्षेण कलावहानि तद्भवेत् ॥

ब्रह्माण्डपुराणे—

त्रेतायामाब्दिको धर्मो द्वापरे मासिकः स्मृतः।
यथाशक्ति चरन् प्राज्ञस्तदह्ना प्राप्नुयात्कलौ॥

विष्णुपुराणे—

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु।
द्वापरे तच्च मासेन ह्यहोरात्रेण तत्कलौ॥

स्कन्दपुराणे—

ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः।
द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः॥
कृते नारायणः सूक्ष्मः शुद्धमूर्त्तिरुपास्यते।
त्रेतायां यज्ञरूपेण पाञ्चरात्रेण द्वापरे॥

भागवते—

कृतं त्रेता द्वापरं च कलिरित्यत्र केशवः।
नानावर्णाभिधाकारो नानैव विधिनेज्यते॥
कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः।
कृष्णाजिनोपवीती च बिभ्रद्दण्डकमण्डलुः॥
मनुष्यास्तु तदा शान्ता निर्वैराः सुहृदः समाः
यजन्ते तपसा देवं शमेन च दमेन च॥
हंसःसुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः।
हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः॥
तं तदा मनुजा देवं सर्वदेवमयं हरिम्।
यजन्ति विद्यया त्रय्या धर्मिष्ठा ब्रह्मवादिनः॥
विष्णुर्यज्ञः पृश्निगर्भः सर्वदेव उरुक्रमः।
वृषाकपिर्जयन्तश्च उरुगाय इतीर्यते॥
द्वापरे भगवान् श्यामः पीतवासा निजायुधः।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः॥
तं तथा पुरुषं मर्त्या महाराजोपलक्षणम्।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप!॥
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च।
प्रद्युम्नायानिरुद्धाय तुभ्यं भगवते नमः॥
नारायणाय ऋषये पुरुषाय महात्मने।
विश्वेश्वराय विश्वाय सर्वभूतात्मने नमः॥

इति द्वापर उर्वीशं स्तुवन्ति जगदीश्वरम् ॥
नानातन्त्रविधानेन कलावपि यथा शृणु ।
कृष्णवर्णान्वितं कृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ॥
यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ।
एवं युगानुरूपेण भगवान्युगवर्त्तिभिः ॥
मनुजैरिज्यते राजन्! श्रेयसामीश्वरो हरिः ।

विष्णुधर्मोत्तरे—

पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥

वामदेवः—

कृते तु सर्वतीर्थानि त्रेतायां पुष्करं परम् ।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते ॥

इति नानायुगधर्माः ।

अथ नानायुगवर्ज्यानि ।

तत्र शातातपः—

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्त्तारं तु कलौ युगे ॥
कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च ।
द्वापरे चान्नमादाय कलौ पतति कर्म्मणा ॥

इति नानायुगवर्ज्यानि ।

अथ कलियुगधर्माः ।

महाभारते—

यस्त्वोंनमः शिवायेति मन्त्रेणानेन शङ्करम् ।
सकृत्कालं समभ्यर्चेत्सर्वपापैः प्रमुच्यते ॥
सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ।
यस्त्वोंनमः शिवायेति मुच्यते तु कलौ नरः ॥
शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये ।
संसारदोषसङ्घानामुच्छेदनकरः कलौ ॥

तथा—

सदा तं यजते यस्तु श्रद्धया मुनिपुङ्गव! ।
लिङ्गेऽथ स्थण्डिले वापि कृतके विधिपूर्वकम् ॥
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते ।

लिङ्गपुराणे—

कलौ रुद्रो महादेवः शङ्करो नीललोहितः ।

प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः ॥
ये तं विप्रास्तु सेवन्ते येन केनापि शङ्करम् ।
कलिदोषं विनिर्जित्य प्रयान्ति परमं पदम् ॥

व्यासः—

ध्यायन्कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

भागवते—

कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः ।
यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽपि लभ्यते ॥

सङ्कीर्तनेन=हरिसङ्कीर्त्तनेन ।

न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह ।
यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥

अग्निपुराणे—

नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने ! ।
युगेऽस्मिंस्तामसे घोरे यज्ञदेवविवर्जिते ॥
कुर्वीताराधनं राजन्वासुदेवे कलौ युगे ।
यदभ्यर्च्य हरिं भक्त्या कृते वर्षशतं नृप ! ।
विधानेन फलं लेभे अहोरात्रात्कलाविति ॥

तथा,

कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥
धर्मोत्कर्षमतीवानुप्राप्नोति पुरुषः कलौ ।
स्वल्पायासेन धर्मज्ञस्तेन तुष्टोऽस्म्यहं कलौ ॥
धन्ये कलौ भवेद्विप्रा अल्पक्लेशैर्महत्फलम् ।

विष्णुपुराणे—

देवतावेश्मपूर्णानि नगराणि कलौ युगे ।
कर्त्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः ॥

कूर्मपुराणे—

गङ्गामेव निषेवेत प्रयागे तु विशेषतः ।
नान्यत्कलियुगोद्भूतं मलं हन्तुं सुदुष्करम् ॥

स्कन्दभविष्यपुराणयोः—

भुक्तिमुक्तिफलप्रेप्सुरल्पोपायेन चेन्नरः ।
तीर्थान्येवाश्रयेद्विद्वान्कलौ गङ्गां विशेषतः ॥
गङ्गोत्तरवहा काश्यां लिङ्गं विश्वेश्वरं मम ।
उभे विमुक्तिदे पुंसां प्राप्ते दावानले कलौ ॥

नारदीये—

कलौ तत्परमब्रह्मप्राप्तये सत्वरं नृणाम् ।
गङ्गाभजनमेवाहुर्महोपायं महर्षयः ॥

कामिकसंहितायाम्—

न भवेद्वेदमन्त्राणां संसिद्धिः शुद्धिवर्जिते ।
मन्त्रैर्विना न सिद्ध्यन्ति प्रज्ञाः शुद्धिस्तु दुर्लभा ॥
काले कलौ विशेषेण शुद्धं वस्तु न दृश्यते ।
कलौ युगे हि तमसा नष्टधर्मे भयङ्करे ॥
अनवच्छिन्नसन्तानो धर्मतन्तुर्हि जाह्नवी ।
विना गङ्गां धर्ममयीं गतिः स्याच्च कथं कलौ ।
शिरसः कर्त्तनं तस्य प्राणत्यागोऽपि वा वरः ।
समर्थस्तु कलौ काले गङ्गां यो नाभिगच्छति ॥

भविष्यपुराणे—

कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् ।
विधिहीनक्रियाणां च गतिर्गङ्गां विना नहि ॥
अनाश्रित्य तु गङ्गां हि मुक्तिमिच्छति यः कलौ ।
सूर्यं द्रष्टुमिहोद्युक्तो जात्यन्धसदृशस्तु सः ॥
वृथा कुलं वृथा विद्या वृथा यज्ञा वृथा तपः ।
वृथा दानानि तस्येह कलौ गङ्गां न याति यः ॥

इति कलियुगधर्माः ।

अथ कलियुगवर्ज्यानि ।

ब्रह्मपुराणे—

दीर्घकालब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा ।
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ॥

तथा—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशो गोवधस्तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

क्रतुः—

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ च न कमण्डलुः ॥

आदित्यपुराणे—

शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः ।
उपयाचितमादेशाः सम्भवन्ति कलौ क्वचित् ॥

तस्मात्तन्मात्रलाभेन कार्यं यत्तन्न कारयेत् ।
तथा धर्मज्ञसमयवशादन्यान्यपि कलौ वर्ज्यानि ।
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाक्षतयोन्याश्च वरेणान्येन सङ्गतिः ॥
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।
आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि सङ्ग्रहः
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ।
सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः ॥
अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ॥
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥
संसर्गदोषः स्तेनान्यमहापातकनिष्कृतिः ।
वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ॥
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
(१)सवर्णानां तथादुष्टैः संसर्गः शोधितैरपि ॥
अयोनौ सङ्ग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ।
परोद्देशात्मसन्त्याग उच्छिष्टस्यापि वर्जनम् ॥
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ।
अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ॥
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।
षड्भक्तानशनेनान्नहरणं हीनकर्मणः ॥
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलिता ।
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ॥
प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥
बलात्कारादिदुष्टस्त्रीसङ्ग्रहो विधिचोदितः ।

( १ ) सवर्णान्याङ्गनादुष्टैरिति पाठान्तरं निर्णयसिन्ध्वादौ

यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः।
नवोदके दशाहं च दक्षिणा गुरुचोदिता॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च।
भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा॥
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया।
पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम्॥
यतेः सायंगृहत्वं च मुनिभिस्तत्त्वतत्परैः।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः॥
निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्॥

पुराणान्तरे—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥

निगमेऽपि—

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

व्यासः—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः॥
सन्न्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानता।

देवलः—

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते।
अग्निहोत्रं च सन्न्यासं तावत्कुर्यात्कलौ युगे॥

लौगाक्षिः—

अर्धाधानं स्मृतं श्रौतस्मार्त्ताग्न्योस्तु पृथक्कृतिः।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया॥

इति कलिवर्ज्यानि।

अथ दीक्षाकालः।

कालोत्तरे—

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ स्मृतः।
तयोरसम्भवे वर्षा विनान्यत्रापि शस्यते॥

शरद्वसन्तयोर्योग इति शरदि वसन्ते चेत्यर्थः। तत्र मासफलानि तु संहितायाम्—

असिद्धिर्भूमिसम्पत्तिर्मरणं बन्धुनाशनम्।

आयुर्वृद्धिः प्रजानाशः सम्पत्ती रत्नसञ्चयः ॥
शुभप्राप्तिः स्थाननाशो मेधार्थश्च वशीकृतिः ।
चैत्रादीनां फलं ज्ञेयं मलमासं विवर्जयेत् ॥

कारणे तु अन्यथा मासफलान्युक्तानि ।

वैशाखपूर्वजे मासे मन्त्रारम्भः सुदुःसहः ।
वैशाखे धनदायी च ज्येष्ठे मृत्युप्रदो भवेत् ॥
आषाढे पुत्रलाभाय श्रावणे शुभदो मतः ।
भाद्रे चैव ज्ञानहानिस्तथासिद्धिः प्रकीर्त्तिता ॥
आश्विने सर्वसिद्धिश्च कार्त्तिको ज्ञानसिद्धिदः ।
शुभकृन्मार्गशीर्षः स्यात्पौषो दुःखविधायकः ॥
माघे मेधाविवृद्धिश्च फाल्गुने सर्ववश्यता ॥ इति ।

अत्राषाढस्य सम्यक्फलता पूर्ववाक्येऽनिष्टफलदत्वमुक्तमतो विकल्पः ।

सिद्धान्तशेखरे तु विशेषः ।

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्येष्ठे दीक्षात्र मध्यमा ॥
आषाढः श्रावणो माघः कनिष्ठाः सद्भिरादृताः ।
निन्दितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ॥
निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ।

कारणे—

आषाढपूर्वमासे च आषाढे मार्गशीर्षके ।
दीक्षां न कारयेद्धीमानन्यमासेषु कारयेत् ॥
शुक्लपक्षे शुभर्क्षे च शुभवारतिथौ तथा । इति ।

क्रियाकाण्डशेखरे तु—

न विना पर्व दीक्षा स्यात् वर्षासु मधुपौषयोः ।
अन्यत्र तु सदा कार्या विशुद्धौ गुरुशिष्ययोः ॥
वर्षादौ हि निमित्तानि प्रशस्तान्युपलक्ष्य वै ।

इति वर्षादिनिषिद्धकालेऽपि शुभशकुनाद्युपलम्भे सति दीक्षा कार्येत्याह हेमाद्रिः ।

अगस्तिसंहितायाम्—

शुक्लपक्षेऽथ कृष्णे वा दीक्षा सर्वसुखावहा । इति ।

कालोत्तरे विशेषः ।

दीक्षारम्भः प्रकर्त्तव्यो भूतिकामैः सिते तथा ।
मुक्तिकामैः कृष्णपक्ष इति ।

संहितायां तु—

पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ताः सर्वकामदाः ॥ इति ।

अन्यत्रापि—

कृष्णाष्टम्यां चतुर्दश्यां पञ्चपर्वदिनेऽथवा । इति ।

मन्त्रसारसङ्ग्रहे—

द्वितीया पञ्चमी चैव षष्ठी चापि विशेषतः ।
द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ इति ।

मन्त्ररत्नावल्यामपि—

चतुर्थीं नवमीं षष्ठीमष्टमीं च चतुर्दशीम् ।
पौर्णमासीं विना शेषा हिता मुक्तौ मुमुक्षुभिः ॥

हेमाद्रौ स्मृत्यन्तरे—

सप्तम्यां च नवम्यां च एकादश्यामथापि वा ।
दशम्यां च त्रयोदश्यां दीक्षाकर्म प्रशस्यते ॥
क्वचित्तु त्रयोदश्याममावास्यामिति पाठः ।
सितेन्दुज्ञगुरूणां तु परीक्षेत गुणागुणैः ॥
गुणैर्युक्ता तु सङ्ग्राह्या गुणैर्हीनां तु वर्जयेत् । इति ।

सितः=शुक्रः । ज्ञो=बुधः । एषां गुणागुणैः तिथिवारसंयोगजैः उदितास्तमितवक्रातिचाररूपैर्दीक्षालग्ने केन्द्रत्रिकोणषडष्टमान्त्यस्थितिरूपै गुणागुणैः ।

कालोत्तरे—

चतुर्थ्यामथवाष्टम्यां चतुर्दश्यां तथैव च ।
पूर्णिमायां प्रकर्त्तव्यं भूतिकामैः सिते सदा ॥
मुक्तिकामैः कृष्णपक्षे यत्किञ्चित्कर्म चाचरेत् ।
दिनच्छिद्राणि मुक्त्वाथ याश्चान्यास्तिथयः स्मृताः ॥ इति ।

तत्वसागरसंहितायां विशेषः ।

तां तां तिथिं समालोच्य तद्भक्तांस्तत्र दीक्षयेत् ।

इन्द्र उवाच ।

कस्य का तिथिरुद्दिष्टा समासाद्वद नारद ! ।

नारद उवाच ॥

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।
चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी ॥
द्वितीया च श्रियः प्रोक्ता पार्वत्यास्तु तृतीयिका ।
नित्या मार्गेषु पार्वत्या अष्टमी च चतुर्दशी ॥

चतुर्थी गणनाथस्य भानोः प्रोक्ता तु सप्तमी ।
एवं मुख्यास्तु तिथयः सुरेन्द्र ! परिभाषिताः ॥ इति ।

रत्नावल्याम्–

आदित्यं मङ्गलं सौरिं त्यक्त्वा वारास्तु भूतये । इति ।

संहितायां तु–

रवौ गुरौ सिते सोमे कर्त्तव्यं बुधशुक्रयोः । इति ।

सिते=शुक्लपक्षे इत्यर्थः ।

संहितायाम्–

अश्विनीरोहिणीस्वातिविशाखाहस्तभेषु च ।
ज्येष्ठोत्तरात्रयेष्वेव कुर्यान्मन्त्राभिषेचनम् ॥

रत्नावल्याम्–

त्रीण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम् ।
हस्तः स्वातिरनुराधा मघा मूलं च रेवती ।
अभिजित् श्रवणं चेति शिवयोगे चतुर्दशी ॥

कारणे—

पौष्णं रोहिण्यथादित्यं श्रवणं चाश्विनी तथा ।
सावित्रं त्वाष्ट्रवायव्यमैन्द्रं नैर्ऋतमेव च ॥
तिष्यं त्रिरुत्तरार्द्रा च सौम्यं शिष्यात्रिजन्मभम् ।
नक्षत्राणि प्रशस्तानि दीक्षाकर्माणि सुव्रत ! ॥ इति ।

पौष्णं=रेवती । आदित्यं=पुनर्वसुः । सावित्रं=हस्तः । त्वाष्ट्रं=चित्रा । वायव्यं=स्वातिः । ऐन्द्रं=ज्येष्ठा । नैर्ऋतं=मूलम् । सौम्यं=मृगशीर्षकम् । शिष्यात्रिजन्मभं=शिष्यजन्मनक्षत्रदशमैकोनविंशातिनक्षत्रम् ।

अन्यत्रापि—

उत्तरात्रयरोहिण्यो रेवतीपुष्यवासवम् ।
धनिष्ठावायुमित्राग्निपित्र्यं त्वाष्ट्रं च नैर्ऋतम ॥
ऐशवैष्णवहस्ताश्च दीक्षायां तु शुभावहाः । इति ।

योगा अप्युक्ता रत्नावल्याम्—

योगाश्च प्रीतिरायुष्मान्सौभाग्यः शोभनः स्मृतः ।
सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः ॥
वरीयांश्च शिवः सिद्धो ब्रह्मा ऐन्द्रश्च षोडश ।
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ॥
प्रतिपत्पूर्वाषाढा च पञ्चमी कृत्तिका तथा ।
पूर्वाभाद्रपदा षष्ठी दशमी रोहिणी तथा ॥
द्वादश्यां सर्वनक्षत्रमर्यम्णा च त्रयोदशी ।

नक्षत्रयोगा इत्येते देवानामपि नाशदाः ॥
शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत्। इति।

कारणे—

राशयश्च चराः श्रेष्ठा मध्यमाश्चोभयोः स्मृताः।
स्थिराश्च नैधनस्थाने ग्रहाः सर्वे विवर्जिताः।
आचार्यशिष्ययोरानुकूल्ये शुभप्रदं भवेत् ॥

क्रियाकाण्डशेखरे—

राश्यादिवर्गसंशुद्धिर्लग्ने चन्द्रार्कयोरपि।
बलं गोचरसिद्धिश्च ज्योतिःशास्त्रे प्रतीयताम् ॥
लग्नदोषा ग्रहदोषाः सर्वे नश्यन्ति वै शुभे।
लग्नस्थे भार्गवे प्रौढे केन्द्रस्थे वा बृहस्पतौ ॥
इत्यादिनिपुणं वीक्ष्य दीक्षां कुर्वीत देशिकः।
मौमुक्षवीं प्रत्ययं तु न कालनियमः स्मृतः॥ इति।
मन्त्रवर्णेषु सिद्धार्णात्सुसिद्धान्मेलयेद् बुधः।
वैरिवर्णानुदासीनान् गुणयेद्दशभिः पृथक् ॥
सिद्धराशौ हरेद्भागं वसुभिर्भानुभिः स्वरैः।
त्रिधा स्थाप्यात्र यः शेषो यामसङ्ख्योदिता हि सा ॥
रिपुराशिगतः शेषो मासोऽसौ परिकीर्त्तितः।
हरेत्पञ्चदशैर्भागं तिथिज्ञानाय केवलम् ॥
मासि तस्मिन् तथा यामे कुर्वीत ग्रहणं मनोः।
ज्योतिःशास्त्रसुनिर्णीते लग्ने वा दीक्षितो भवेत् ॥ इति।

एतदुक्तं भवति। देयमन्त्रवर्णान् कोष्ठचक्रे चतुष्कोष्ठात्मकमेककोष्ठमङ्गीकृत्य सिद्धसाध्यसुसिद्धवैरिभेदेन पृथक्कृत्य तन्मध्ये सिद्धसुसिद्धवर्णानेकीकृत्य साध्यवैरिवर्णान् प्रत्येकं दशभिर्गुणयित्वा सर्वमेकीकृताङ्कान् पृथक् स्थानत्रये संस्थाप्य प्रथममष्टभिर्हरेत्। अवशिष्टाङ्कसमो यामः। एवं भानुभिर्हृतेऽवशिष्टाङ्कसमो मासः। पञ्चदशभिर्हृते शेषाङ्कसमा तिथिः। तत्र तस्मिन् मासे शुक्लपक्षे तस्मिन् दिने तस्मिन् प्रहरे मन्त्रमुपदिशेत्। मुमुक्षुर्दीक्षायां कृष्णपक्ष इति विशेषः।

रत्नावल्याम्—

निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये।

संहितायाम्—

पञ्चाङ्गशुद्धदिवसे स्वोदये तिथिवारयोः।
गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते ॥
प्रवृद्धे बलसंयुक्ते शुक्रे देवगुरौ तथा।

शुभे विधुसमायोगे शुभवर्गे शुभोदये ॥
इत्यादौ सर्वमन्त्राणां सङ्ग्रहः सर्वसौख्यकृत् । इति ।

तथान्यत्र—
शिष्यात्रिजन्मादिवसे सङ्क्रान्तिविषुवेऽयने ।
अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्य्ययोः ॥
शिष्यानुकूले काले वा देहशुद्धिः शुभावहा । इति ।

महाकापिलपञ्चरात्रे—
एवं नक्षत्रतिथ्यादौ करणे योगवासरे ।
मन्त्रोपदेशो गुरुणा साधनं च शुभावहम् ॥ इति ।

गुरुणा कर्त्तव्य इति शेषः । साधनं=साधनारम्भ इत्यर्थः । कार्य्य-मिति शेषः ।

अथ पूर्वोक्तदीक्षाकालापवादः ।

अगस्तिसंहितायाम्—
सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ।
सूर्यग्रहणकालेन न समोऽन्योऽस्ति कश्चन ॥
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् । इति ।
न मासतिथिवारादिशोधनं सूर्य्यपर्वणि ।
ददातीष्टं गृहीतं यत् तस्मिन्काले गुरोर्नृषु ॥
सिद्धिर्भवति मन्त्रस्य विनायासेन वेगतः ।
कर्त्तव्यं सर्वयत्नेन मन्त्रसिद्धिमभीप्सुभिः ॥ इति ।

तस्मिन्काले यद्गुरोर्गृहीतं तत् नृषु इष्टं ददातीति सम्बन्धः ।

ग्रन्थान्तरे—
सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ॥

कालान्तरे—
दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यारम्भणकर्मणि ॥
कार्त्तिक्यां चैव वैशाख्यां स्वर्भानोरपि दर्शने ।
चन्द्रसूर्य्योपरागेषु षडशीतिमुखेषु च ॥
ग्रहनक्षत्रयोगेषु विषुवेषूत्सवेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥

क्रियाकाण्डशेखरे—
प्रसिद्धास्तिथयो राहुदर्शनं गुरुपर्व च ।
पवित्रकातिथिश्चापि दीक्षाकर्मविधौ परा ॥ इति ।

प्रसिद्धाः=समनन्तरोक्तास्तिथयः ।

सिद्धान्तशेखरे—

विषुवेऽप्ययनद्वन्द्वे आषाढ्यां दमनोत्सवे ।
दीक्षा कार्य्या तु कालेषु पवित्रारोपकर्मणि ॥ इति ।

अन्यत्रापि—

पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीगिरौ काश्यां कालाकालौ न शोधयेत् ॥

देवीपीठचतुष्टयम्=उड्डीयानजालन्धरपूर्णागिरिकामरूपाख्यम् । श्रीगिरौ=श्रीपर्वते इति केचित् ।

अन्यत्रापि—

शशिदिनकरयोर्ग्रहणे जन्मनि शिष्यस्य मकरसङ्क्रान्तौ ।
करुणासमये च गुरोर्नक्षत्रादीष्यते न दीक्षायाम् ॥ इति ।

तत्वसागरसंहितायाम्—

तिथिं विनापि दीक्षायां विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणां हि सकृत्सङ्ग उपस्थिते ॥
तदनुज्ञाय दातव्या स दीक्षावसरो महान् ।
ग्रामे वा यदि वारण्ये क्षेत्रे वा दिवसे निशि ॥
आगच्छति गुरुर्दैवाद्यदा दीक्षा तदा भवेत् ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥
न तिथिर्न जलं होमो न स्नानं न जपाक्रिया ।
दीक्षायाः कारणं किन्तु स्वेच्छावाप्ते हि सद्गुरौ ॥

इह केचित् चन्द्रग्रहे दीक्षा न कार्य्या जडत्वं तदा स्यादित्याहुः । ते तु "सत्तीर्थेऽर्कविधुग्रासे" "चन्द्रसूर्य्योपरागेषु च" "शशिदिवाकरयोर्ग्रहणे" "राहुदर्शनं गुरुपर्व च" इत्यादिबहुमुनिवचनविरोधात् अनादरणीया इति । विष्णुदीक्षायां विशेषः—

पञ्चरात्रे,

द्वादश्यां शुक्लपक्षस्य सूर्यसङ्क्रमणे तथा ।
द्वादश्यां कृष्णपक्षस्य पौर्णमास्यां मुनेऽथवा ॥
अमावास्यामपि तथा कालमुद्दिश्य देशिकः ।
नवैकाद्विऽयहःपूर्वमधिवासनमारभेत् ॥

तत्व(न्त्र)सागरसंहितायामपि—

ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।

एवं ग्रहणादिकालेषु उक्तमासशुक्लद्वादश्यादिषु विष्णुदीक्षा कार्या इति ।

इति दीक्षाकालः ।

अथ विष्णोर्नामकीर्त्तनकालः ।

विष्णुधर्मोत्तरे—

अथ सर्वाणि नामानि सर्वकार्ये हरेर्जपेत् ।

तथा—

चक्रिणं हलिनं चैव शार्ङ्गिणं खड्गिनं तथा ।
मोक्षार्थी प्रवसन् राजन् ! दिक्षु प्राच्यादिषु स्मरेत् ॥
अजितं चाच्युतं चैव सर्वं सर्वेश्वरं पृथुम् ।
संस्मरेत्पुरुषं भक्त्या व्यवहारेषु सर्वदा ॥
कूर्मं वराहं मत्स्यं वा जलप्रतरणे स्मरेत् ।
भ्राजिष्णुमग्निजननं जपेन्नाम त्वतन्द्रितः ॥
सङ्ग्रामाभिमुखो गच्छन्संस्मरेदपराजितम् ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ।
अच्युतं चामृतं चापि जपेदौषधकर्मणि ॥
गरुडध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदोषशिरोरोगविषवीर्यं प्रशाम्यति ।
ग्रहनक्षत्रपीडासु देवबाधाटवीषु च ॥
दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसङ्कटे ।
अन्धकारे तथा तीव्रे नारसिंहेति कीर्त्तयेत् ॥
नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणम् ।
वामनं खड्गिनं चैव दुःस्वप्नेषु च संस्मरेत् ॥
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ।
बलभद्रं तु युद्धार्थी कृष्यारम्भे हलायुधम् ॥
उत्तारणं वाणिज्यार्थी श्रीराममभ्युदये नृप ! ।
मङ्गल्यं मङ्गले विष्णुं माङ्गल्येषु च कीर्त्तयेत् ॥
अग्निस्वार्त्तेष्वशेषेषु विशोकेति तथा जपेत् ।
उत्तिष्ठन्कीर्त्तयेद्विष्णुं प्रसुप्ते माधवं नरः ॥
भोजने चैव गोविन्दं सर्वत्र मधुसूदनम् ।
नारायणं सर्वकाले क्षुतप्रस्खलितादिषु ॥
ध्याने देवार्चने होमे प्रणिपाते प्रदक्षिणे ॥
कीर्त्तयेद्वासुदेवं च अनुक्तेष्वपि यादवम् ।
कार्यारम्भे तथा राजन् ! यथेष्टं नाम कीर्त्तयेत् ॥
सर्वाणि नामानि हि तस्य राजन् !
सर्वार्थसिद्ध्यै हि भवन्ति पुंसः ।

तस्मद्यथेष्टं खलु देवनाम
सर्वेषु कार्येषु जपेत्तु भक्त्या ॥

इति विष्णोर्नामकीर्त्तनकालः ।

अथाधानकालः ।

तत्र श्रुतिः—

जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति ।

एतच्च वयोवस्थाविशेषोपलक्षणम् ,

तामाशिषमाशासे तं तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात् ।

इत्यादिषु यद्युपबन्धदर्शनादजातपुत्रस्याप्याधानपूर्वत्वात् । एवं च उपलक्ष्यवयोवस्थाविशेषणीभूतवयस आधानकालत्वं सूचितं भवति । कालान्तरमाह—

बौधायनः, विवाहो व्याख्यातोऽत्राग्न्याधेयस्य कालो यथाश्रद्धमत ऊर्द्धं जीवति पितर्यग्नीनादधीतेति बौधायनः । जीवादिमृते वा जाया-मवाप्य दशमेऽहन्यग्निमादधीतेति शालाकिः ।

जायामवाप्येत्युक्त्या विवाहस्य सार्वकालिकत्वेन दक्षिणायनेऽप-र्वण्यपीत्युक्तं भवति । जीवति पितरीति पक्षे चौपासनं धारयतो न प्रत्यवाय इत्युक्तं बौधायनेनैव—"न दुर्ब्राह्मणो भवत्यौपासनं धारय-माण" इति ।

एष त्रैवर्णिकसाधारणः कालोऽधुना वर्णविशेषपुरस्कारेण ऋतुवि-शेषा विविच्यन्ते ।

तत्र श्रुतिः—वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यो, वर्षासु रथकार इति ।

रथकारो न "माहिष्येण करण्यां तु रथकारः प्रजायते" इति याज्ञव-ल्क्योक्तो जातिविशेषः, किन्तु सौधन्वनापरपर्यायः ।

आपस्तम्बस्तु—वसन्तो ब्राह्मणस्य ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य वर्षासु रथकारस्य । ये त्रयाणां वर्णानामेतत्कर्म कुर्युस्तेषा-मेष कालः । शिशिरः सार्ववर्णिक इति ।

ये त्रयाणां वर्णानामिति । ये ब्राह्मणक्षत्रियवैश्याः एतेषां त्रयाणां वर्णानां मध्ये एतत्कर्म्म रथकर्म कुर्युस्तेषामेष काल इति, एवं च रथकारो न जातिविशेषः किन्तु त्रैवर्णिक एवेति । कालान्तरमाह—

बौधायनः—यदैवैनं श्रद्धोपनमदथादधीत सैवास्यर्द्धिः तदेतदार्त्तस्या-तिवेलं वा श्रद्धायुक्तस्येति ।

आर्त्तः=व्याधितः । अतिवेलं श्रद्धायुक्तोऽतिशयेन श्रद्धावान् ।

अथ कामनाविशेषेण ऋतव उक्ताः ।

कात्यायनेन—वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ग्रीष्मः क्षत्रियश्रीकामयोः वर्षाः प्रजापशुकामवैश्यरथकृतामिति ।

एतेन ब्राह्मणक्षत्रियवैश्यानां काम्या अन्येऽपि काला इति सिद्धम् । वसन्तादयो द्विविधाः । सौरचान्द्रभेदेन ऋतुविवेचने उक्ताः । सौरा अपि मीनमेषौ मेषवृषौ वेत्यादिभेदेन द्विविधा इत्यपि चोक्तम् । एवं च चैत्रवैशाखज्येष्ठास्तथा पूर्वोदाहृतात् "शिशिरः सार्ववर्णिक" इत्येतस्मान्माघफाल्गुनौ च मिलित्वा पञ्च मासा ब्राह्मणस्याधानकाल इति सिद्धम् । एतन्मूलिकैव माघादिपञ्चमासा वसन्त इति याज्ञिकप्रसिद्धिरिति ।

अथ तिथयः ।

तत्रापस्तम्बः—अमावास्यायां पौर्णमास्यां वा आधेय इति,

तथा फाल्गुनीपूर्णमास आदधीतेत्युक्त्वा द्व्यहे पुरैकाहे वेति ।

द्व्यहे दिनद्वयं, पुरा पूर्वमेकाहे एकदिनपूर्वमित्यर्थः । एवं च द्व्यहेतिपक्षे त्रयोदश्याम । एकाहेतिपक्षे चतुर्दश्यामादधीतेत्यर्थः ।

बौधायनस्तु-या वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या भवति सा सकृत्संवत्सरस्य रोहिण्या सम्पद्यते तस्यामादधीतेति ।

आश्वलायनः-वसन्ते पर्वणि आदधीतेति ।

सत्याषाढस्तु—आदधीतेत्युपक्रम्य—आमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे वा पुण्ये नक्षत्रेऽत्र यज्ञाणि निपतन्ति तत्समूहम् । विप्रतिषेधे ऋतुनक्षत्रं बलीय इति ।

पुण्यनक्षत्राणि तु कृत्तिकादिचतुर्दशनक्षत्राणि "कृत्तिकाः प्रथमं" इत्यादि श्रुतेः । वाजसनेयके तु नक्षत्रनिन्दापूर्वकमुक्तम्-अमवास्यायामग्नीनादधीतेति, तेन पर्वाभ्याहितमिति ।

अथ नक्षत्राणि ।

तत्र कात्यायनः—कृत्तिकारोहिणीमृगशिरःफल्गुनीषु हस्तो लाभकामस्य चित्रा चेति ।

बौधायनः—कृत्तिकासु रोहिण्यां पुनर्वसुफल्गुन्योश्चित्रायामिति ।

आश्वलायनः-अग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रौष्ठपदयोरेतेषामेकस्मिन् कस्मिंश्चित् ।

आपस्तम्बस्तु—कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति । गृहांस्तस्याग्निर्दाहुको भवति । रोहिण्यामाधाय सर्वान् रोहान् रोहति । मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा यः पुराभद्रः सम्पा·

पीयान् स्यात्स पुनर्वस्वोराद्धीत । पूर्वयोः फल्गुन्योर्यः कामयेत, दानकामा मे प्रजाः स्युरिति । उत्तरयोर्यः कामयेत फलदः स्यादिति । एतदेव विपरीतमथापरं पूर्वयोराधाय पापीयान् भवति उत्तरयोर्वशीयान् हस्ते यः कामयेत प्र मे दीयेतेति चित्रायां राजन्यो भ्रातृव्यवान् विशाखयोः प्रजाकामोऽनुराधे वृद्धिकामः उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः सर्वाणि नित्यवदेके समामनन्ति ।

अस्यार्थः । मुख्यः=श्रेष्ठः । सर्वान् रोहान् गजादीन् रोहति आरोहति । पुराभद्रः=पूर्वभाग्यवान् । पापीयान्=दरिद्रः । दानकामा=दानेच्छावत्यः । एतदेव विपरीतमिति । पूर्वाफल्गुनीफलमुत्तराफल्गुनीषु, उत्तराफल्गुनीफलं पूर्वाफल्गुनीष्वित्यर्थः । अत्र अकाम्यमानमपि अनिष्टं फलं भवति वस्तुसामर्थ्यात् "यो ब्राह्मणायावगुरेत् इतिवत् ।

गर्गसंहितायाम्—

पुष्याग्नेयद्व्युत्तरादित्यपौष्णज्येष्ठाचित्राकाविदैवत्यभेषु ।
कुर्युर्वह्न्याधानमाद्यं वसन्तग्रीष्मोष्मान्तेष्वेव विप्रादिवर्णाः ॥

पौष्णं=रेवती । कः=ब्रह्मा तद्दैवत्या रोहिणी । आद्यं=प्रथमाधानम् । अत्राद्यमित्युपादानात् पुनराधानादौ न ऋतुनक्षत्रादिनियमः । अपूर्वेऽपि सोमपूर्वाधाने न ऋतुनक्षत्रादर इत्युक्तम्—आपस्तम्बेन,

सोमेन यक्ष्यमाणो नर्त्तुं सूर्क्षेन्न नक्षत्रमिति ।

यः सर्वकर्मभ्योऽग्निहोत्रदर्शपूर्णमासादिभ्यः पूर्वं सोममेव कर्त्तुमिच्छति स ऋतुं नक्षत्रं च न सूर्क्षेत=नाद्रियेत । पर्व तु अपेक्षेदेव तथाच—

धूर्तस्वामिः—सोमाधानमेकदीक्षापक्षे पर्वण्येव नैकादश्यादिषु सोमाधानस्य पर्वापेक्षणादिति । रुद्रदत्तेन तु नक्षत्रग्रहणं प्रदर्शनार्थमिति न पर्वादर इति उक्तम् । अत्रेदं विचार्यते । किमनेन सोमकालमात्रबाध उताधानमात्रकालबाध उक्त इति । नाद्यः, प्रकरणादाधानकालमात्रबाधो युक्तो न सोमस्य तस्याप्रकृतत्वात् । किञ्च न हि सोमे आपस्तम्बेन नक्षत्राण्युक्तानि येन कथञ्चिद्बुद्धिस्थतामात्रेण बाध उच्येतेति । न द्वितीयः । एवं सति अत्र वाक्ये ब्राह्मणं प्रति ऋत्वनादरकथनमनर्थं स्यात्, सोमकालत्वेनाधानेऽपि वसन्तस्यावर्जनीयत्वात् । न च वसन्तस्तदानीं सोमाङ्गमेव नाधानाङ्गमिति वाच्यम् । तस्य साधारणत्वात् । कालस्य हि अधिकरणत्वेनैवोपकारकत्वम् । सति च तस्मिन् कथं नाङ्गत्वमिति । किञ्च उत्कर्षाद्ब्राह्मणस्य सोमः स्यादित्यन्तरागर्भिण्यधिकरणे "सोमेन यक्ष्यमाण" इत्यत्र दर्शपूर्णमासोत्तरकालतारूपः सोमकाल आधानसोमयोरेकाहसम्बन्धेन बाध्यत इत्युक्तम् । तत्तुल्यन्याये

नात्रापि वसन्तानादरेण कालान्तरे आधाने क्रियमाणे सोमाधानयोरेकाहसम्बन्धार्थं सोमस्याप्यृतुर्बाध्यत एव तस्मान्न सोमकालमात्रस्य न वाधानकालमात्रस्य बाधः अतो वचनमनर्थकमिति। अत्र वदामः। सत्यं, नैकमात्रकालबाध इति, किन्तु सोमाधानयोर्द्वयोरपि कालो बाध्यते। तत्र परं वसन्त उभयाङ्गभूतो बाध्यते। नक्षत्रं तु आधानाङ्गभूतमेवेति। अत एव "यदैवैनं यज्ञ उपनमेदथादधीत" इति भारद्वाजेन नक्षत्राद्यनादर उक्तो वक्ष्यमाणत्वाभिसन्धिमत इति न किञ्चिदनुपपन्नम्। उत्तरायणं सर्वमाधानकाल इत्युक्तमाचार्य्यैरित्युक्तं बौधायनभाष्ये केशवस्वामिना। यद्यपि ज्योतिःशास्त्रे लग्नाद्युक्तमाधाने, तथापि तदुपादेयमेव तस्य स्मार्त्तत्वेऽपि आधानपुरस्कारेणैव विहितत्वादनन्यथासिद्धत्वेनावश्यमुपसंहर्त्तव्यत्वात्। अपरे तु स्मार्त्तत्वेनास्य स्मार्त्ताधान एवोपसंहारो न श्रौताधान इति वदन्ति। एतच्च मलमासादिषु तथा गुरुशुक्रमौढ्यादिषु न कार्य्यम्।

इत्याधानकालः।

अथ निरूढपशुबन्धकालः।

तत्र याज्ञवल्क्यः–(अ. १ श्लो. १२५)

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा।
कर्त्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि॥ इति।

अयनम् अयनं प्रतीति प्रत्ययनं प्रतिदक्षिणायनं प्रत्युत्तरायणं चेत्यर्थः। अत्रायनस्य सम्पूर्णसाधारणत्वेऽपि अयनाद्यदिन एव कार्यम्। "आवृत्तिमुख आवृत्तिमुखे"इत्यापस्तम्बस्मरणात्। आवृत्तिः। उत्तरावधेर्मकराद्दक्षिणावधेर्वा कर्कात्सूर्यस्य परावृत्तिस्तस्य मुखमाद्यं दिनमित्यर्थः। निरूढपशुबन्धमुपक्रम्य कालान्तरमाह—

आपस्तम्बः—संवत्सरे संवत्सरे यजेत षट्सु षट्सु वा मासेष्वित्येके। ऋतुव्यावृत्तौ सुयवसे वेति।

संवत्सरे पूर्णे इति शेषः। तेन वर्षान्तरे आधानदिवस इत्यर्थ इत्येके भाष्यकृतः। केचित्तु "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इत्यनुशासनात् संवत्सरस्यैवाधिकरणत्वे तत्र च कदेत्यपेक्षिते ऋतुव्यावृत्तावित्येकः सुवयस इत्यपर इति कालद्वयम्। ऋतुव्यावृत्तौ=संवत्सरमध्ये यस्मिन् कस्मिंश्चित् ऋतुव्यावृत्तिदिन इत्यर्थः। सुयवसे=सुष्ठु यवसमर्जुनं तृणं यस्मिन् वर्षास्वित्यर्थः। भाष्यकारमते ऋतुव्यावृत्तौ प्रतिऋतुव्यावृत्तावेवं संवत्सरे षट् इति पक्षान्तरं सुयवस इति च पक्षान्तरं स्वतन्त्रमेव संवत्सरपक्षादिति। षट्सु षट्सु मासेषु इति च पक्षा-

न्तरम् । षण्मास इत्यग्न्याधानप्रभृतिषण्मासपूर्त्तौ बोध्यमिति भाष्यकृतः । केषांचिन्मते तु षण्मासे इत्येतत्पक्षे आवृत्तिमुख इति योजयन्ति । एवं च भाष्यकारमते प्रतिसंवत्सरमाधानदिन इत्येकः पक्षः, आधानदिनात् षट्सु षट्सु मासेष्विति द्वितीयः, संवत्सरमध्ये प्रतिऋत्व्यावृत्ताविति तृतीयः, संवत्सरमध्ये वर्षाकाल एवेति चतुर्थः । आवृत्तिमुख इति पञ्च कालाः । केषांचिन्मते तु संवत्सरे संवत्सरे इति पक्षे यस्मिन् कस्मिंश्चिदृताविकः, सुयवसे वेत्यपरः, षट्सु षट्सु मासेषु इति पक्षे च आवृत्तिमुख इति तृतीय इति । अत्र च प्रतिनियतदिनपक्षे न पर्वनियमः । पक्षान्तरे तन्नियम एव यदि स्तोतिवचनात् ।

कात्यायनोऽपि कालद्वयमाह—पश्विज्या संवत्सरे संवत्सरे प्रावृषि आवृत्तिमुखयोर्वेति ।

कालान्तरमाह बौधायनः-पशुबन्धेन यजेतेत्युपक्रम्य आमावास्येन वा हविषेष्ट्वा नक्षत्रे वेति ।

आमावास्येन हविषेष्ट्वेति यजनीयमहः । अपरे तु शुक्लपक्षः सम्पूर्ण इति आहुः । नक्षत्रे=कृत्तिकाः प्रथमं विशाखा उत्तममिति तैत्तिरीयशाखोक्तचतुर्दशपुण्यनक्षत्रेष्वित्यर्थः । अथवा न क्षीयते चन्द्रमा अस्मिन्निति नक्षत्रं पौर्णमासीत्यर्थ इति । एतन्मते पौर्णमास्यां दर्शपौर्णमासप्रयोगारम्भात्पौर्णमासीमारभ्य दर्शपर्यन्तं न कर्मान्तरारम्भः, न कर्मवति कर्मान्तरारम्भ इति नियमात् । भाष्यकारस्तु ततो नानीजानं पशुना संवत्सरोऽतीयादित्यर्थवादान्तर्गतवाक्यपर्यालोचनया आधानदिवसात्संवत्सरमध्ये यस्मिन् कस्मिंश्चित्पर्वणि पशुः कार्य इति षष्ठं कालमाह । एष च पशुर्नित्यः "संवत्सरे संवत्सरे" इति प्रत्ययनमिति च वीप्साश्रवणात्, एतदकरणे मन्वाद्युक्तप्रायश्चित्तस्य वक्ष्यमाणत्वाच्च ।

इति पशुकालः ।

अथ चातुर्मास्यानां कालो निर्णीयते ।

तत्र चातुर्मास्यानि कर्त्तव्यानीत्युक्तं याज्ञवल्क्येन—चातुर्मास्यानि चैव हीति ।

कर्त्तव्यानीत्यनुषङ्गः । तत्र चातुर्मास्यपदं वैश्वदेववरुणप्रघाससाकमेधशुनासीरीययागसमुदायनामधेयं राजसूयवत् । तानि च यावज्जीविकप्रयोगवन्ति, संवत्सरप्रयोगवन्ति, द्वादशाहप्रयोगवन्ति चेति त्रिविधानि । प्रयोगपर्याप्तकालपरिसमाप्यान्यपि केचिन्मन्यन्ते । तत्र संवत्सरप्रयोगवन्त्यपि द्विविधानि, ऋतुयाजिकल्पेन चातुर्मास्ययाजिकल्पे-

न चेति। एतेषां प्रयोगाणां भेदे च प्रमाणं वक्ष्यमाणतत्तत्कालविधित एवावसेयम्। तत्र सर्वेषां प्रयोगाणां दर्शपौर्णमासोत्तरकर्त्तव्यत्वमुक्तं, "दर्शपौर्णमासाभ्यामिष्ट्वा" इत्यनेन।

अधुना सांवत्सरिकादिप्रयोगेषु कालविशेषो विविच्यते।

तत्र सांवत्सरिकप्रयोगे ऋतुयाजिकल्पे वैश्वदेवादिकाल उक्त आपस्तम्बेन।

वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते।

अत्र त्रिषु पर्वसु नियतः काल उक्तः। शुनासीरीये तु ऋतुयाजिसंख्यानुरोधाच्छिशिर एव ग्राह्य इति प्रतिभाति। अत्रापि पक्षे शुक्लपक्षः अपेक्षित एव। "उदगयन आपूर्यमाणपक्षे समस्तानि वैकल्पिकेषु अनेकेषु कालेषु सत्स्वपि" इत्यनेन भारद्वाजवचनेनोक्तस्य तस्याबाधेनैवोपपत्तौ बाधकल्पनायोगात्। चातुर्मास्ययाजिकल्पे तथा यावज्जीवप्रयोगेऽपि काल उक्तेनैव यश्चतुर्षु चतुर्षु मासेषु यजते स चातुर्मास्ययाजी।

तत्रापि नियममाह—फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजेत। ततश्चतुर्षु मासेषु आषाढ्यां वा श्रावण्यां वरुणप्रघासैर्यजेत। ततश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजेत। ततो द्व्यहेऽयहे चतुरहेऽर्द्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयैरिति।

अत्र यदा फाल्गुन्यामुपक्रमस्तदाषाढ्यामित्यादि, यदा चैत्र्यां तदा श्रावण्यामिति। अस्य पक्षस्य ऋतुयाजिपक्षादयमेव भेदो यदृतुयाजिपक्षे वसन्तान्ते वैश्वदेवैरिष्ट्वा प्रावृडाद्यपर्वणि वरुणप्रघासानुष्ठानमपि सम्भवति। चातुर्मास्ययाजिपक्षे चतुर्षु चतुर्षु च मासेष्विति नियम इति। द्वादशाहकल्पं बौधायनभारद्वाजावाहतुः।

तत्र भारद्वाजः—द्वादशाहानि यक्ष्यमाणः प्रतिपदि वैश्वानरपार्जन्याभ्यां द्वितीये वैश्वदेवेन तृतीये चतुर्थे वोपरम्य पञ्चमे वरुणप्रघासैः षष्ठे सप्तमे वोपरम्याष्टमे नवमे वा साकमेधैर्दशमे एकादशे वोपरम्य द्वादशे शुनासीरीयया, त्रयोदशे पशुरिति संवत्सरप्रतिमा वै द्वादश रात्रयः संवत्सरमेव यजेतेति विज्ञायते।

त्रयोदशे पशुरिति यदि पशुना समाप्तिस्तत्पक्षे बोध्यम्। अत्र द्वितीयादिपदानि द्वितियादितिथिपराणि प्रतिपदीति उपक्रमात् स्पष्टं चोक्तं बौधायनेन—

द्वादशाहेऽपि चातुर्मास्यैर्यजेताथ प्रथमायां वैश्वदेवेनेष्ट्वा चतुर्थ्यां वरुणप्रघासैरष्टम्यां नवम्यां च साकमेधैः द्वादश्यां शुनासीरीयैः पुरुषो यजेतेति विज्ञायत इति।

कालान्तरमप्युक्तं बौधायनेन—

नक्षत्रे प्रयोग इत्येक आहुरुदगयन आपूर्यमाणपक्षे पुण्याहे प्रयुञ्जीतेति ।

अत्र पक्षे आपूर्यमाणस्य पक्षस्य पुण्यनक्षत्रे उपक्रमः । नक्षत्रे प्रयोग इत्येतस्य विशेषणमुदगयनत्वादीति तद्भाष्यकृतः । यावज्जीविकप्रयोगपक्षे आरम्भस्तु चातुर्मास्ययाजिकल्पेनैव । द्वितीयसंवत्सरे परं विशेष उक्तो बौधायनेन-

कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो भवतीति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां शुनासीरीयपुरुषो यजेताथ वैश्वदेवायोपवसेत् वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं तत्र कुर्यादिति प्रतिकृष्येतस्य पक्षस्य शुनासीरीयपुरुषो यजेतैषामेकेन यजेताथ वैश्वदेवायोपवसेत् वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेतेति । अथो एतद्बौधायनस्य पक्षं वेदयन्ते यावज्जीविकान्येव चातुर्मास्यानि स्युरिति ।

अनुप्रयोगो=द्वितीयः प्रयोगः । अत्र यदा फाल्गुन्यां पूर्वसंवत्सरे उपक्रमस्तदा फाल्गुन्यां यदा चैत्र्यामुपक्रमस्तदा चैत्र्यामिति । अथ चेदिष्ट्येति यदि प्रयोगसमाप्त्यर्थं इष्ट्यादि क्रियते तदायं क्रमः । चेदित्युक्त्या यावज्जीवप्रयोगसमाप्त्यर्थैकत्वात्पश्वादीनां पाक्षिकत्वमिति । अथो एतद्बौधायनस्येत्याद्युक्त्या च यावज्जीविकप्रयोगोऽपि पाक्षिको बोध्यः । कालान्तरमपि बौधायन आह—

यथाप्रयोगमित्यौपमन्यव इति ।

यथाप्रयोगमिति यावता कालेन प्रयोगसमाप्तिर्भवति तावति काले सन्ततं पूर्वाह्णादौ कुर्यादिति । अत्र पक्षे उदगयनपुण्यनक्षत्र एवोपक्रम इति । एतद्रुद्रदत्तादयो न मन्यन्ते । न हि यथाप्रयोगमित्यनेन चातुर्मास्यकालविधानं किन्तु ब्रह्मचर्यकालस्य नियमः प्रयोगादिनामितैव व्रतचर्येति । एतच्च स्पष्टमुपक्रमानुसारादेवावगम्यते । तथा च सूत्रं-

यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तरामिथुनानि प्रथमे त्वेव संवत्सरे व्रतं चरेदित्यथोहस्माह शालाकिः सांवत्सरिकाण्येव चातुर्मास्यानि ब्रह्मचर्यवन्तीति। यथाप्रयोगमित्यौपमन्यव इति । अस्यार्थः । बौधायनमते यावज्जीविकान्येव चातुर्मास्यानि कर्तव्यानि अन्तरिमिथुनवन्ति, प्रथमसंवत्सरयवव्रतचर्येति च । शालिकिमते तु सांवत्सरिकेष्वेवायं नियमो न यावज्जीविकेषु । उपमन्युमते तु प्रयोगदिने एव व्रतचर्येति।

अपरे तु- मास्तु यथाप्रयोगमित्यतः सन्ततकरणं तथापि "उदगयन आपूर्यमाणपक्षे समस्तानि" इति भारद्वाजवचनात्समस्तानां संलग्नानां प्रयोग इति। ऐहिकान्यपि चातुर्मास्यान्युक्तानि शाङ्खायनेन।

अथ सोमकालः।

तत्र श्रुतिः-वसन्ते वसन्ते ज्योतिषा यजेतेति।

याज्ञवल्क्योऽपि प्रतिसंवत्सरं सोम इति।

अयमपि दर्शपौर्णमासोत्तरं कर्त्तव्य इत्युक्तं "दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वचनात्। अयमुत्सर्गः। सोमाधाने दर्शपौर्णमासेभ्यः पूर्वमपि तस्य करणात्।आश्वलायनेनापि "प्रागपि सोमेनैकेन" इत्यनेन दर्शपौर्णमासेभ्यः पूर्वमपि सोमकर्त्तव्यताकथनाच्च। एतच्च वसन्तेऽपि पर्वणि कार्यं यदिष्ट्येतिवचनात्। कालान्तरमप्याह बौधायनः-

अ॰ ावास्येन हविषेष्ट्वा नक्षत्रे वेति।

अस्यार्थः पशुकालनिरूपणे प्रतिपादितः।

इति सोमकालः।

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यत्रक्रचन्द्रोदये॥
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थेऽस्मिन्समयप्रकाशनपरः पूर्त्तिं प्रकाशोऽगमत्॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-श्रीमन्महाराजमधुकरसाहसूनुचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर श्रीवीरसिंहदेवोद्योजित-श्रीहंसपण्डितात्मजपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-श्रीमन्मित्रमिश्रकृते

वीरमित्रोदयाभिधनिबन्धे समयप्रकाशः समाप्तः

शुभं भूयात्।

२ छन्दः कौमुदी। [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितछन्दःसंग्रहपुस्तकम्। [ छन्दोविभागे ३ ] रु० ०—६

३ योगदर्शनम्। महर्षिप्रवरपतञ्जलिप्रणीतम्। तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम्। सटिप्पण। [ योग० विभागे १ ] रु० २—०

४ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम्। म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। २ से ५ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः। रु० १—८

५ योगदर्शनम्। पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम्। सटिप्पण। [ योग वि० २ ] १—०

६ काव्यमीमांसा। राजशेखरविरचिता। साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमोभागः। [ काव्यविभाग १३ ] रु० ०—८

७ नागानन्दनाटकम्। श्रीहर्षदेवप्रणीतम्। काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य वृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम्। [ नाटक विभाग १ ] रु० १—४

८ मेघदुतकाव्यम्। महाकवि श्रीकालीदास विरचितम्। मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायणशास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम्। [ काव्य०४ ] रु०—८

९ जागदीशीव्यधिकरणम्। न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम्। ( न्यायविभागे २ ) रु० २—८

१० काव्यकल्पलतावृत्तिः। श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता। ( अलङ्कारविभागे ४ ) रु० १—४

११ वैयाकरणसिद्धान्तचन्द्रिका। श्रीरामाश्रमप्रणीता। श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता। पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता। (व्या० वि० ११) पूर्वार्द्धम्। रु० २—८ उत्तरार्द्धं। रु० २-८

१२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम्। साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्। (पुराणेतिहास वि०१) रु० ५—०

१३ आपस्तम्बधर्मसूत्रम्। श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम्। ( कर्मकाण्डविभागे ७ ) रु० ४—०

१४ अवच्छेदकत्वनिरुक्तिः। श्रीजगदीशतर्कालङ्कारकृताः। न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः। ( न्याय वि० १३) रु० १—४

१५ (१) संस्कारदीपकः। म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः। गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः। (कर्म० वि० ८)रु० २—०

(२) संस्कारदीपकः। " " " विवाह-गर्भाधानादिकेशान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः। ,, रु० ३—०

(३) संस्कारदीपकः। " तुलादानादि-मूलशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः। " रु० ३—०

९६ वर्षकृत्यदीपकः। कालनिर्णयव्रतोद्यापन सहितः। म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः। (कर्म्म० वि ९) रु० ३-

९७ श्रौतसूत्रम्। श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम्। (कर्म० वि० १०) रु० २—

९८ नलचम्पूः अथवा दमयन्तीकथा महाकविश्रीत्रिविक्रमभट्टविरचिता। विषमपद-प्रकाशाख्यव्याख्यया सहिता। भावबोधिनी टिप्पणी सहिता। (का० वि०१५) रु० १—

९९ श्रीब्रह्मसूत्रम्। श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण च सनाथीकृतम्। (श्रीनिम्बार्कभाष्यम्) (वेदान्त वि० १०) रु० ३—

१०० वाग्वल्लभः। सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः। (छन्दः शास्त्र वि० ४) रु० २—८

१०१ सिद्धान्तलक्षणम्। श्रीजगदीशतर्कालङ्कारकृतम्। न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम्। (न्याय विभागे ४)) रु० १—८

१०२ वेदभाष्यभूमिकासंग्रहः। (सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः)। [वेद० वि० ५] रु० २—८

१०३ माधवीयधातुवृत्तिः। श्रीमत्सायणाचार्यविरचिता। (व्या० वि० १२) रु० ५—०

१०४ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम्। [कर्म०वि० ११] रु० ४—०

१०५ ताण्ड्यमहाब्राह्मणम्। सायणाचार्यविरचितभाष्यसहितम्। (प्रथमोभागः) (वेद वि० ६) रु० ५—०

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। द्वितीयोभागः। [न्या० वि० १५] रु० ३—०

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। (तन्त्रशा० वि० १) रु० ५—०

१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। (वेद० वि० ७) रु० २—०

१०९ शब्दशक्तिप्रकाशिका। श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता। श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रि-कृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता। (न्या वि० १६) रु० ४—।

११० योगदर्शनम् (पातञ्जलदर्शनम्) भगवत्पतञ्जलिरचितं, राधवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रवि-रचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुल्लासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्योति-तम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्य दर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, (योग वि० ३)

---

November & December. 1934.

THE

# CHOWKHAMBÂ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 443 & 444

# वीरमित्रोदयः

भक्तिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः

नेपालदेशीय-

साहित्योपाध्यायविष्णुप्रसादभण्डारिणा

संशोधितः ।

# VIRAMITRODAYA

BHAKTIPRAKÂS'A

BY

MAHÂMAHOPÂDHYÂYA PANDIT MITRA MIS'RA

*Edited By*

SAHITYOPADHYAYA

PANDIT VISHNU PRASADA BHANDARI

Vol XXI. FASCICULUS I-II. १-२

Vol. 11

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBA SANSKRIT SERIES OFFICE,

*Benares City.*

1936

THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NOS. 443 & 444.

THE

# VĪRAMITRODAYA

## BHAKTIPRAKĀS'A

BY

MAHĀMAHOPĀDHYĀYA PANDIT MITRA MIS'RA

*Edited with Introducion etc.,*

By

NYĀYĀCHĀRYA

PANDIT PADMA PRASĀDA UPĀDHYĀYA

Vol. XXI. FASCICULUS I-II. १-२

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office,*

Benares City

1936.

॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला

( ग्रन्थ-संख्या ३० )

ग्रन्थाङ्काः ४४३, ४४४.

॥ श्रीः ॥

# वीरमित्रोदय-

## भक्तिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

भट्टराई-इत्युपपदेन

न्यायाचार्यपण्डितपद्मप्रसादोपाध्यायेन

संशोधितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

वि० सं० १९९३

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभच्छातपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४४३. ४४४.

श्रीगुरुः शरणम् ।

# भूमिका ।

अथ भागवतेऽस्मिन् भवे भगवद्भक्तिरेव भगवद्भावं भावयतीति भावयन्ते भव्याः । भवति चात्र श्रुतिः, स्मृतिश्च । "सर्वेषामधिकारिणामनधिकारिणाञ्च भक्तियोग एव प्रशस्यते, भक्तियोगो निरुपद्रवः, भक्तियोगान्मुक्तिः, बुद्धिमतामनायासेनाचिरादेव तत्त्वज्ञानं भवति, तत्कथमिति? भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान् परिपालयति, सर्वाभीष्टान् प्रयच्छति, मोक्षं दापयति, चतुर्मुखादीनां सर्वेषामपि भक्तिं विना कल्पकोटिभिर्मोक्षो न विद्यते, कारणेन विना कार्यं नोदेति, भक्त्या विना ब्रह्मज्ञानं कदापि न जायते, तस्मात् त्वमपि सर्वोपायान् परित्यज्य भक्तिमाश्रय, भक्तिनिष्ठो भव, भक्तिनिष्ठो भव, भक्त्या सर्वसिद्धयः सिद्ध्यन्ति, भक्त्याऽसाध्यं न किञ्चिदस्ति, एवंविधं गुरूपदेशमाकर्ण्य सर्वं परमतत्त्वरहस्यमवबुध्य सर्वसंशयान् विधूय क्षिप्रमेव मोक्षं साधयामीति निश्चित्य ततः शिष्यः समुत्थाय प्रदक्षिणनमस्कारं कृत्वा गुरुपूजां विधाय गुर्वनुज्ञया क्रमेण भक्तिनिष्ठो भूत्वा भक्त्यतिशये पक्वं विज्ञानं प्राप्य तस्मादनायासेन शिष्यः क्षिप्रमेव साक्षान्नारायणो बभूव" इति ।

"न साधयति मां योगो न सांख्यं धर्म एव च ।
न स्वाध्यायतपस्त्यागो यथा भक्तिर्ममोर्जिता" ॥ इति च ।

तत्र भक्तित्वं ज्ञानत्वव्याप्यजातिविशेष इति द्रव्यकिरणावलीप्रकाशे वर्धमानोपाध्यायाः । आराध्यत्वप्रकारकं ज्ञानं भक्तिरिति केचित् । मधुसूदनसरस्वतीप्रभृतयस्तु भगवद्गुणगणश्रवणेन द्रवावस्थां प्राप्तस्य चित्तस्य सर्वेशविषया धारावाहिकी वृत्तिर्भगवदाकारता भक्तिरित्याहुः । वयन्तु भगवद्विषयकानुरागहेतुक्रियात्वं, भगवदनुरागमात्रोद्देश्यकविहितक्रियात्वं वा भक्तित्वमिति ब्रूमः । अत्र मात्रपदेन स्वर्गाद्युद्देश्यकयागादिव्यवच्छेदः, विहितपदेन भगवदनुरागोद्देशेनानुष्ठितनीरहननादेर्व्युदासः । न च फलभक्तावव्याप्तिः । भगवद्गोचरानुरागवृत्तिकार्यतासाक्षात्कारजनकसाक्षात्कारविषयत्वस्य निरुक्तसाक्षात्कारविषयतावच्छेदकधर्मवत्त्वस्य वा विवक्षितत्वात् । ननु साध्यरूपाया भक्तेः सुखात्मतया

पुरुषार्थत्वेन तत्र प्रवृत्त्युपपत्तावपि साधनभक्तेः स्वयमपुरुषार्थत्वेन तत्र प्रेक्षावतां प्रवृत्तिर्न युक्तेति चेत् । निरुपाधीच्छाविषयस्वरूपपरमपुरुषार्थत्वस्य सुखदुःखाभावयोरेव विश्रान्ततया धर्मार्थयोर्निरुक्तपुरुषार्थत्वाभावेन तयोरपि प्रवृत्त्यनुपपत्तेः, यदि च सुखदुःखाभावान्यतरसाधनत्वेन तयोः पुरुषार्थत्वं तदा भक्तेरपि सुखसाधनतया तत्त्वज्ञानद्वारापवर्गसाधनतया च पुरुषार्थत्वमक्षतमेवेति न तयोरिव तस्यामपि प्रवृत्त्यनुपपत्तिरिति । निरुक्ता च भक्तिर्द्विधा, साध्यरूपा साधनरूपा च, तत्र साध्यरूपा भक्तिरेव फलभक्तिरित्युच्यते, । तदुक्तं ग्रन्थकृता—"उक्ता भक्तिर्द्विधा, अनुरागात्मिका फलभक्तिः, साधनभक्तिश्चेति, तत्र फलभक्तिः साधनानुष्ठानादेव सिद्धेति न विधेया, फले विध्यभावात्" इति । साधनभक्तिश्च श्रवणकीर्तनस्मरणचरणसेवनार्चननमनदास्यसख्यात्मनिवेदनभेदेन नवधा । तत्र श्रवणं भगवद्गुणकर्मनाम्नां श्रोत्रग्रहणानुकूलो व्यापारः, सङ्कीर्तनं तेषामेव स्वयमुच्चारणम्, स्मरणं भगवन्नामरूपादीनामनुसन्धानम्, पादसेवनं भगवत्परिचर्या चमरान्दोलनपर्वमहोत्सवाद्यनेकरूपा, अर्चनं पूजा, नमनं स्वापकर्षबोधानुकूलो व्यापारः, तदुद्देश्यकस्वावधिकोत्कर्षबोधानुकूलव्यापारो वा, दास्यं सर्वकर्मणां भगवत्यर्पणम्, यत्क्रियाद्वैतमित्युच्यते । सख्यं भगवद्वचने विश्वासादि, आत्मनिवेदनमात्मीयस्य देहदारापत्यादेर्भगवति समर्पणमिति । अस्य च ग्रन्थस्य प्रणेता विश्वविख्यातवैदुष्यो मिथिलामण्डलमण्डनः श्रीमित्रमिश्र एव, यस्येतिवृत्तं वीरमित्रोदयोपक्रमे तत्तत्प्रकाशोपक्रमे च स्वयमेव विस्तरेण प्रपञ्चितम् । भक्तेरुपयोगितायां च न भवितुमर्हति केषाञ्चिदपि विप्रतिपत्तिः, यया खलु दुर्लभेऽस्मिन् मनुजजन्मनि मानुषताभिव्यज्यते, यां सेवमानाश्च समेषां विश्वासपात्रतां, महत्तां महनीयतां, परमेश्वरस्य दृगलक्ष्यतां, कलेर्दुर्लक्ष्यतां, धर्मस्याऽऽस्पदतामर्थस्याऽऽस्थानतां, कामस्य प्रियबन्धुतां, मुक्तेर्वरणीयतां, देवानां दयनीयतां, यक्षराक्षसपिशाचानामस्पृश्यतां, रोगादीनां रिपुतां, राज्ञामनतिक्रमणीयतां, साधूनां स्पृहणीयतां समुपयान्ति, एवंविधाया भक्तेर्निरूपणपरोऽयं भक्तिप्रकाशाख्यो निबन्धः सर्वतन्त्रसिद्धान्तसिद्धयुक्तिप्रमाणसम्बलितवपुषा प्रायशः सर्वाण्येव भक्तिनिरूपणपराणि निबन्धान्तराण्यतिशेत इति नास्तिसंशयलवलेशोऽपि, यतस्तेषांप्रणेतृभिः कैश्चिदौपनिषदज्ञानस्य भक्तिप्रयोजकत्वमुपवर्णयद्भिर्भक्तिज्ञानयोर्भक्तेरेव प्राधान्यमित्या-

ग्रहग्रहगृहीतैः शास्त्रसमन्वयपरिपाटी नाद्रियत, कैश्चिच्च ज्ञानस्यैव प्राधान्यमिति ज्ञाननदप्रवाहप्रवाहितैर्भक्तिमार्गो दूरत एवाधरीकृतः । शास्त्रसमन्वयमनुरुन्धानैः प्रकृतनिबन्धप्रणेतृभिश्च श्रीमित्रमिश्रमहोदयैः प्रमाणतर्कावष्टम्भेन स्वर्गजनकयागे व्रीहियवयोरिव मुक्तिसाधनीभूततत्त्वज्ञाने भक्तेः, श्रवणमननादेश्च वैकल्पिककारणत्वं समसूचि । तत्र संसारादतिनिर्विण्णस्यौपनिषद्मार्गः, अनिर्विण्णस्य च भक्तिमार्ग इति विशेषः । अस्य च संशोधनप्रभृतिकार्यजातं काशीस्थगवर्नमेण्टसंस्कृतपुस्तकालयसरस्वतीभवनस्थं हस्तलिखितमेकमेव पुस्तकमवलम्ब्य सम्पादितम् । यद्यपि आदर्शपुस्तकमशुद्धिबहुलम् ,बहुत्राक्षरविपर्यासेन च सचेतसामुद्वेगकरम् , तथापि यथामति शृङ्गग्राहिकयाक्षराणि संयोज्य कथंकथमपि कार्यभारो निर्व्यूढः । कृतेऽपि बंहीयसि प्रयासे स्वमतिमान्द्यात् उपायान्तराभावाच्च कुत्रचित् यथोपलब्धएव पाठ उपन्यस्तः, तत्र विद्वांस एव पाठनिर्णये प्रभविष्यन्ति । अस्मिंश्च ग्रन्थे प्रमाणतयोपन्यस्तानां श्रीभागवतभगवद्गीताश्लोकानां स्कन्धाध्यायश्लोकसंख्या, तथा प्रसङ्गादागतानां पूर्वोत्तरमीमांसानामध्यायपादाधिकरणसूत्रसंख्या, ४९ पृष्ठमारभ्य ग्रन्थे, तत्पूर्वतनानां च ग्रन्थसमाप्त्यनन्तरं संसूचितेति ग्रन्थदर्शनसमनन्तरमेव ज्ञास्येत । श्रीमज्जयकृष्णदासश्रेष्ठिमहोदयोद्योगेनैवायं ग्रन्थो मुद्रणमवाप्तेति तेऽपि श्रेष्ठिवर्या भूयसां धन्यवादानां भाजनानीति नाभिधाय सन्तोषमुपयात्यास्माकीनं चेत इत्यलं समधिकफल्गुजल्पनया ।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

विदुषामनुग्राह्यः संशोधकः ।

# अथ वीरमित्रोदयभक्तिप्रकाशस्य

# विषयानुक्रमणिका ।

---


प्राप्तिस्थानम्—

# चौखम्बा-संस्कृत-पुस्तकालय

बनारस सिटी।

श्रीगणेशाय नमः ॥

अथ

# वीरमित्रोदयभक्तिप्रकाशः ।

नमामि नन्दनन्दनं समस्तविघ्नभञ्जनम् ।
व्रजस्थलोकरञ्जनं हसन्तमम्बुजाननम् ॥ १ ॥
गिरीशकन्यकापतिं गिरिस्थितिं त्रिलोचनम् ।
स्मरामि चेतसा हरं भवाब्धिपाशमोचनम् ॥ २
नीलकायः क्वचिन्नीलकण्ठः क्वचित्
पीतवासाः क्वचित्क्वापि चर्माम्बरः ।
एक एवेश्वरोऽनेकरूपास्तनूः
संप्रगृह्णात्यमुं मुक्तिसिद्ध्यै भजे ॥ ३ ॥
सकलभवनिवृत्तं चित्तमेतन्न यस्माद्
श्रवणमननकर्मानुष्ठितिः स्यान्न तस्मात् ।
विषयकृतविषादो नापि सोढुं प्रशक्यो
हरिपदभजनं तन्निवृत्त्यै प्रकुर्मः ॥ ४ ॥

यः किल सकलश्रुतिस्मृतिप्रभृतिप्रमाणप्रथितप्रकृष्टस्वगुणगणश्रवणाचरणप्रवणतादूरीकृतदुरितं परीक्षितमुदरे दरचक्रपाणिरपालयद् ब्रह्मास्त्रात् ।

येन च चक्रेण शक्यमपि सरोवनक्राह्वबलवत्तरजलचरधृतचरणगजराजमोचनमकारि कारुण्यात् ।

यश्च द्यूतजितपाण्डुसुतच्युतकुरुसंसदि नीतया द्रुपदसुतया कृतं—

हे कृष्ण ! द्वारकावासिन् क्वासि यादवनन्दन ।
इमामवस्थां संप्राप्तां कथं मां त्वं समीक्षसे ॥

इत्याक्रोशनं स्मरन्,

ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनी ॥

इत्युदाजहार संहारमिव कुरूणां कुर्वन् दीनदयालुः ।

यश्च करकमलयुगलाकलितहालाहलमपात् लालयिष्यञ्छरणगतान् दितिसुतादितिसुतान् ।

यश्चानन्दवनचरनर—वनचर—खचर—कीटपतङ्गानसुव्यपगमानन्तरमतिदुष्करतरतपश्चरणपरनरदुर्लभतरमपि झटिति नयति स्वपदम् ।

यश्च कमलापतिनाभिकमलप्रभवचतुर्मुखहृत्कमलस्थितः सन् वेदानस्मै प्रकाशितवान् , चकार च कारणकार्य्यात्मकमदो जगत् ।

यश्च मायातद्गुणवानावलितः (१)सर्ववित् सर्वकृत् सर्वनियन्ता सर्वपालकः सर्वसंहर्ता सन् रमापतिरिति उमापतिरिति विधिरिति च गीयते । यत्स्वरूपञ्च स्पष्टतरं भजनीयप्रकरणे निरूपयिष्यते ।

तस्य तत्रभवतो भगवतो भजनं दुःखायुक्तस्वसमकालसुखयुतं सत् काशीमरणन्यायेन दुस्तरतरभवजलनिधितरणकरणज्ञानजनकमितीह सत्तर्कसचिवैरनेकप्रमाणैर्निरूप्यते ।

तादृशज्ञानस्य च यद्यपि श्रवणमननादिकमुपायः । आत्मा वारे द्रष्टव्य इति दर्शनमनूद्य "श्रोतव्य" इत्यादिना श्रवणमननादेर्विधानात् । तथापि तस्मात् "ब्राह्मणो निर्वेदमायात् शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्" इत्यादिना वैराग्योपशमाद्युपेतं प्रत्येव श्रवणादेर्विधानात् तस्यैव श्रवणमननादि मुक्तिजनकज्ञानहेतुः राजसूय इव "राजा राजसूयेन स्वराज्यकामा यजत" इति वचनात् राज्ञः फलहेतुः । यस्तु विषयेषु न निर्विण्णो नापि तदेकप्रवणः केनचिद् भाग्योदयेन हरिकथाश्रवणसंकीर्त्तनादौ संजातश्रद्धः तस्य श्रवणकीर्तनादिरूपा साधनभक्तिरेव उक्तविधज्ञानहेतुः, तत्र तत्र श्रीभागवतादौ स्वयं भगवता प्रतिपादितत्वात् । तथाहि ।

श्रीभागवते,

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्विण्णो न चासक्तो भक्तियोगोऽस्य सिद्धिदः ॥ इति ।

यदृच्छयेति केनापि भाग्योदयेनेत्युक्तं श्रीधरस्वामिभिः ।

तथा,

जातश्रद्धो मत्कथासु निर्विण्णोऽन्येषु कर्म्मसु ।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥
ततो भजेत मां प्रीतया श्रद्धालुर्दृढनिश्चयः ।

(१) मायातद्गुणरूपोपाधित इति पाठो युक्त इति प्रतिभाति ।

भक्तौ च सर्वं भविष्यतीति दृढनिश्चयवान् ॥

जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् ।
प्रोक्तेन भक्तियोगेन भजतो मां सकृन्मुने ॥
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते ।
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ।
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ इति ।

मयि आत्मा चित्तं यस्य । ज्ञायते ऽनेनेति ज्ञानम्=अध्यात्मविचारः, न तु ज्ञानस्यैवायं निषेधः "मयि दृष्टे" इति स्वयमेवोक्तेः । गीतासु च,

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ (अ० १० श्लो० ११)

इति ज्ञानापेक्षाया उक्तत्वात् । श्रेय इति=श्रेयः साधनमित्यर्थः । इहेति परित्यागेऽप्यनीश्वर इत्यवस्थायाम् । तदा तदनधिकारात् । सगुणब्रह्मविचारस्तु भक्तावुपयुज्यत एव भजनीयनिर्णयं विना भजनायोगादित्याशयेन प्राय इत्युक्तम् । अत एवोक्तम्—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ इति ।
( गी० अ० १० श्लो० ८ )

न च "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इतिवत् भजनस्यैव विचाराङ्गत्वं किं न स्यादिति वाच्यम् । क्त्वापेक्षया भजनीयनिर्णयं विनेत्याद्युक्तसामर्थ्यस्य बलीयस्त्वात्,

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥
( गी० अ० १० श्लो० ८ )
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
( गी० अ० १० श्लो० १० )

इति तत्रैव भजनस्य फलवत्त्वावगमाच्च, अतश्च सगुणब्रह्मविचारस्योपयोगेऽपि न निर्गुणब्रह्मविचारो युक्तः तदनधिकारादित्युक्तं "न ज्ञानं न च वैराग्यम्" इत्यनेन । अत्र हेत्वन्तरं वदन् तदधिकारसम्पादकविविदिषार्थकर्मानुष्ठानस्याप्यनादरमाह आग्रिमश्लोकेन ।

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।

योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । इति ।

अत्र कर्म्मभिस्तपसा दानधर्म्मेणेति विविदिषावाक्योक्तधर्म्मानुष्ठानपरामर्शः । धर्म्मानुष्ठानमात्रपरामर्शे "स्वधर्म्मस्थो यजन् यज्ञैः" "अस्मिन् लोके वर्तमानः स्वधर्म्मस्थ" इत्येतदध्यायस्थपूर्वश्लोक विरोधात् ।

वेदोदितानि कर्म्माणि कुर्यादीश्वरतुष्टये ।
यथाश्रमं मुक्तिकामः प्राप्नोति परमं पदम् ॥

इति बृहन्नारदीयवचनविरोधात् । ईश्वरार्पणबुद्ध्या कर्म्मानुष्ठानस्य दास्यरूपभगवद्भक्तित्वेन प्रतिपादनात् । अत एव "सर्वधर्म्मान् परित्यज्य" इत्यत्र विधिकैङ्कर्यं त्यक्त्वेत्युक्तं श्रीधरस्वामिभिः । एवञ्च यत् विविदिषोद्देशेनानुष्ठितैः कर्म्मभिः सत्वशुद्धिरूपं फलं लभ्यते यच्च वैराग्याद्युपेतनिर्गुणविचारात् तत्वज्ञानरूपं फलं, तत्सर्वं पूर्वानुष्ठितनानाधर्म्मजन्यशुद्धवासनातः, ईश्वरार्पणकर्म्मानुष्ठानरूपमद्भक्तियोगेन शुद्धसत्वः सन् मद्भक्तः=कृतमत्कथाश्रवणकीर्तनादिर्लभते । ईश्वरार्पणबुद्ध्या कर्म्मानुष्ठानमपि, "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्" इत्यादिना भगवद्धर्म्मत्वेन प्रतिपादनादीश्वरभक्तिरेव, सर्वापि च साधनभक्तिः पूर्वानुष्ठितधर्म्मसाध्यैव,

दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥

इत्यविशेषवचनात् । विविदिषापक्षादस्य पक्षस्याध्यात्मविचाराच्च विशेषमाह । अञ्जसा=अनायासेन । अध्यात्मविचारस्य वैराग्यादिसापेक्षत्वेनाऽऽयासात् । विविदिषोद्देशेन कर्म्मानुष्ठानेऽङ्गसा(१)कल्यमप्यपेक्षितं काम्यत्वात् नास्मिन् पक्षे "स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्" "कर्म्मशुद्धिर्मदर्पणम्" इत्यादिना साधकैङ्कर्यादेव [ विधिकैङ्कर्यनिरपेक्षेणैव पापक्षयरूपकर्मशुद्धेः प्रतिपादनात् काम्यानि पुनः फलाभिसन्धिरहितान्यप्यङ्गविधिकैङ्कर्यादेव ] क्रियन्ते तैश्च पाप क्षयो जन्यते, "धर्म्मेण पापमपनुदति" येन केनचन यजेत, अपि वा दर्विहोमेनानुपहतमना एव भवति" इत्यादिवचनात् । पापक्षये च श्रवणादिसामग्रीसमवधाने श्रवणादौ प्रवर्तते तदभावे "कर्मणा पितृलोक" इतिवचनादुत्तमलोकं गच्छतीत्याश्रीयते तदेतद्भक्तिपक्षेऽपि तुल्य-

(१) अङ्गवैगुण्ये फलाभावात्, तदुक्तं न्यायदर्शने "कर्तृकर्मसाधनवैगुण्यात्" इति ।

म्, श्रवणकीर्तनादिभक्तिसाधनसमवधाने भक्तौ प्रवर्तते इति वक्तुं शक्यत्वात्। विविदिषापक्षे ज्ञानोद्देशेनानुष्ठितकर्मभिः सत्वशुद्धिं प्रसाध्य श्रवणमननादावबश्यं प्रवर्तते इति यत्, तदपि भक्तौ वक्तुं शक्यम्; अध्यात्मविचारवत् भक्तेरपि ज्ञानसाधनत्वाविशेषात्। यस्तु आदित एव केनाचित् भाग्योदयेन ईश्वरतुष्टयै कर्मानुष्ठाने भगवद्दास्यबुद्ध्या प्रवर्तते न च विशुद्धसत्वः श्रवणकीर्तनादौ। [ अविशुद्धसत्वः ] श्रवणकीर्तनादौ वा प्रवृत्तस्तेन विशुद्धसत्वः पश्चात्तदेकप्रवणो भवति तस्य विनैव ज्ञानोद्देशेन कर्मानुष्ठानं, विनैव वाध्यात्मविचारं तत्फलप्राप्तिरित्येतावत् "यत्कर्मभिर्यत्तपसा" इत्यनेनोच्यते। एवमीश्वरार्पणबुद्ध्या कर्मानुष्ठानेऽपि यदि श्रवणमननादिसामग्रीसमवधानं क्रियते। एवञ्चेश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपा भक्तिः संयोगपृथक्त्वन्यायेनाध्यात्मविचारेऽप्युपयुज्यत इत्यपि वक्तुं शक्यम्, अतश्चेश्वरतुष्टयै ज्ञानोद्देशेन वा कर्मानुष्ठानस्य भक्तावध्यात्मविचारे चोपयोगे एतावान् विशेषः, यदा विविदिषोद्देशेनैव कर्मानुष्ठानं निर्गुणविद्यायामेव चात्यन्तादरः, तदा यावत्साधनचतुष्टयसम्पत्तिस्तावत्तदनुष्ठानं, तत्सम्पत्तौ संन्यासोत्तरकालमध्यात्मविचारे प्रवृत्तिः, तदुक्तम्—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥ इति।

[ गी० अ० ६ श्लो० ३ ]

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता॥ इति॥
"वेदानिमं च लोकममुं च परित्यज्यात्मानमन्विच्छेत्"।
त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम्।

श्रुत्या विधीयते यस्मात्'

इत्यादिना अध्यात्मविचाराङ्गत्वेन संन्यासविधानाच्च। यदा तु ईश्वरार्पणबुद्ध्यैव कर्मानुतिष्ठति।

गमयतु नरकं वा स्वर्गतिं वा तनोतु
क्षिपतु स परमात्मा यत्र कुत्रापि चास्मान्।
अलमलमनया नश्चर्चया किन्तु कर्म
सततसुखमयस्य श्रीपतेरेव सेवा॥

इत्येवं भगवत्सेवायां केवलमादरस्तदा तैः कर्मभिः श्रवणकीर्तनादिसाधनभक्तौ श्रद्धातिशय उत्पद्यते यस्मिन्नुत्पन्ने भगवत्कथाश्रवणकीर्तनादिरसिकस्य वैष्णवाग्रगण्यस्य सत्यपि विषयान्तरसन्निधाने

चित्तं न चलति, यथोक्तं—

त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दात् क्षणनिमिषार्धमपि स वैष्णवाग्र्यः।
॥ इति।

त्रिभुवनविभवहेतवेऽपि=त्रैलोक्यराज्यार्थमपि। लवार्धमपि भगवत्पदारविन्दभजनात् यो न चलति स वैष्णवाग्र्यः। ननु लवार्धमात्रभजनोपरमे चैतावान् लाभो भवेत् तत्कुतो न चलेत् तत्राह अकुण्ठस्मृतिः=भगवत्पदतोऽन्यत्सारं नास्तीत्येवंरूपा अकुण्ठा अनपगता स्मृतिर्यस्य सः भगवत्पदारविन्दादन्यत्सारं नास्तीत्येवं कुतः, अत एव आह अजितात्मसुरादिभिरिति अजिते हरावेवात्मा येषां तथाभूतैः सुरादिभिरपि दुर्लभात् किन्तु केवलं मृग्यात् तदपेक्षया सर्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थ इत्युक्तं, श्रीधरस्वामीभिः। तादृशवैष्णवाग्रगण्यस्य हरिकथाश्रवणकीर्तनादावेव मुख्योऽधिकारः कर्मसु तु स्वल्पः, इत्याशयेनोक्तं—

तावत् कर्म्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा यावच्छ्रद्धा न जायते" इति,

इत्युक्तं श्रीधरस्वामिभिः। एवञ्च भगवद्भक्तस्य भगवत्कथारसिकतया काले कथञ्चित्कर्म्माननुष्ठानं न दोषाय "गौणमुख्ययोर्मुख्यं बलीयः" इति न्यायात।

स्वपादमूलं भजतः प्रियस्य
त्यक्त्वान्यभावस्य हरिः परेशः।
विकर्म्म यच्चोत्पतितं कथञ्चित
धुनोति सर्वं हृदि सन्निविष्टः॥

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः।
हृद्यन्तस्थो ह्यभद्राणि विधूनोति सुहृत्सताम्।

इत्यादिना भगवान् स्वभक्तानां दोषं नाशयतीति प्रतिपादनाच्च, सोऽयं पुरुषधुरन्धरः अध्यात्मविचारे न प्रवर्तते तत्फले अस्य स्पृहाभावात्। तदुक्तं—,

नैकात्मतां मे स्पृहयन्ति केचित् मत्पादसेवाभिरता मदीहाः।
येऽन्योन्यतो भागवता प्रसज्य सभाजयन्ते मम पौरुषाणि॥ इति,
न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत्॥ इति।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ इति च ॥

भगवद्भजने तु तद्रसिकतया प्रवर्तते, तद्रसिकत्वं च तदनुष्ठाने परमसुखरूपभगवन्मूर्तिस्फूर्त्या सकलसांसारिकदुःखविगमने चित्तविश्रान्तेः । अत एव भगवद्भक्तेः श्रेयःसाधनत्वेऽपि परमपुरुषार्थत्वम्, ज्योतिष्टोमादीनि हि नानुष्ठानकाले प्रीतिं जनयन्ति ॥

यथोक्तं वृद्धैः ।

अतीव खेदः खलु कर्मकाले
को वेद भावीनि सुखानि कानि ।
कंसारिसंसेवनकाल एव
संसारखेदः प्रशमं प्रयाति ॥

तथा ।

गोविन्दे सुखरूपता प्रतिपदं वेदैः सदोदीर्यते
तानप्यन्यथयन्ति चेत्कुमनसो मिथ्याकुतर्कोक्तिभिः ॥
तस्यानुस्मरणेन यन्नयनयोरानन्दबाष्पोदयो
विश्रान्तिर्हृदये तनुः पुलकिता तन्नान्यथा किं भवेत् ॥ इति ।

नन्वेवमुक्तवक्ष्यमाणप्रमाणैर्भगवद्भक्तजनस्य मुक्तिसाधनतत्वज्ञानहेतुत्वेऽवगतेऽपि तत्स्पृहया तदनुष्ठानाभावान्न ततस्तज्जन्म स्यात् । यथा ज्योतिष्टोमस्य सर्वफलार्थत्वेऽपि यत्फलस्पृहां विना तदनुष्ठानं न ततो तज्जन्मेति चेत् । न । वेदान्तिमते पितृलोककामनया नित्यनैमित्तिकानां विधानाभावात् तत्स्पृहयानुष्ठानाभावेऽपि तद्धेतुत्ववदुपपत्तेः । यथा धनार्थितया आराधितोऽपि राजा सन्तुष्टः सन् कृपया आराधकशत्रून् तिरस्करोति तथा भगवान् सन्तुष्टः सन् कृपया तत्वज्ञानमुत्पाद्य भक्तानां भवशत्रुं तिरस्करोति, तदुक्तम्—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ इति ॥

( गी० अ० १० श्लो० ११ )

एवकारो भिन्नक्रमः, अहमेव ज्ञानदीपेन नाशयामीति ।

ननु तत्वज्ञानस्य प्रमाणजन्यत्वेन प्रसिद्धेः, भक्तेश्च प्रमाणजन्यत्वाप्रसिद्धेः कथं तस्य ततो जन्म, अध्यात्मविचारेण तु निर्णीतशक्तितात्पर्येभ्यो वेदान्तेभ्यस्तज्जन्म युक्तम्, अत एव "तं त्वौपनिषदं पुरुषं पृच्छामि" इति औपनिषदत्वविशेषणमात्मनः सङ्गच्छते । किञ्च ज्ञानसामान्यसामग्रीमात्रजन्यत्वं स्वतस्त्वं प्रमाया इति सर्वसम्मतम् । भक्तेर्ज्ञानसामग्रीत्वाप्रसिद्धेः स्वतस्त्वभङ्गः । किञ्च शक्तितात्पर्यावधार-

णेन प्रमाणसम्भावनया प्रमाणासम्भावना निवर्तत इति युक्तम् । भगवद्भजनात्तु तत्वज्ञाने कथं तन्निवृत्तिः ।

उच्यते ।

श्रवणकीर्तनादिना भक्तानां हृदि आविर्भूतः परमात्मा भवतीति तत्सम्बन्धात् निर्मलं स्वान्तं तत्वाधियं जनयति, "दृश्यते त्वग्रयया बुद्ध्या" इत्यादिना तस्य प्रमाणत्वप्रसिद्धेः, औपनिषत्वविशेषणं तु, उपनिषदां मूलभूतप्रमाणत्वादित्युक्तं साम्प्रदायिकैः, अञ्जनादेः, चक्षुःसंस्कार इव स्वान्तसंस्कारे भगवद्भजनस्योपयोगान्न स्वतस्त्वभङ्गः । उक्तञ्च ।

श्रीभागवते ।

यथायथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः ।
तथातथा पश्यति तत्वसूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम् ॥ इति ।

भगवद्भजनादेव च दुरितनिवृत्त्या प्रमाणासंभावनाबुद्ध्यनुत्पत्तिः, संकीर्त्यमानभगवन्नाम्नो वा तत्वज्ञानहेतुत्वं संकीर्तनप्रकरणे वक्ष्यते, अतोऽपि तत्वज्ञानस्य प्रमाणजन्यत्वं युज्यत एव । तदेवं भगवद्भक्तेस्तत्वज्ञानोपयोगित्वे न किञ्चिद्बाधकम् । एवञ्च तत्वज्ञाने जनयितव्ये भगवद्भजनमध्यात्मविचारेण सह विकल्पते । न च दर्शादिवत्समुच्चयः किन्न स्यादिति वाच्यम् । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येकेन यजिना षण्णां यागानां साहित्येन स्वर्गं प्रत्युपादानादुक्तस्तत्र समुच्चयः । न च तथात्रैकपदोपादानमनयोः । तस्मात् "उद्भिदा यजेत पशुकामः" "बलभिदा यजेत पशुकामः" इतिवत् भिन्नवाक्योपात्तत्वे सति तुल्यार्थत्वाद्विकल्प एव युक्तः । ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "द्रष्टव्यः श्रोतव्यो मन्तव्य" इति सत्यपि भिन्नवाक्योपात्तत्वे सति चैकार्थत्वे यज्ञादीनां श्रवणादिना यथा समुच्चयः, तथा किन्न स्यात् यावद्धि समुच्चयः सम्भवति तावद्विकल्पानुसरणमन्याय्यम् , अष्टविधदोषनिदानत्वात् तस्य, न च "धर्मेण पापमपनुदति इति कर्मणां कल्पषनिवर्तकत्वश्रवणात् श्रवणविध्यपेक्षितसत्वशुद्धिहेतुत्वेनोपकार्योपकारकभावात् युक्तः समुच्चय इति वाच्यम् ।

यत्कीर्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं
तस्मै सुभद्रश्रवसे नमोनमः ॥

इति भगवद्भजनस्यापि कल्मषनिबर्हकत्वश्रवणात् । किञ्च—

"यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्" ॥

इति श्रवणोपकारककर्मसादुगुण्यहेतुत्वेन श्रवणादिना समुच्चय एव भक्तेर्युक्तः । किञ्च विविदिषावाक्ये न तावत् ज्ञानोद्देशेन यज्ञादिविधानं सम्भवति एकोद्देशेनानेकविधाने वाक्यभेदप्रसङ्गात् , न चारुण्यादिवाक्यवदेकवाक्यता, अत्र विशिष्टक्रयश्रवणवत् यज्ञादिविशिष्टक्रियान्तराश्रवणात् । नापि दर्शपूर्णमासवाक्यवदेकवाक्यता, एकयज्युपादानेन तत्र वाक्यभेदाभावात् भिन्नपदोपात्तानेककारकविधाने वाक्यभेदः स्यादेव । तदुक्तम्—

अनेकपदसम्बद्धं यद्येकमपि कारकम् ।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते ॥ इति ।

अतो यथा "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधानेन वाक्यभेदात् जातपुत्रकृष्णकेशपदाभ्यामवस्थाविशेषो लक्ष्यते, एवं यज्ञादिपदैर्विहितं कर्मसामान्यं लक्षयित्वा तत् ज्ञानोद्देशेन विधीयते, इत्युक्तं साम्प्रदायिकैः । यथाहुः—

यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा
स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति ॥ इति ।

तस्मात् यथा तत्तत्फलसाधनकर्म्मणां संयोगपृथक्त्वन्यायेन ज्ञानोद्देशेन विधानम् , एवं भगवद्भक्तेरपि ।

सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः ।
यद्वाभिरोचते नाम तत्सर्वार्थेषु योजयेत् ॥

इत्यादिभिः सर्वफलोद्देशेन विहिताया ज्ञानोद्देशेन विविदिषावाक्ये विधानात् श्रवणाद्युपकारककर्मतुल्यतैव युक्ता । एवञ्च भक्तेर्ज्ञानसाधनत्वप्रतिपादकान्युक्तवाक्यान्यवयुत्यानुवादः, एकं वृणीते द्वौ वृणीते इतिवत् । ततश्च भक्तिविचारयोः समुच्चय एव युक्तो न विकल्प इति ।

उच्यते—

न तावद् ज्ञानोद्देशेन विहितानां कर्म्मणां साक्षात् ज्ञानजनकत्वं सम्भवति, अप्रमाणत्वात्, अतो द्वारापेक्षायां "धर्मेण पापमपनुदति" इति कल्मषनिबर्हणमेव द्वारत्वेनाश्रीयते नान्यत्, प्रमाणाभावात्, अतो युक्तः कर्म्मणां श्रवणोपकारकत्वेन समुच्चयः, भगवद्भक्तेरपि यदि कल्मषनिबर्हणमेव द्वारत्वेन श्रूयेत, तत एवं स्यात्, तस्यास्तु प्रणालिकान्तरं

श्रूयते । तथाहि--

भक्तिः परेशानुभवो विरक्ति
रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्यु
स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजन्
ततः परां शान्तिमुपैति साक्षात् ॥ इति

अस्यार्थो वृद्धैरेवं निरूपितः अत्र प्रपद्यमानस्येति=साधनभक्त्युपन्यासः । भक्तिः=प्रेमलक्षणा परेशानुभवो=भगवन्मूर्तिस्फूर्त्तिः अन्यत्र=गृहादौ, विरक्तिः=एष त्रिक एकस्मिन् काले भवति यथाश्नतो=भुञ्जानस्य तुष्टिः= सन्तोषः, पुष्टिः=धातूनामाप्यायनं क्षुधाध्वंसश्चेत्येष त्रिक एककालो भवति । एवं प्रतिभजनं प्रेमादित्रिके जायमाने जायमाने अनुवृत्त्या नैरन्तर्येणाच्युताङ्घ्रिं भजतो भगवति भक्तिः परमप्रेमलक्षणा यथा प्रह्लादादेः, विरक्तिरपि पूर्णा वान्तकर्त्तुरिव वान्ते, भगवत्प्रबोधः, पूर्णभगवन्मूर्तिस्फूर्तिः, एते त्रयोऽपि भागवतस्यानन्यपरस्य भवन्ति, ततः=पूर्णभगवन्मूर्तिस्फूर्तिपरिपाके । परां शान्तिं=परमोपशमात्मकं भगवत्स्वरूपं साक्षात्कृत्योपैति=प्राप्नोति । पूर्वश्लोकापेक्षया भक्तिविरक्तिभगवत्प्रबोध इति व्युत्क्रमाभिधानमेकफलत्वान्न दोषाय, भगवत्प्रबोधे परिपक्के सति भगवानेव पूर्णानन्दब्रह्मात्मना साक्षात्स्फुरतीति तस्य फलावस्थां सूचयितुं चान्ते निवेशः ।

अत एव चाभियुक्ताः ।

वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥ इति ।

तथान्यत्रापि प्रश्नपूर्वकं नित्यानित्यावस्तुविवेकेन विषयेभ्योषद्विरक्तस्य तत्रैव स्थितस्य अत एव विचारानधिकारिणः गुरुमुपसन्नस्य तच्छिक्षया भागवतधर्म्मांश्चानुतिष्ठतस्तदुत्थया श्रवणकीर्तनादिरूपसाधनभक्त्या नारायणचरणपरस्य उत्पन्नप्रेमरूपफलभक्तेरञ्जसैव मायातरणमुक्तम् ।

राजोवाच ।

अथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः ।
तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥

अकृतात्मभिः=अवशीकृतान्तःकरणैः । स्थूलधियः=स्थूले शरीरेऽहं धीर्येषां ते तथा ।

प्रबुद्ध उवाच ।

कर्म्माण्यारभमाणानां दुःखहत्यै सुखाय च ।
पश्येत् पाकविपर्यासं मिथुनीचारिणां नृप ॥

पाकस्य विपर्यासम्=फलवैपरीत्यम् । मिथुनीचारिणां=मिथुनीभूय प्रवर्तमानानाम् ।

नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥
एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथा मण्डलवर्त्तिनाम् ॥

सह तुल्येनातिशयेन ध्वंसेन च वर्तमानम्, यथा मण्डलवर्तिनाम्=यथा मण्डलपतीनां मिथः स्पर्द्धादि तद्वत् ।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥

शाब्दे=ब्रह्मणि वेदाख्ये न्यायतो निष्णातम् । परे च=ब्रह्मणि अपरोक्षानुभवेन निष्णातम् ।

तत्र भागवतान् धर्म्मान् शिक्षेद्गुर्वात्मदैवतः ।
अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥

गुरुरेवात्मा दैवतं च यस्य । अनुवृत्त्या=सेवया । वस्तुतः आत्मा आत्मप्रदश्चोपासकानाम् ।

सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ।

दीनेषु दयां समेषु मैत्रीमुत्तमेषु प्रश्रयं च इत्येवं यथोचितम् ।

शौचं तपस्तितिक्षाञ्च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्य्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥
सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषो येन केनचित् ॥

आत्मेश्वरान्वीक्षां सच्चिद्रूपेणात्मेक्षां नियन्तृरूपेणेश्वरेक्षाम् । कैवल्यम्=एकान्तशीलत्वम् । अनिकेततां=मठाद्यभिमानराहित्यम् ।

श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्कायदण्डञ्च सत्यं शमदमावपि ॥

श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्म्मणः।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम्।

हरेर्जन्मकर्म्मगुणानाञ्च श्रवणादि।

तदर्थं हर्य्युद्देशेन न तु स्वर्गाद्युद्देशेन। अखिलचेष्टितं सर्वं कर्म-विशेषतश्च यजनादि यत् तदर्थं शिक्षेदित्यर्थः।

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्।
दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदनम्॥

दारादीनप्यालक्ष्य परस्मै परमेश्वराय निवेदनं तत्सेवकतया समर्पणम्।

एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम्।
परिचर्यां चोभयत्र महत्सु नृषु साधुषु॥

उभयत्र=स्थावरे जङ्गमे च—

परस्परानुकथनं पावनं भगवद्यशः।
मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः॥
स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुम्॥

भक्त्या=साधनभक्त्या। सञ्जातया=प्रेमलक्षणया भक्त्या।

क्वचिद् रुदन्त्यच्युतचिन्तया क्वचित्
हसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः॥
इति भागवतान् धर्म्मान् शिक्षेत् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥ इति।

अतो भगवद्भजनस्य तत्वज्ञाने जनयितव्ये श्रवणव्यतिरेकेण प्रणालिका[न्तर]श्रवणान्न तस्य तदुपकारकत्वेन समुच्चयः। एवं भगवद्गीतास्वपि भगवद्भजनाध्यात्मविचारयोः किं युक्ततममिति प्रश्नपूर्वकं सत्यपि अध्यात्मविचारस्य तत्त्वज्ञानहेतुत्वे सक्लेशत्वात् भगवद्भक्तेरेव युक्तत्वं तदनुष्ठाने क्लेशाभावादित्युक्तं भगवता।

अर्जुन उवाच। [ गी० अ० १२ श्लो० १-७ ]

एवं सततयुक्ता ये भक्तास्त्वां पर्य्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः॥

श्रीभगवानुवाच।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।

श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।
ये तु सर्वाणि कर्म्माणि मयि संन्यस्य मत्पराः ॥
अनन्येनैव योगेन मां ध्यायन्त उपासते ।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ इति ॥

यज्ञादीनां तु तत्त्वज्ञाने जनयितव्ये पापक्षयहेतुत्वमात्रं श्रूयते न प्रणालिकान्तरम्, अतस्तेषामन्तःकरणशोधकत्वेनोपकारकत्वमात्रम्, अध्यात्मविचारस्य तु तत्त्वज्ञाने जनयितव्ये अन्यैव प्रणालिका साम्प्रदायिकैर्निरूपिता, कर्म्मभिः शुद्धान्तःकरणेन पुंसा साधनचतुष्टसंपत्तौ श्रवणे क्रियमाणे वेदान्तविचारेणाद्वितीये ब्रह्मणि वेदान्तानां शक्तितात्पर्य्यावधारणे प्रमाणासम्भावनानिवृत्तिः मननेन प्रमेयासम्भावनायां चित्तस्य तदेकाग्र्याऽयोग्यतारूपायां निदिध्यासनेन विपरीतभावनायां निवृत्तायां तत्त्वसाक्षात्कारोदये मुक्तिरिति । भगवद्भजने तूक्तपुराणवाक्यैः साक्षाद्भगवतान्यैव प्रणालिका उक्ता । भगवदर्पणबुद्ध्यानुष्ठितभागवतधर्म्मैर्विशुद्धान्तःकरणस्य उत्पन्नश्रद्धातिशयस्य पुरुषधुरन्धरस्य भगवच्छ्रवणकीर्तनादिसाधनभक्तेरनुवृत्तौ भगवति परमप्रेमलक्षणाऽनुरागात्मिका फलभक्तिरुत्पद्यते, तदा परमप्रेमास्पदभगवन्मूर्तिस्फूर्तिश्च उत्पद्यते। अत एव भगवद्भक्तेः परमपुरुषार्थत्वम् । न च कथं परमप्रेमास्पदत्वं भगवन्मूर्तेरिति वाच्यम् । "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति जगत्कारणत्वेन प्रतिपादितस्य श्रीभगवतो निर्णयवाक्ये "आनन्दाद्ध्येव खलु, इमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" इति आनन्दरूपत्वेन निर्णयात् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" "को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" इति च श्रवणात । अत एवोक्तं—

वृद्धैः ।

यस्यामी विधिवासवादिविबुधा वासेषु विस्फूर्जिताः

सन्तोषाश्रुलवीचयो नृपसुखान्येतान्यतो बुद्बुदाः ॥
अन्ये पुत्रकलत्रमित्रविषयाः सौख्योदया बिन्दवः
सोऽयं पूर्णसुखार्णवो विजयते नीलाम्बुदश्यामलः ॥ इति ॥

तेषामेव हरिकथाश्रवणादौ, अनुभवस्य वाक्यं प्रागुक्तं "गोविन्दे सुखरूपता प्रतिपदं वेदैः सदोदीर्यते" इति । तस्माद् युक्तमुक्तं प्रेमभक्तिसमकालं प्रेमास्पदभगवन्मूर्त्तिस्फूर्त्तिरिति । ततश्च देहगेहादौ विरक्तस्य भगवत्प्रसादात्तत्त्वज्ञानमिति । तत्सिद्धं भक्त्यध्यात्मविचारयोः प्रणालिकाभेदेनैकतत्त्वधीहेतुत्वम् । अत एव सत्यप्येककार्यत्वे कार्य्यप्रयुक्तानामप्येतद्धर्म्माणां न परस्परसाङ्कर्य्यम् । एकप्रणाल्याह्येककार्यत्वे साधनीभूतानां भवति धर्म्मसाङ्कर्यम् न प्रणालीभेदे । यथा व्रीहियवकपालानां सत्यप्येकपुरोडाशसाधनत्वे व्रीहियवयोस्तण्डुलनिर्वृत्तिप्रणाड्यैकपुरोडाशसाधनत्वाद्भवति धर्म्मसाङ्कर्य्यम, न कपालेषु, उक्तप्राणाड्या तत्साधनत्वाभावात् । अत्यन्तासन्निहितभिन्नप्रयोगविधिपरिग्रहाच्च न धर्म्मसाङ्कर्य्यम । तत्तदङ्गविध्येकवाक्यतापन्नेन हि तत्तत्प्रधान विधिना साङ्गप्रधानभावनाविधाने न भावनान्तराङ्गानामुपदेशतो प्राप्तिः । नाप्यतिदेशतः [ प्रकृतिविकृतिभावराहित्यात् अत उभ ] यत्र यावदपेक्षिताङ्गविधानेन पितृयज्ञवदपूर्वत्वात् । तत्सिद्धं भिन्नवाक्योपात्तयोरेककार्यत्वे सति उद्भिद्बलभिदोरिवार्थासिद्धौ विकल्प इति । न चाष्टविधदोषप्रसङ्गः । तादृशपुरुषधुरन्धरस्य भक्तावेवास्यादरेण साधनान्तरे प्रवृत्त्यभावेनोदितानुदितहोमवत् स्वीकृतप्रामाण्यहानादेरभावात् । यत्तु पापक्षयहेतुत्वं कर्मसाद्गुण्यहेतुत्वं चास्याः श्रूयत इति । तन्नानिष्टम् । तत्तदधिकारिणं प्रति संयोगपृथक्त्वन्यायेन तत्तत्फलहेतुत्वात् । अत एवोक्तम्—

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ इति ।

यद्वावयुत्यानुवादत्वमिति तत्र भक्तेरुक्तप्रणालिकया ज्ञानहेतुत्वस्य विविदिषावाक्यादसिद्धेः । तत्सिद्धं नानाविधकर्म्मभिः शुद्धान्तःकरणस्य जातश्रद्धातिशयस्य श्रवणकीर्तनादिरूपा भक्तिर्ज्ञानद्वारा मुक्तिहेतुरिति ।

अत्र च प्रमाणत्वेन कानिचिद्वाक्यानि उक्तानि अन्यान्यपि विश्वासाय लिख्यन्ते । तत्र कर्म्मणामन्तःकरणशोधकत्वेन भक्तावुपयोगे ।

स वै पुंसां परो धर्म्मो यतो भक्तिरधोक्षजे ।
अहेतुक्यप्रतिहता ययात्मा सम्प्रसीदति ।

आत्मा=मनः प्रसीदति ।

तत्कर्म्म हरितोषं यत् सा विद्या तन्मतिर्यया ।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ इति ।

भक्तेर्ज्ञानहेतुत्वे—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यम् ज्ञानञ्च तदहेतुकम्(१) ॥

अहेतुकम्=क्लेशरहितहेतुरहितम् ।

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत्पुरुषं पूर्णं मायाञ्च तदपाश्रयाम् ।
इमं लोकं तथैवामुमात्मानमुभयाश्रितम् ॥
आत्मानमनु येचेह ये रायः पशवो गृहाः ।
विसृज्य सर्वानन्यांश्च मामेव विश्वतो मुखम् ॥
भजन्त्यनन्यया भक्त्या तान् मृत्योरतिपारये ।
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ इति ।

ब्रह्मवैवर्त्तेऽपि—

यैरहं सुकृतैर्दृष्टः स्पृष्टः सम्पूजितः श्रुतः ।
स्मृतस्त एव मां नित्यं न त्यजन्ति कदाचन ॥ इति प्रकृत्या
अतो मयि रतिं कुर्यात् सर्वदुःखापहारिणीम् ।
यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा ॥ इति ।

तथा

बद्धा एव·········धं दृढयन्त्यविपश्चितः ।
अतः पशुपतिं देवं भजेत्पाशविमुक्तये ॥ इति ।
तथा विष्णुं प्रति शिववाक्यम् ।

त्वत्सेवनादेव तथा नरः परं पदं प्रपश्यत्यवशः सुदुर्लभम् ॥ इति ।
परं=श्रेष्ठम् । पद्यते ज्ञायत इति पदम् ।
यथा विष्णोः शङ्करस्याथ नाम्ना लोकः शोकं नाश्य मोक्षं प्रयाति ॥ इति च ।

भगवद्गीतास्वपि ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति ।
(अ० ७।श्लो० १४)
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।

---

(१) ज्ञानं यत्तदहैतुकमिति भागवते पाठः ।

स गुणान् समतीत्याशु ब्रह्मभूयाय कल्पते ॥ इति च ।
( अ० १४ श्लो० २६ )

तथा—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ इति ।
( अ० ८ श्लो० ८ )

विष्णुपुराणेऽपि ।

मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययामिति ।

शान्तिपर्वणि ।

तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च ॥
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥ इति ।

वृहन्नारदीये—

यन्नामधारणादेव महापातकनाशनम् ।
यं समभ्यर्च्य विप्रेन्द्र परं मोक्षो भवेद् ध्रुवम् ॥ इति ।

गारुडे—

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ।
तदा यत्नेन महता कुरु गोविन्दकीर्तनम् ॥ इति ।

आदित्यपुराणे—

हरेः सङ्कीर्त्तनं पुण्यं सर्वपातकनाशनम् ।
सर्वकामप्रदं लोके ह्यपवर्गफलप्रदम् ॥ इति ।

अत्र यद्यपि केषुचिद्वाक्येषु ज्ञाननिर्देशमन्तरेण भक्तेर्मुक्तिहेतुत्वं व्यपदिश्यते, तथापि "विमुक्तश्च विमुच्यते"। "तत्वमसि" "अयमात्माब्रह्मे"त्याद्यनेकवाक्यैरनवच्छिन्नानन्दरूपताया मुक्तेः सदातनत्वावगमात्कण्ठगतचामीकरन्यायेनानवाप्तत्वभ्रमनिवृत्तिमात्रस्य साध्यत्वात्तस्याश्च ज्ञानव्यतिरेकेणासम्भवात् वचनान्तरेषु तन्निवेशाच्च तदपि हेतुत्वेनोपसंहर्तव्यम्। "तत्तेजोऽसृजत" इति छान्दोग्यश्रुताविव वाय्वाकाशौ।

अन्येत्वेवमाहुः। ब्रह्मस्वरूपाणामपि जीवानां त्रिगुणान्तःकरणोपाधिक एव संसारः भावरूपाज्ञानसद्भावे प्रमाणाभावात्। आकाशादिप्रपञ्चस्यापि सत्यत्वान्न तद्धेतुत्वेनाप्यज्ञानसिद्धिः। "कथमसतः सज्जायेत" इति श्रुतौ प्रपञ्चसत्तया कारणसत्तासाधनाच्च प्रपञ्चसत्ताऽवश्यमाश्रयणीया,

ईश्वरस्य सत्यसङ्कल्पत्वश्रवणाच्च तत्कार्यस्य सत्यता, एवञ्च नाज्ञाननिवृत्त्यर्थं तावत्तत्त्वज्ञानापेक्षा, नापि जीवगतसंसारनिवृत्त्यर्थम्, अन्तःकरणोपाधिनिवृत्त्यैव तन्निवृत्तेः, जपाकुसुमनिवृत्त्यैव स्फटिकलौहित्यस्य न हि जपाकुसुमानुवृत्तौ सत्यपि तत्त्वज्ञाने लौहित्यं निवर्तते। त्रिगुणान्तःकरणनिवृत्तिश्च भक्त्यैवेत्युक्तं भगवता, "मां च योऽव्यभिचारेण" इति पूर्वोक्तश्लोके। न चैवमात्मज्ञानवैयर्थ्यम्, संशयनिरासेन भक्तिप्रवृत्तावुपयोगात्। अतश्च भक्तेरेव मुक्तिः। न चैवं "तमेव विदित्वाऽतिमृत्युमेती"ति श्रुतिविरोधः। अतिमृत्युपदस्य रूढत्वाभावेन योगेऽवश्यमाश्रयणीये मृत्युमतीत्यैतीति योगावलम्बनेनोपपदविभक्त्याश्रयणापेक्षया यस्यां भक्तौ सत्यां मृत्योरतिक्रमस्तामेतीत्येवं योगावलम्बनेन कारकविभक्त्याश्रयणस्यौचितत्वात्। एवञ्च ज्ञानस्य पूर्वकालताप्रतिपादिका क्त्वाश्रुतिरपि नानुपपन्ना, भक्त्यपेक्षितभजनीयासम्भावनानिवृत्तिहेतुत्वेन तस्य पूर्वकालीनत्वात्।

नचैवं—

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥

(गी० अ० १८ श्लो० ५५)

इत्यत्र तृतीयाश्रुत्या भक्तिर्ज्ञाने विनियुज्यते, "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यत्रैन्द्री यथा गार्हपत्योपस्थाने, ततश्च तद्विरोधः स्यादिति वाच्यम्। अत्राभिहितोऽभिपूर्वो जानातिरभिज्ञां पुनःपुनरालोचनाख्यां प्रत्यभिज्ञामभिधत्ते। एवञ्च भक्त्युपकारिपूर्वज्ञानं तत् साध्यभक्त्या पुनःपुनर्जायमानभजनीयासम्भावनानिवृत्तिरूपस्वदार्ढ्यायापेक्ष्यते, एवं सति जायमानानुरागाख्यदृढभक्त्यनन्तरं भगवत्स्वरूपं विशतीत्येवंपरत्वादस्य वाक्यस्य को विरोधः। अत एव "यो वै भूमा तत्सुखम्" आत्मैवेदं सर्वमित्युपक्रम्य" स वा एष एवंपश्यन्नेवंमन्वान एवंविजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति छन्दोगश्रुतौ पश्यनात्मरतिरिति ज्ञानस्यैव भक्त्यपरपर्यायरत्यङ्गत्वं प्रतीयते, दण्डी प्रैषानन्वाहेत्यत्र दण्डस्येव प्रैषानुवचने। सस्वराड् भवतीत्यत्र स्वराट् श्रुत्या व्यवहितात्मरतेरेव पुरुषस्य परामर्शाच्च भक्त्यपरपर्यायरतेरेवफलवत्त्वावगमाज् ज्ञानं प्रति प्राधान्यम्। "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यत्र ब्रह्मणि संस्था रतिर्यस्येत्येवमनुरागभक्तेरमृतत्वहेतुत्वप्रतिपादनाच्च। तत्सिद्धं भक्तिर्मुक्तिशेषभूता न ज्ञानमिति।

तदिदं वेदान्तानुसारिणो वैष्णवा अनुरागात्मिकायाः फलभक्तेरा-

त्यन्तिकपरमपुरुषार्थत्वेनान्यत्र शेषत्वमसहन्तो न मन्यन्ते । तथाहि । न तावदज्ञाने मानाभावः शक्यो वक्तुम् । "न तं विदाथ य इमा ज जानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्याचासुतृप उक्थशासश्चरन्ति" ।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

इत्यादिवचनैरावरकत्वेन भेदप्रयोजकत्वेन मोहादिविक्षेपजनकत्वेन च तस्य प्रतिपादनात् । "तन्मनोऽकुरुत" इतिश्रुत्या जन्यत्वेनावगतस्यान्तःकरणस्यानादिभेदोपाधित्वायोगाच्च ।

यदप्युक्तं प्रपञ्चः सत्य इति । तन्न । कार्य्यात्मकप्रपञ्चस्य भावकार्यत्वेनोपादानापेक्षायाम्, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "मायां तु प्रकृतिं विद्यात्" इत्यादिवाक्यावगतमायोपादानत्वसम्भवेऽश्रुतानेकादृष्टपरमाणुकल्पनाया असम्भवात् । मायोपादानकस्य च मायिकव्याघ्रादिवन्मिथ्यात्वावश्यम्भावात् । किञ्च "यतो वा" इत्यादिवाक्यात् "सत्यं खलु, इदं ब्रह्म तज्जलानि"ति वाक्याच्चोत्पत्तिस्थित्याद्याधारत्वेनोपादानत्वं भगवतोऽवश्यं वाच्यम् । निमित्तमात्रत्वे कुलालवत्स्थित्यादिप्रयोजकत्वायोगात्, "स ऐक्षत बहु स्याम्" इतीक्षणाकारायोगाच्च । कुलालादावहं घटः स्यामितीक्षितृत्वादर्शनात्, तस्मात्कार्य्यानुकूलज्ञानवत्त्वेन कर्तृभूतस्याप्युपादानत्वमस्त्येव । तदुक्तं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [ उ० मी० अ० १ पा० ४ सू० २३ ] इति । "हरिः प्राणभृतामाद्यः स्वयं प्रकृतिरीश्वरः" इति च । तच्चोपादानत्वं न मृदादिवत्सम्भवति, घटादेर्मृद्घट इति मृत् इति मृत्स्वभावतावगमवत्प्रपञ्चस्य चित्स्वभावतानवगमात् । नापि केवलं प्रकृत्याधारत्वेन, घटोपादानमृदाधारस्य भूतलादेस्तथाभावादर्शनात् । अतश्च—

अज्ञातशुक्तितो यद्वद्रजतं तादृगेव सः ।
न दृश्यते मृदः कार्यं तत्स्वभावविलक्षणम् ॥

एवं चाध्यस्तस्य वास्तवं स्वरूपमधिष्ठानमेवेति यद्रजतमभात् सा शुक्तिरितिवत् "सर्वं खल्विदं ब्रह्म" "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते", "वासुदेवः सर्वम्" इति च सामानाधिकरण्यं सङ्गच्छते । विवर्त्तमानत्वेन विवर्त्तमानाविद्याधिष्ठानत्वेन चाविद्यात्मनोरुभयोरप्युपादानत्वान्नोभयोपादानत्वप्रतिपादकवाक्यविरोधः । तस्माद्

ज्ञाननिवर्तनयोग्यमज्ञानमेव मायाशब्दवाच्यं प्रपञ्चोपादानमिति तत्कार्यस्याप्यन्तःकरणादिप्रपञ्चस्य ज्ञाननिवर्त्यत्वं सङ्गच्छते । लोके तत्त्वज्ञानस्य सविलासाज्ञाननिवर्त्तकत्वदर्शनात् । अनुरागस्य तु साक्षात्तन्निवर्तकत्वं न क्वचिद् दृष्टं श्रुतं वेति तदाश्रयणायोगः । एवञ्च, "तत्त्वविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायामिति", "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" इति च सङ्गच्छते । अत्र चैवकारो भिन्नक्रम इत्युक्तम् । उक्तविधो हि पुरुषधुरन्धरः श्रवणकीर्तनादिना जायमाननिरतिशयपरमानन्दैकरसभगवन्मूर्तिस्फूर्त्तावेवानुरक्तः सन्न किञ्चित्कामयते । भक्त्या प्रसन्नस्तु भगवान्स्वयमेव कृपया तच्चेतस्यखण्डाद्वितीयरूपेणाविर्भूतः स्वज्ञानेनाज्ञानं निवर्तयतीति नाज्ञानतत्कार्यनिवृत्तिं प्रति भक्तेः शेषत्वम् । तदुद्देशप्रवृत्तकृतिव्याप्यत्वाभावात् । यथामिक्षोद्देशप्रवृत्तकृतिव्याप्यस्य दध्यानयनस्य न वाजिनं प्रति शेषता तद्वत् ।

यच्च कथमसतः सज्जायेतेत्याद्युक्तम् । तन्न । यतः—

साधकत्वादिदंशस्य वक्तव्या सत्स्वरूपता ।
तत्सम्बन्धात्तु दृश्यानां पूर्ववत् सत्स्वरूपता ॥
एवं सदिति विज्ञानं दृश्येष्वेकविधं भवेत् ।
लाघवं च तथात्वे स्यात् सत्ताजातेरकल्पनात् ॥

परेषां हि सत्ता जातिरेका नित्या च, द्रव्यादिषु च तत्प्रतिभासो मुख्यः, सामान्यादिषु अमुख्यः । ज्ञानानि चानेकानि द्रव्यादीनाञ्च तत्सम्बन्धः । स च स्वरूपात्मक इति केचित् । विषयता स्वतन्त्रेत्यन्ये ।

अज्ञानब्रह्मकारणवादिनस्तु ।

स्फुरणं सद्रूपं, तदसत्त्वे व्यवहारासम्भवेन विश्वासिद्धिप्रसङ्गात् । तच्चैकम्, तत्तच्छरीरतत्तद्विषयपरामर्शव्यतिरेकेण स्वरूपतो भेदानुपलम्भात् अत एव नित्यं व्यापकञ्च । कालान्तरे देशान्तरे च व्यवहारदर्शनात् । नैयत्ये च य एवार्थस्तेन संसृज्यते स एव व्यवहारगोचरो भवति । संसर्गश्च न संयोगः, रूपादौ तदयोगात्, समवाये स्फुरणस्य चाक्षुषत्वप्रसङ्गात्, रूपस्य वा चेतनत्वप्रसङ्गात्(१) । स्वरूपस्य प्रत्येकपर्य्यवसन्नत्वेन सम्बन्धत्वायोगात्, अतिरिक्तविषयताभ्युपगमे तस्या नित्यत्वे सर्वदा सर्वविषयभानप्रसङ्गात्, जन्यत्वे अ-

(१) स्फुरणे रूपप्रतियोगिकसमवायाभ्युपगमे स्फुरणस्य रूपवत्तया चाक्षुषत्वप्रसक्तिः, रूपे स्फुरणप्रतियोगिकसमवायाभ्युपगमे च रूपस्य चेतनत्वप्रसङ्ग इति भावः ।

भावादिनिष्ठायास्तस्या उपादानान्तराभावेनाभावादेरुपादानत्वेन द्रव्यत्वापातात्। अक्लृप्तकल्पनाया अयोगात्। तस्मात्तत्र विषयाणामध्यस्तत्वं वाच्यम्। अत एव द्रव्याद्यभावान्तानां सद्रूपप्रकाशेऽध्यासाद्स्तित्वव्यवहार एकरूपः सङ्गच्छते, अनेनैव चाशयेन श्रुतिः। "कथमसतः सज्जायेत" इति। असतो ह्युपादानत्व उक्तरीत्याऽनिर्वचनीयस्य प्रपञ्चस्य सत्वप्रतिभासो न स्यात्, असत्वेनैव प्रतिभासः स्यात्। "नासदासीन्नो सदासीत्" "मायां तु प्रकृतिं विद्यात्" इत्यादिना मायिकत्वेनानिर्वचनीयस्य सदधिष्ठानत्वे तु तत्सम्बन्धात्सत्वप्रतिभास उपपद्यते पृथिवीसम्बन्धाज्जले गन्धप्रतिभासवत्। अत एव, "यत्र त्रिसर्गो मृषा" इत्यत्र त्रिसर्गः=त्रिगुणात्मकमायाकार्य्यमतो मिथ्याभूतोऽपि यत्र सदधिष्ठाने अमृषेव भवतीत्युक्तं श्रीधरस्वामिभिः। तस्मात्कथमसतः सज्जायेतेति श्रुतिः प्रपञ्चसत्वप्रतिभासेनास्त्कारणत्वनिराकरणपरावश्यंवक्तव्या न तु प्रपञ्चसत्यत्वप्रतिपादनपरा वाक्यभेदापत्तेरिति। सत्यसङ्कल्पत्वश्रुत्या चेश्वरेच्छाया अन्येनाप्रतिघात उच्यते, स चाङ्गीक्रियत एव।

यदुक्तमन्तः करणतन्निमित्तसंसारनिवृत्तिर्भक्त्या न तु तत्वज्ञानेनेति तत्र तत्वज्ञानस्य सविलासाज्ञाननिवर्तकत्वं रजतभ्रमादौ दृष्टम्, कामिन्यनुरागस्य तत्साक्षात्कारहेतुत्वञ्च दृष्टम्।

वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानञ्च तदहैतुकम्॥

इत्यादिना श्रुतं च भक्तियोगस्य ज्ञानहेतुत्वम्। अनुरागस्यान्तःकरणादिनिवृत्तिहेतुत्वं तु न दृष्टमित्यायुक्तमेव। न च सोपाधिकभ्रमनिवृत्तिस्तत्वज्ञानान्न दृष्टेति वाच्यम्। लौहित्यं कालत्रये नास्तीत्येवं बाधरूपायास्तन्निवृत्तेस्तत्वज्ञानसाध्यत्वदर्शनात्। न हि जपाकुसुमापगममात्रेणासन्निकृष्टे स्फटिके तादृशी बुद्धिरुदेति। अनिर्वचनीयस्य च संसारस्य निवृत्तिर्बाधरूपैव न तु पराभिमतध्वंसरूपेत्युक्तमविद्यानिवृत्तिनिरूपणे।

तत्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्य्येण नासीदस्ति भविष्यति॥ इति।

स्वतन्त्रध्वंसाङ्गीकारे सकलश्रुतिसिद्धाद्वैतव्याकोपः। आशुतरविनाशित्वेन च स्वत एव तन्निवृत्तेस्तत्रोपाधिनिवृत्त्यनपेक्षणात्। "मां च योऽव्यभिचारेण" इत्यत्र यद्यपि ज्ञानं न श्रुतं तथापि बहुषु वचनेषु तच्छ्रवणात् तदपि हेतुरित्युक्तम्।

यच्चातिमृत्युपदे बहुव्रीह्याश्रयणेन भक्तिपरत्वम् । तन्न । सन्निधानाभावेऽन्यपदार्थत्वेन भक्तेर्ग्रहीतुमशक्यत्वात् । न हि सन्निधानाभावे देवदत्तं चित्रगुपदमुपस्थापयति । तदुक्तं-"सर्वत्र प्रसिद्धोपदेशात् ( उत्तमी०अ० १ पा. २ सू० १ ) इत्यत्र "मनोमयः प्राणशरीर" इति वाक्यगतप्राणशरीरशब्दस्य सन्निहितब्रह्मपरत्वं वक्तुं वाचस्पतिमिश्रैः "समासः सर्वनामार्थः सन्निकृष्टमपेक्षते" इति । असञ्जातविरोधित्वेन प्रथमश्रुतयोरतिमृत्युपदयोः स्वार्थपरत्वे सम्भवति चरमश्रुतविभक्त्यनुरोधेन भक्तिपरत्वकल्पनायोगाच्च । नचैवमिन्द्रपीतशब्देऽपि तत्पुरुषाश्रयणमेव स्यात्, न(१) बहुव्रीह्याश्रयणमिति वाच्यम् । भव[भाग] प्रदानानां सन्निधानात् (२)प्रातःसवनशब्दसामानाधिकरण्यात्, गायत्रच्छन्दस इति बहुव्रीहिप्रायपाठाच्च तदाश्रयणात् । किञ्च नान्यः पन्था इति भक्तौ न मार्गान्तरनिषेधः, भजनीयनिर्णयवद् भक्तिस्वरूपनिर्णयस्य कर्मणाञ्च तत्रोपयोगात् । न च भक्तिव्यतिरेकेण मुक्तौ मार्गान्तरनिषेधः, वाक्यभेदापत्तेः । न हि तमेव विदित्वा भक्तिमेतीत्युक्ते मुक्तो मार्गान्तरनिषेधः सिध्यति, येनानुवादत्वेन एकवाक्यता स्यात् । अस्मन्मते तु अतिमृत्युमेतीति मुक्तिप्रतिपादनात् तत्र एवकारसिद्धो मार्गान्तरनिषेधः, नान्यः पन्थेत्यनेनानूद्यते । न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति वत् [ मी० अ० ९ पा० ४ अधि ४ [ । एतावांस्तु विशेषः । तत्र मुख्यत्वान्निषेधस्य विधित्वं तदितरस्य चानुवादत्वं स्वीकृत्योभयोरेकवाक्यत्वमित्यूहमुख्यत्वादेवकारसंबद्धत्वं स्वीकृत्येति । अतो न वाक्यभेदः । न च भक्तिप्रतिपादनपक्षेऽपि तं विदित्वैव भक्तिमेति न भजनीयनिर्णयव्यतिरेकेणत्येकवाक्यता सम्भवतीति वाच्यम् । "विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम्" इति अजामिलस्य भजनीयनिर्णयव्यतिरेकेणापि नामसङ्कीर्तनरूपायाः भक्तेः प्रतिपादनात् । तस्मादस्यां श्रुतौ अनेकसाध्यत्वेन मुक्तिप्रतिपादनमेवाभियुक्तोक्तं युक्तम् । तथा चैतत्समानार्था तैत्तिरीय

( १ ) तथाच मीमांसातृतीयाध्यायद्वितीयपादीयैकादशाधिकरणे इन्द्रपीतशब्दे बहुव्रीहित्वस्य निर्णीतत्वात् तदधिकरणविरोध इति भावः ।

( २ ) तदुक्तं शाबरभाष्ये तृतीयाध्यायद्वितीयापदे सप्तविंशतिसूत्रे "मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽभिषुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति ।

श्रुतिः। "तमेव विद्वानमृत इह भवती"ति।

यच्च भक्त्या मामभिजानातीत्यस्य भक्त्या स्वदार्ढ्यार्थं भजनीयनिर्णयोऽपेक्ष्यते, इति व्याख्यातम्। तद्, वाक्यस्वरसाविरुद्धम्। तथाहि अभिपूर्वको जानातिः प्रत्यक्षज्ञाने वर्त्तते, यां काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयादित्यत्र तथा दृष्टत्वात्। तद्विषयत्वेन च निरतिशयपरमानन्दरूपा भगवन्मूर्तिर्मच्छब्दोक्ता सम्बध्यते, भक्तिश्च तृतीयानिर्देशात् करणत्वेन। भक्त्या चाविर्भूतः परमात्मा स्वात्माद्वितीयरूपेण भक्तैरवगम्यते, इत्याशयेनोक्तं ततो मामिति, विशते तदनन्तरमिति च साक्षात्कारफलनिर्देशः। सोऽयमर्थो वाक्यात् यथाश्रुतादवगम्यते, न दार्ढ्यादिः, लक्षणायां मानाभावात्। यदा तु प्रकरणमालोच्यते तदा नेदं वाक्यं श्रवणकीर्तनादिरूपां साधनभक्तिं तज्जन्यामनुरागाख्यां फलभक्तिं वाधिकृत्य पठितं, किन्तु ज्ञानयोगाधिकारिणं प्रति तं योगमधिकृत्य। तथाहि-"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्यादिना सत्वशुद्ध्यर्थं स्वकर्मानुष्ठानमुद्दिश्य—

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥

[गी० अ० १८ श्लो० ४८]

इत्यनेन शुद्धसत्वस्य शमादिपूर्वकं संन्यासं ज्ञानयोगसाधनमुपदिश्य —

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे।

[गी० अ० १८ श्लो० ५०]

इति ज्ञानपूर्वकं साधनचतुष्टयसम्पन्नं प्रति निदिध्यासनान्तं ज्ञानयोगमुपदिश्य तत्फलं च प्रमाणासम्भावनादिनिवृत्तिं "ब्रह्मभूयाय कल्पते" इत्यनेनाभिधाय—

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥

[गी० अ० १८ श्लो० ५४]

इति ब्रह्मज्ञानैकनिष्ठस्य प्रसन्नात्मनस्तदेकाग्रचित्तस्य रागादिविक्षेपाभावात् समस्य सतः पुंसः प्राप्यत्वेन सर्वेषु भूतेषु परमात्मभावनां सर्वं परमात्मन्यध्यस्तं स एव सत्य इत्येवंरूपां बुद्धिं भक्तिशब्देन निर्दिश्य पठितमेतत् "भक्त्या मामभिजानाति" इति। अतश्चात्र पूर्वोक्तबुद्धिविशेषस्यैव भक्तिशब्दोक्तस्य फलमुच्यते, न तु श्रवणकीर्तनादेः, तदधिकारेणानुक्तत्वात्। न हि दधिमध्वादिद्रव्यकं यागमधिकृत्य

पठितं "चित्रया यजेत पशुकामः" इति वाक्यं प्रकृतयागमपहाय चित्रत्वस्त्रीत्वविशिष्टपशुकारकस्य फलसम्बन्धायेष्ट, एवं च ज्ञानोद्देशेन साधनमनुतिष्ठन् तद्बलेन ज्ञानं लभते, इति स्वातन्त्र्योपदेशोऽप्युपपद्यते । श्रवणकीर्तनादिरसिकस्य तु न ज्ञानोद्देशेन तदनुष्ठितिरिति न तल्लाभे स्वातन्त्र्यम् , भगवानेव तु कृपया ज्ञानमस्मिञ्जनयतीत्युक्तमधस्तादिति ।

यदपि छन्दोगश्रुतिपर्यालोचनया ज्ञानस्य भक्त्यङ्गत्वमुदाजहार । तदपि न । "यत्र नान्यत्पश्यति नान्यच्छृणोति" इत्यनवच्छिन्नब्रह्माधिकारे पठितायास्तस्यास्तद्विषयज्ञानस्य सकलप्रपञ्चनिवृत्तिहेतोर्भेदसापेक्षभक्त्यङ्गत्वेन प्रतिपादनेऽसामर्थ्यात् । अत एव श्रुतिः । "यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत्" इति । "स स्वराड् भवति" इति च । स्वप्रकाशचैतन्यरूपस्यैव सतस्तद्भवनं कण्ठगतचामीकरन्यायेनानवाप्तत्वादिभ्रमनिवृत्तिः । सा च तत्त्वज्ञानसाध्या नत्वनुरागसाध्येत्युक्तम् । तथा च श्रुतिः । "तरति शोकमात्मवित्" इति । "आत्मरतिरात्मक्रीड आत्ममिथुनः" इति तु वस्तुस्वाभाव्येन ज्ञानिनामपि जीवन्मुक्तानां जायमानस्य भगवत्यनुरागस्यानुवादः । यथोक्तम्—

आत्मारामाश्च मुनयो निर्ग्रन्था (१)अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ इति ।

"ब्रह्मसंस्थोऽमृतत्वमेति" इत्यपि वाक्यमनवच्छिन्नात्मप्रकरणपाठात् परमहंसानां श्रवणादिद्वारा मोक्षप्राप्तिमाहे [ त्याहुरि ] त्यलमतिविस्तरेण । तत्सिद्धं मुक्तिहेतुतत्त्वज्ञाने मार्गद्वयम् , अध्यात्मविचारो भक्तिर्वेति ।

सेयं भक्तिः सत्सङ्गसाध्या । यथोक्तम्—

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥
दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम् ॥
संसारेऽस्मिन् क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् ।
न रोधयति मां योगो न सांख्यं धर्म एव च ॥

(१) लौकिकार्थप्रबन्धधारणरहिता निरपेक्षा इति यावत् ।

न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ।
व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ॥
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् ।
महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥
तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।
मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ॥
मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ।
मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च ॥
त एते साधवः साध्वि ! सर्वसङ्गविवर्जिताः ।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥ इति ।

सेयं भक्तिर्वक्ष्यमाणश्रवणकीर्तनाद्यनेकप्रकारा । तत्र श्रवणादीनां क्वचित्समुच्चयः श्रूयते, क्वचिच्च नैरपेक्ष्यम् ,

तत्र समुच्चयस्तावत्—

तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छता भयम् ॥ इति ।
शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ इति ।

अत्र चैकवाक्यगतत्वाद्दर्शादिवत्समुच्चयावगमः । न चैकोद्देशेनानेकविधाने कथमेकवाक्यतेति वाच्यम् । यथा ह्येकयजिनोपादानात्षड्यागविधानेऽपि न वाक्यभेदः, तथेहापि । त एवेत्येकेन तच्छब्देन पुंविशेषणत्वेनाऽनेकेषामुपादानात् ।

तथा,

शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् ।
नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ इति ।
तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ इति च ।

तथा ।

तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान् नृणाम् ॥ इति ।

अथ नैरपेक्ष्ये तत्र श्रवणे तावत् ।

पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु सम्भृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ इति ।

पानेन ते देवकथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥ इति च ।

कीर्तनेऽपि ।

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ इति ।

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद्बिभेति स्वयं भयम् ॥ इति च ।

स्मरणेऽपि ।

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति ।
सत्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ इति ।

विषयान्ध्यायतश्चित्तं विषयेषु विलीयते(१) ।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥ इति च ।

पूजनेऽपि ।

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दाश्वानविक्लवमनाः कथमार्तिमिच्छेत् ॥ इति ।

नूनं विमुष्टमतयस्तव मायया ते
ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं (२)कृपणोपभोग्य-
मिच्छन्ति यत्स्पर्शजं (३)नरकेऽपि नृणाम् ॥ इति च ।

एवञ्च समुच्चितत्वेन श्रुतानां नैरपेक्ष्यश्रवणं यज्ञादीनामिव सत्व-

---

(१) विषज्जत इति श्रीभागवते पाठः ।

(२) कुणपोपभोग्यमिति श्रीभागवते पाठः ।

(३) निरयेऽपीति श्रीभागवते पाठः ।



शुद्धौ श्रवणकीर्तनादीनामनुरागरूपफलभक्तिद्वारा भगवन्मूर्तिस्फूर्तौ सम्भवत्समुच्चयं सूचयति। दृष्टार्थत्वस्योभयत्राविशेषात्। यथाऽऽम्नानैकप्रवणतागम्या चित्तशुद्धिर्यावद्भिः कर्मभिर्भवति तावन्त्येवानुष्ठीयन्ते। एवमुक्तविधा भगवन्मूर्त्तिस्फूर्तिर्यावद्भिर्भवति तावन्त्यनुष्ठेयानीति। न च नैरपेक्ष्यवाक्यानामाग्नेयादिवाक्यवदुत्पत्तिपरता किं न स्यादिति वाच्यम्। प्रत्येकं फलसम्बन्धश्रवणात्। नाप्ययवयुत्यानुवादत्वम्।

श्रुतः सङ्कीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा।
नृणां धूनोति भगवान् हृत्स्थो जन्मायुताशुभम्॥ इति।
यानीह विश्वविलयोद्भववृत्तिहेतुः
कर्माण्यनन्यविषयाणि हरिश्चकार।
यस्त्वङ्ग! गायति शृणोत्यनुमोदते वा
भक्तिर्भवेद्भगवति ह्यपवर्गमार्गे॥
इति च वाशब्दविरोधात्।
महादेवमहादेवमहादेवेति यो ध्वनिः।
स एव मुक्तिकन्यायाः पाणिग्रहणडिण्डिमः॥ इति।
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।
यत्र सङ्कीर्त्तनेनैव मुक्तबन्धः परं व्रजेत्॥

इति चवकाराविरोधाच्च। अत एवाग्ने यन्निर्वपेद्दकाम इति वत्र कर्म्मान्तरत्वमनन्तरवाक्ये शक्यम्। एवकारश्रवणे हि न कर्म्मान्तरत्वबुद्धिर्भवतीत्युक्तं "पुनराधेयमेव तस्य प्रायश्चित्ति"(१)रित्यत्र। ततश्च वाशब्दैवकारयुक्तवाक्येभ्यः स्पष्टं निरपेक्षाणां मुक्तिहेतुत्वावगमान्न समुच्चितानामेव साधनत्वम्। एवञ्च येष्वपि पूर्वोक्तेषु "पिबन्ति ये भगवत आत्मनः सतां कथामृतम्" इत्यादिषु नैवकारादिश्रुतः, तेष्वपि यथाश्रुता ज्ञाननिरपेक्षसाधनतापरतैवाङ्गीकार्य्या? न तु तेजः श्रुतौ वाय्वाकाशयोरिव साधनान्तराणामुपसंहारः, यदि समुच्चितसाधनतैव निर्णीता स्यात्तर्ह्युपसंह्रियेतापि, न त्वेवमस्ति, नापि कर्म्मभेदकल्पनायुक्ता, तथासति मूलभूतानेककल्पनागौरवात्। नाप्यनुवादत्वेनानर्थक्यं सम्भवति। "श्रावयेच्चतुरो वर्णान्" इति विध्युपात्तानामानर्थक्यायोगात्। तथा हि। अत्र वाक्ये चत्वारो वर्णाः पुराणवाक्यानि शृणुयुरित्येवं वाक्यार्थ इत्युक्तमभियुक्तैः। एवञ्चाध्ययनकर्म्मत्वेन श्रुतस्य

(१) एतच्च पूर्वमीमांसीयषष्ठाध्यायचतुर्थपादषड्विंशतिसूत्रव्याख्यानभाष्ये द्रष्टव्यम्।

स्वाध्यायस्येव श्रवणकर्मत्वेन श्रुतानां पौराणवाक्यानां नानर्थक्यं युक्तम् । निष्प्रयोजनस्य कर्मत्वायोगात् । "पुराणन्यायमीमांसा" इति विद्यास्थानत्वप्रतिपादनायोगाच्च । "पुराणं पञ्चमो वेद" इत्यादिवाक्यविरोधाच्च । तस्माद्देवताविग्रहन्यायेन पुराणप्रतिपादिततत्तत्संवादाश्रवणात् तं तं पुरुषं प्रत्युक्ततत्तद्वाक्यानांज्ञाननिरपेक्षसाधनत्वप्रतिपादनेनार्थवत्त्वाऽऽनर्थक्यम् । एकं बोधयितुं प्रयुक्तादपि वाक्यादन्यस्य साधनताबोधो युक्त एव देवदत्तबोधार्थमुक्तात् शिवसुपथत्वप्रतिपादकवचनाद्यज्ञदत्तज्ञानम् । अत एव हि एकशाखापतितानामपि "आत्मा वारे द्रष्टव्यः श्रोतव्यः" "तस्माद् ब्राह्मणो पाण्डित्यं निर्विद्य" "शान्तो दान्त" इत्यादीनां संवादभेदाच्छ्रवणाविधित्वमुक्तमुत्तरतन्त्रे । प्रतिकल्पञ्च संवादाश्रवणान्न वेदापौरुषेयत्वविरोधः । तत्सिद्धं वक्ष्यमाणानेकप्रकारा भक्तिः समुच्चितैकैका वा ज्ञानद्वारा मुक्तिहेतुरिति । तथा च—

गोपालपूर्वतापनीये ।

"यो यो ध्यायति रसति भजति सोऽमृतो भवति इत्युपक्रम्य" "किं तद्रूपम् इति ध्येयप्रश्नपूर्वकं "गोपवेषमभ्राभं तरुणं कल्पद्रुमाश्रितम् । तदिह श्लोका भवन्ति,

सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ।
द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम् ॥
गोपगोपीगवावीतं सुरद्रुमतलाश्रयम् ।
दिव्यालङ्करणोपेतं रत्नपङ्कजमध्यगम् ॥
कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् ।
चिन्तयञ्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥

इत्यनेन निरपेक्षध्यानस्य फलसम्बन्ध उक्तः, ततस्तस्य "पुनारसनम्" इत्यादिना "जपन्" इत्यन्तेन रसतिशब्दार्थत्वेन जपं व्याख्याय तन्मात्रस्य ब्रह्म सम्पद्यत इति फलसम्बन्धो निर्दिष्टः । तदनन्तरं "भक्तिरस्य भजनम् । तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन्मनःकल्पनम्" इत्यनेन ध्यानजपाभ्यां फले जनयितव्ये आन्तरालिकः प्रणालिकाविशेषः पूर्वोद्दिष्टभजतिशब्दार्थत्वेन कथितः । तत्रेहामुत्रोपाधिनैराश्येनैवेति विरक्तिरुदिता । तृतीया सहयोगे । अमुष्मिन्निति गोपवेषमित्यादिनोक्तस्य भगवत्स्वरूपस्य निर्देशः । मनः कल्पनमिति च तद्विषयानुरागस्फूर्त्तेः । एकारसहितया चोक्ततृतीयया त्रयस्यैककालतायाः । एवञ्च "भक्तिः परेशानुभवो विरक्तिरन्यत्र चैष त्रिक एककाल" इत्यस्य मूलमेषा श्रुतिः, एतदेव नैष्कर्म्यम्" इत्यनन्तरवाक्ये चैतच्छब्देन मनः कल्पनशब्दोक्तभ-

गवन्मूर्तिस्फूर्तिनिर्देशः। नैष्कर्म्यम्=तत्त्वसाक्षात्कारः। स्फुरन्तीनां भगवन्मूर्तिरेव तत्त्वरूपेण स्फुरतीत्याशयेन सामानाधिकरण्यम्। एतच्च भगवदनुकम्पयैवेत्येवकारार्थः। चकारः साधनेनैककालतां वदन्निह मुक्तिं सूचयति। तदनया विस्तरोक्त्या "यो यो ध्यायति" इति संक्षेपोक्तिरेव व्याख्याता। तत्रोद्देश्यत्वविधेयत्वसमर्पकयोर्यच्छब्दतच्छब्दयोर्व्यत्यासः। "अमृतो भवति" इत्यत्र चेच्छब्दस्याध्याहारः। ध्यायति रसतीत्यत्र च पञ्चमलकारत्वम्। तदयमर्थः, य उक्तप्रणाल्याऽमृतत्वकामः स ध्यायेत् जपेच्चेति। एवमुक्तविध्यपेक्षितसत्त्वशुद्धिसाधनत्वेनेश्वरार्पणबुध्या कर्म्मानुष्ठानं वक्तुमुक्तमग्रे "कृष्णं तं विप्रा बहुधा यजन्ति" इति। एतावता ग्रन्थेन ध्यानजपयोर्विकल्पमुक्त्वा समुदितानां श्रवणकीर्त्तनादीनामपि मुक्तिहेतुत्वमुक्तम्। "गोविन्दं सन्तं बहुधाऽऽराधयन्ति" इति। अत्र च बहुधाऽऽराधयन्तीत्यस्य श्रवणकीर्तनस्मरणपादसेवनार्चनवन्दनदास्यसख्यात्मनिवेदनादिभिः सेवन्त इति व्याख्यानमुक्तं तापनीव्याख्याने। अस्य च विधेः फलाकाङ्क्षायां पूर्वोक्तस्य सप्रणालिकस्य फलस्यानुषङ्गेन सम्बन्धः, सन्निधानात्। सत्त्वशुध्यर्थकर्म्मणाञ्च। न चाऽऽमनहोमवाक्यवदेतस्याङ्गप्रतिपादकत्वम(१)। कीर्तनस्मरणरूपत्वेन पूर्वविहितध्यानजपयोरत्रोपादानेनाङ्गाङ्गिभावप्रतिपादनायोगात्। न चात्र विध्यश्रवणम्, पूर्ववत्पञ्चमलकाराश्रयणात्। अत एवान्ते, उपसंहृतं "तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्, तं रसेत्, तं यजेत्, तं भजेत्" इतीति। अत्र हि तं भजेदित्यस्य तमाराधयेदित्यर्थ इत्युक्तमेतद्व्याख्याने। तदनया श्रुत्या सिद्धमेतद्भक्तिरुक्तप्रणालिकया मुक्तिहेतुरिति। एवञ्च भक्त्यध्यात्मविचारयोः पौराणश्रौतत्वेन विषयाशिष्टत्वात् विकल्प इत्यपास्तम्। भगवद्भजनस्याप्युक्तश्रुतिसिद्धत्वात्। सैषा भक्तिरत्यन्तं प्रसेविता सत्येव मुक्तिहेतुः। यथोक्तम्—

प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः।
कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि मयि दृष्टेऽखिलात्मनि॥ इति।

क्वचिच्च भगवत्समीपे गमममनावृत्तिश्च श्रूयते। "व्रजन्ति तव चरणसरोरुहान्तिकम्" इति। "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति च।

(१) स्पष्टं चेदं मीमांसाचतुर्थाध्यायचतुर्थपादीयसप्तमसूत्रे

ननु तत्समीपगमने को मार्गः । न तावत् धूमादिमार्गः । तस्य कर्मफलभोगाय यद्गमनं तत्सम्बन्धित्वेन श्रुतत्वात् । नापि अर्चिरादिमार्गः । तस्योपासकाविषयत्वात् । ये प्रतीकोपासकास्तेषामनेन मार्गेण विष्णुलोकपर्य्यन्तं गमनमुक्तम् । अहङ्ग्रहोपासकानां नु तदग्रेऽपि हिरण्यगर्भलोकपर्य्यन्तं गमनम् , वैकुण्ठादिषु च भगवत्समीपं प्रति गमने नायं मार्गः श्रुतः ।

उच्यते ।

श्रूयते हि पुराणेषु भगवद्भक्तानां विमानगमनम् , तद्यथा ध्रुवस्य भगवता प्रेषितेन—

> एतद्विमानप्रवरमुत्तमश्लोकमौलिना ।
> उपस्थापितमायुष्मन्नधि रोढुं त्वमर्हसि ॥

इत्येवं तद्दूतनिवेदितेन च विमानेन ।

> त्रिलोकीं देवयानेन सोतिव्रज्य मुनीनपि ॥
> परस्ताद्यद् ध्रुवगतिर्विष्णोः पदमथाभ्यगात् ।

इति गमनं श्रुतम् ।

अर्चिरादिमार्गे हि सम्पिण्डितकारणग्रामत्वेन भक्तानां भोगानुरोधेन भगवान् विमानमार्गं रचितवानिति गम्यते । तत्र गतानां च भगवदनुग्रहात्तत्त्वज्ञानोत्पत्तिर्मुक्तिश्च भवतीति सिद्धं भक्तेर्द्वेधा मुक्तिहेतुत्वम् ।

तदयं सङ्क्षेपः ।

> नानासत्कर्मवृन्दाद्गतभवरचिताद्दीश्वरप्रीतिहेतोः
> कुर्वन्कर्माणि तज्जाऽऽदरयुतकरणो भक्तिमस्यानुतिष्ठन् ।
> संसारे रागहानिं फलभजनजनिं मूर्तिबोधं च लब्ध्वा
> तत्तोषे तत्त्वबोधाद् व्रजति परमिहान्यत्र वेत्यत्र सिद्धम् ॥
> व्रजस्थलोकनायको बकादिदुष्टनाशकः ।
> स्वकीयभक्तिचिन्तया हरिः सदा प्रतुष्यतु ॥ २ ॥

इति श्रीसकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमहाराजमधुकरसाहसूनुचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीमन्महाराजश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधानिबन्धे भक्तिप्रकाशे सामान्यभक्तिनिर्णयः ।

उक्ता द्विधा भक्तिः, अनुरागात्मिका फलभक्तिः, साधनभक्तिश्चेति। तत्र फलभक्तिः साधनानुष्ठानादेव सिद्धेति न विधेया, फले विध्यभावात्। साधनभक्तिस्तु नवधा विहिता।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥
इति पुंसार्पिता विष्णोर्भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥

इतिवचनात्।

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।
सेवेज्याऽवनतिर्दास्यं सख्यमात्मनिवेदनम्।
इति पुंसार्पिता विष्णोर्भक्तिश्चेन्नवलक्षणा॥

इति वचनाच्च। तत्र श्रवणं नाम भगवद्गुणकर्मनाम्नां यथा श्रोत्रेण ग्रहणं भवति तादृशोऽवस्थानादिव्यापारः। न तु श्रोत्रजन्यज्ञानमात्रम्। श्रवणस्य विधेयत्वात्, ज्ञानस्य चाविधेयत्वात्। अस्मिंश्च श्रवणे प्रवृत्तिर्नानाविधकर्मसाध्येत्याशयेनोक्तम्—

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्॥ इति।

तादृशकर्माभावे श्रवणविमुखानां च नीचनिन्दोक्ता।

श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः॥ इति।

संस्तुतः=सदृशः।

तथा—

तान् शोच्यशोच्यानविदोऽनुशोचे
हरेः कथायां विमुखानघेन।
क्षिणोति देवो निमिषस्तु तेषा
मायुर्वृथावादगतिस्मृतीनाम्॥ इति।

अनिमिषः=कालः। वृथैव वादगतिस्मृतयः=वाग्देहमनोव्यापारा येषाम्।

अथ तस्य पापक्षयसाधनत्वे—

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्त्तनः।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्॥ इति
को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्म्मणः।
शुद्धिकामो न शृणुयाद् यशः कलिमलापहम्॥ इति

तथा—

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।

धुनाति शमलं कृष्णः सलिलस्य यथा शरत् ॥ इति ।
शुद्धिर्नृणां न तु तथेड्य ! दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः ॥
सत्वात्मनामृषभ! ते यशसि प्रवृद्ध
सच्छ्रद्धया श्रवणसंभृतया यथा स्यात् ॥ इति च ।

अनुरागात्मकफलभक्तिसाधनत्वे—
यस्तूत्तमश्लोकगुणानुवादः
सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं
कृष्णेऽमलां भक्तिमभीप्समानः ॥ इति ।
इत्थं परस्य निजवर्त्मरिरक्षयात्त
लीलातनोस्तदनुरूपविडम्बनानि ।
कर्म्माणि कर्म्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ इति च ।

अध्यात्मविचारनैरपेक्षेण भगवन्मूर्तिस्फूर्तिहेतुत्वे च ।
ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि
र्ये प्रायशोऽजित! जितोऽप्यसि तैस्त्रिलोक्याम् ॥ इति ।

तनुवाङ्मनोभिर्नमन्तो, वार्तां सत्कुर्वन्तो ये तैः, अन्यैरजितोऽपि जितोऽसि, तेषां हृद्याविर्भूतत्वात् ।

वैराग्यहेतुत्वे मोक्षास्पृहायांच—
नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ॥
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्त्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ इति ।

तत्त्वज्ञानद्वारा मुक्तिहेतुत्वे—
ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्र
मात्मप्रसाद उत यत्र (१)गुणेष्वसङ्गः ॥
कैवल्यसंमतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥ इति ।

(१) उभयत्र इति पाठान्तरम्, इहामुत्रचेति तदर्थ इति श्रीधरस्वामिनः ।

भगवानेव तत्स्वरूपेणाविर्भवतीत्यत्र—

ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणाः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥ इति ।

गीयमानगुणनामश्रवणे—

शृण्वन् सुभद्राणि रथाङ्गपाणे
र्जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन्विलज्जो विचरेदसङ्गः ॥ इति ।

लोकेऽनुचरितस्य गानायोगाच्छ्रवणमित्येव वक्तव्ये गानयुक्तभगवद्विषयप्राकृतसङ्ग्रहार्थं लोके गीतानीत्युक्तम् । पौराणवैदिकसङ्ग्रहार्थश्च शब्दः । न च "नृत्यगीतवादित्राणि न कुर्य्यान्नाचाम्येन क्रियमाणानि द्रष्टुं श्रोतुं गच्छेत्" इति कात्यायननिषेधविरोधः । तस्य "न हिंस्यात्" इति हिंसानिषेधवद् रागतः प्राप्तविषयत्वात् । विधितः प्राप्तस्य निषेधे विकल्पापत्तेः । न च देवताविषयकं गानादि रागतः प्राप्तमिति वक्तुं शक्यम् । तथा सति तद्विषयहिंसादेरपि तथात्वापत्तेः, किञ्च रतिहेतुत्वेन गाने तच्छ्रवणे च प्रतिप्रसवोऽपि कात्यायनेनैवोक्तः । "कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेः" इति । परमेश्वरगुणगाने च न रतिर्जायत इति सकलानुभवसिद्धम् । एतेन भगवद्गानाङ्गनृत्यवादित्रयोरप्यनिषिद्धत्वं ज्ञेयम् । तथाहि । नृत्यवादित्रयोर्निषेधो न तावद्गानसम्बन्धिनोः, तयोर्गाननिषेधेनैव सिद्धेः । न हि यदर्थं यत् तन्निषेधे तत् प्राप्नोति, येन स्वातन्त्र्येण निषिध्येत । तस्मात् स्वातन्त्र्येण प्राप्तयोर्नृत्यवादित्रयोरेष निषेधः । एवञ्च गानाङ्गयोरनयोस्तन्निषेधे निषेधवत् तत्प्रतिप्रसवे प्रतिप्रसव इति । वस्तुतस्तु भगवत्सं-बन्धिनामेषां रागतः प्राप्त्यभावेन न निषेधविषयत्वम् । महाव्रते "दिक्षु दुन्दुभयो नदन्ति" पत्न्य उपगायन्ति" इति विहितयोरिव दुन्दुभिनादतदुपगानयोः, अत एव "ग्राम्यगीतं न शृणुयात्" इत्यत्र भगवद्गीतं तु शृणुयादेवेत्युक्तं श्रीधरस्वामिभिः । श्रूयते च भगवत्सम्बन्धिनां नृत्यगीतवादित्राणां विधिर्लिङ्गपुराणेऽम्बरीषमार्कण्डेयसंवादे ।

पुरा त्रेतायुगे कश्चित्कौशिको नाम वै द्विजः ।
अगायत हरिं तत्र लयतालसमन्वितम् ॥

इत्यादिना द्विजाधिकारेणाख्यायिकामनुक्रम्याम्बरीषं क्षत्रियं प्रत्यु-

पसंहृतं मार्कण्डेयेन ।

तस्मात्त्वया महाराज विष्णुक्षेत्रे विशेषतः ।
अर्चाढ्यं गाननृत्यादि वाद्योत्सवसमेधितम् ॥
कर्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशं नृप ।
श्रोतव्यश्च त्वया नित्यं स्तोतव्योऽसौ हरिस्त्वया ॥ इति ।
विष्णुक्षेत्रे ततो विद्वान् कारयेद्भक्तिसंयुतः ।
गाननृत्यादिकं चैव विष्ण्वाख्यानकथां तथा ॥
जातिस्मृतिञ्च मेधाञ्च परमोन्नतिमेव च ।
प्राप्नोति विष्णुसालोक्यं सत्यमेतन्नराधिप ! ॥ इति ।

तत्रैवाग्रिमाध्याये—

ब्राह्मणो वासुदेवाख्या गायमानोऽनिशं नृप ।
हरेः सालोक्यमाप्नोति श्राने रुद्राधिको भवेत् ॥
अन्यथा नरकं गच्छेद् गायमानोऽन्यदेव हि ॥ इति ।

ततश्चैतद्वाक्यवशादपि कात्यायननिषेधो रागतः प्राप्तान्यगानविषयः । तथा—

श्रीभागतेऽपि—

उपगायन्गृणन्नृत्यन् कर्माण्यभिनयन्मम ।
मत्कथाः श्रावयञ् छृण्वन्मुहूर्तं क्षणिको भवेत् ॥

इति विधिः श्रुतः ।

वाराहेऽपि—

गायन्मम यशो नित्यं भक्त्या परमया युतः ।
मत्प्रसादात् स शुद्धात्मा मम लोकाय गच्छति ॥
[ अ० १३९ श्लो० २८—२९ ]

गीयमानस्य गीतस्य यावदक्षरपङ्क्तयः ।
तावद्वर्षसहस्राणि इन्द्रलोके महीयते ॥
[ अ० १३९ श्लो० २४ ]

तत्रैवोपाख्यानान्ते—[ अ० १३९ श्लो० १०४—११३ ]

एतत्ते कथितं देवि गायनस्य फलं महत् ।
यस्य गीतस्य शब्देन तरेत्संसारसागरम् ॥
वादित्रस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्राप्तवान् मानुषो येन देवेभ्यः समतां(१) स्वयम् ॥

( १ ) सबलामिति वराहपुराणे पाठः ।

शम्पातालप्रयोगेन सन्निपातेन वा पुनः ।
नववर्षसहस्राणि नववर्षशतानि च ॥
कुबेरभवनं गत्वा मोदते वै यदृच्छया ।
कुबेरभवनाद्भ्रष्टः स्वच्छन्दगमनालयः ॥
शम्पादितालसम्पातैर्मम लोकं स गच्छति ।
नृत्यमानस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
मानवो येन गच्छेत्तु छित्वा संसारबन्धनम् ।
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
पुष्करद्वीपमासाद्य स्वच्छन्दगमनालयः ।
फलम्प्राप्नोति सुश्रोणि ! मम कर्मपरायणः ।
रूपवान् गुणवान् शूरः शीलवान् सत्पथे स्थितः ॥
मद्भक्तश्चैव जायेत संसारपरिमोचितः ॥ इति ।

न चात्र विध्यभावः शङ्क्यः । अन्यविधिशेषत्वाभावेन विधिकल्प नावश्यंभावात् ।

बृहन्नारदीये—

देवतायतने यस्तु भक्तियुक्तः प्रनृत्यति ।
गीतानि गायत्यथ वा तत्फलं शृणु भूपते ॥
गन्धर्वराजतां गानैर्नृत्याद्रुद्रगणेशताम् ।
प्राप्नोत्यष्टकुलैर्युक्त आकल्पं मोक्षभाग्भवेत् ॥ इति ।
तालादिकांस्यनिनदं कुर्वन्विष्णुगृहे नरः ।
यत्फलं लभते राजन् ! शृणुष्व गदतो मम ॥
सर्वपापविनिर्मुक्तो विमानशतसङ्कुलः ।
गीयमानश्च गन्धर्वैर्विष्णुना सह मोदते ॥ इति ।

एवञ्च न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्द इति प्राकृतनिषेधोऽपि रागतः प्राप्तविषय एव, नतु भगवद्विषयप्राकृतविषयः । तस्य रागतः प्राप्त्यभावात् । "तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्" इति येन केनाप्युपायेन जायमानभगवद्ध्यानस्य निःश्रेयसोपयोगप्रतिपादनाच्च भगवद्विषयप्राकृतस्यापि भगवद्ध्यानहेतुत्वमनुभवसिद्धम् ।

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि ।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत् ॥

इत्यनेन स्पष्टं प्राकृतविधानाच्च । उक्तञ्च वृद्धैः—भगवति द्वेषादिकर्तृणामपि चैद्यादीनां सद्गतिः सायुज्यादिरूपा श्रूयते ।

वैरेण यं नृपतयः शिशुपालपौण्ड्र
शाल्वादयो गतिविलासविलोकनाद्यैः ।
ध्यायन्त आकृतधियः शयनासनादौ
तत्साम्यमापुरनुरक्तधियां पुनः किम् ॥ इति ।

सा च न द्वेषादेः फलम् , तस्य—

यस्तु नारायणं द्वेष्टि तं विद्यादन्यरेतसम् ॥
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥

इत्यादिना निषिद्धत्वात् । किन्तु द्वेषादिजन्याऽऽनुषाङ्गिकपरमेश्वरानुस्मरणस्य फलम् । ततश्च द्वेषादिना परमेश्वरानुस्मरणे सद्गतिश्चेत् भाषया भक्त्यानुवादे तच्छ्रवणे च सद्गतिर्भवतीति किं वक्तव्यमिति । किञ्च "कौमार आचरेद्धर्म्मान्" इति बाल्यमारभ्य श्रवणकीर्तनादि विहितम्, "कोऽतिप्रयासोऽसुरबालका हरेः" इत्यादिना च तत्र प्रयासाभाव उक्तः । न च तद्वयसां प्रयासमन्तरेण साधुशब्दज्ञानं भवति । दृश्यते च सर्वदेशेषु भाषया पुराणार्थकथनं तच्छ्रवणञ्च शिष्टानाम् । उक्तञ्च—

तद्वाग्विसर्गो जनताघसंप्लवो
यस्मिन्प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि यच्
छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ इति

अबद्धवत्यपि=अपशब्दादियुक्तेऽपीति, उक्तम् ।

तथा—

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ इति ।

तत् सिद्धं यथाकथंचिद् यतःकुतश्चिद्भगवद्गुणनामश्रवणं निःश्रेयसहेतुरिति ।

गुणकर्म्मनाम्नां क्वचिन्नैरपेक्ष्यं श्रवणे श्रूयते ।
निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥ इति ।

यस्तूत्तमश्लोकगुणानुवादः, तमेव नित्यं शृणुयादिति च गुणानुवादश्रवणे ।

अथ कर्म्मानुवादश्रवणे—

कर्म्माणि कर्मकषणानि यदूत्तमस्य
श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ इति ।

नामश्रवणे—

न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापलयः(१)।

यन्नामसकृच्छ्रवणात् पुल्कशकोपि विमुच्यते साक्षात्(२) ॥ इति।

नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्तीति च।

क्वचिद् द्वयोः समुच्चयः श्रूयते।

यशःकथा भगवतः कथनीयोरुकर्म्मणः।

गुणकर्म्माश्रयाः पुंभिः संसेव्यास्ता मुमुक्षुभिः ॥ इति।

क्वचित्सर्वेषाम्—

"जन्मानि कर्म्माणि च यानि लोके गीतानि नामानि" इति।

अतश्च पूर्ववदत्रापि संभवत्समुच्चय इत्यास्तां तावत्।

तदयं सङ्क्षेपः—

जातादरः कृष्णकथासु पुण्यैर्गीता इमाः केन च नृत्यतापि।

भाषानिबद्धाश्च युताश्च वाद्यैः शृण्वन् विमुक्तो भवतीति सिद्धम् ॥

यत्पदसरसिजयुगलं प्रभजति सिद्धिर्भवति समस्तापि।

स्वगुणश्रवणमहिम्ना तुष्यत्वमुना हरिः कृपालुः सः ॥

* ॥ इति श्रीभक्तिप्रकाशे श्रवणनिर्णयः ॥ *

---

अथ सङ्कीर्तननिर्णयः ॥

सङ्कीर्तनं नाम भगवद्गुणकर्म्मनाम्नां स्वयमुच्चारणम्। अत्र च प्रवृत्तिर्नानाविधशुभकर्मसाध्या।

इदं हि पुंसस्तपसः श्रुतस्य स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः।

अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ इति वचनात्।

ईषद्विरक्तस्य मुक्त्युपयोगिभगवत्संकीर्तनाधिकारे—

गृहेष्वाविशतां वापि पुंसां कुशलकर्मणाम् ॥

मद्वार्त्तायातयामानां न बन्धाय गृहा मताः ॥ इति।

तथाग्नेये—

अनन्यगतयो मर्त्या भोगिनोऽपि परन्तप!।

ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥

सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पकाः।

सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ॥ इति।

---

(१) पापक्षय इति श्रीभागवते पाठः।

(२) संसारादिति श्रीभागवते पाठः।

सङ्कीर्तनस्य सत्वशुद्धिहेतुत्वे—

न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भनम् ॥ इति ।
नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ।
नयत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलितं ततोऽन्यथा ॥ इति ।

पाद्मेऽपि ।

सकृदुच्चारयेद् यस्तु नारायणमतन्द्रितः ।
शुद्धान्तःकरणो भूत्वा निर्वाणमधिगच्छति ॥

एवं शुद्धान्तःकरणस्य कथञ्चिज्जातमपि पातकं सङ्कीर्तनेनैव नश्यति । यथोक्तम्-

तस्माद्विमृश्य सुधियो भगवत्यनन्ते
सर्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात्पातकं तदपि हन्त्युरुगायवादः ॥

सङ्कीर्तनाकरणे निन्दाऽपि श्रूयते—

जिह्वां लब्ध्वापि यो विष्णुं कीर्तनीयं न कीर्तयेत् ॥
लब्ध्वापि मोक्षनिःश्रेणीः स नारोहति दुर्मतिः ॥ इति ।

गां दुग्धदोहामसतीं च भार्य्यां देहं पराधीनमसत्प्रजाञ्च ।
वित्तं त्वतीर्थीकृतमङ्ग ! वाचं हीनां मया रक्षति दुःखदुःखी॥ इति च।

अथ सङ्कीर्तनस्य फलभक्तिजनकत्वेऽपि—

इत्थं हरेर्भगवतो रुचिरावतार
वीर्याणि बाल्यचरितानि च शन्तमानि ।
अन्यत्र चेह च श्रुतानि गृणन्मनुष्यो
भक्तिं परां परमहंसगतौ लभेत ॥ इति ।

विरक्तिहेतुत्वे—

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ॥ इति ।

भगवन्मूर्तिस्फूर्तिहेतुत्वे—

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ इति ।

संसारनिवर्तकत्वे—

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो विमुच्येत यद् बिभेति स्वयं भयम् ॥ इति
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
यत्र सङ्कीर्तनेनैव मुक्तबन्धः परं व्रजेत् ॥ इति च ।

शैवे ।

महादेवमहादेवमहादेवेति यो वदेत् ।
एकेनैव भवेन्मुक्तिर्द्वाभ्यां शम्भुर्ऋणी भवेत ॥ इति ।

बृहन्नारदीये ।

घोरे कलियुगे प्राप्ते हरिनामपरायणाः ।
समस्ताघौघनिर्मुक्ता यास्यन्ति परमां गतिम् ॥ इति ।
अहो चित्रमहो चित्रमहो चित्रमिदं द्विजाः ।
हरिनाम्नि स्थिते लोकः संसारे वर्तते पुनः ॥ इति च ।

वाराहे ।

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ इति ।

भविष्ये ।

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः ।
यत्र तत्रानुकुर्वन्तो विष्णोर्नामानुकीर्तनम् ।
सर्वपापविनिर्मुक्तास्तेऽपि यान्ति सनातनम् ॥ इति ।

वामनपुराणे ।

ये कीर्तयन्ति वरदं वरपद्मनाभं
शङ्खाब्जचक्रशरचापगदासिहस्तम् ।
पद्मालयावदनपङ्कजषट्पदाख्यं
नूनं प्रयान्ति सदनं मधुघातिनस्ते ॥ इति ।

विष्णुधर्मे ।

गोविन्देति समुच्चार्य पदं क्षपितकल्मषः ।
क्षत्रबन्धुर्विनष्टात्मा गोविन्दत्वमुपेयिवान् ॥ इति ।

मुक्तिहेतुत्वञ्च ज्ञानद्वारा—

यदीच्छसि परं ज्ञानं ज्ञानाच्च परमं पदम् ॥

इति गरुडवचनात,

नामसंकीर्तनादेव तारकं ब्रह्म दृश्यते ।

इति च्यवनस्मृतेश्च । सेयमन्तःकरणशुद्धिमारभ्य मुक्तिपर्यन्ता प्रणालिका मुखत एवोक्ता—

मात्स्ये—

विष्णोर्नामैव पुंसः शमलमपनुदत्पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगाद्विरतिमथ गुरुश्रीपदद्वन्द्वभक्तिम् ।
तत्त्वज्ञानञ्च विष्णोरिह मृतिजननभ्रान्तिबीजं च दग्ध्वा
संपूर्णानन्दबोधे महति च पुरुषे स्थापयित्वा निवृत्तम् ॥ इति ।

अत्र पुण्यशब्देन सत्वगता भगवन्मूर्त्तिस्फूर्तियोग्यतोक्ता। भक्तिशब्देन चानुरागरूपा फलभक्तिः। उत्पादयचेति चकारान्मूर्तिस्फूर्तिः। अध्यात्मविचारस्येव भगवन्नाम्नो नापेक्षितसत्वशुद्ध्यर्थं स्वान्यकर्मापेक्षा, नापि अनुग्राह्यप्रमाणान्तरापेक्षा, किन्तु स्वयमेव शोधकं ज्ञानकरणं तादित्याशयेनैवकारः। रामकृष्णादिशब्दा हि नित्यमभ्यस्यमानाः शक्त्या सगुणं ब्रह्मोपयन्तो—

रमन्ते योगिनो नित्यं नित्यानन्दे परात्मनि।
इतिरामपदेनासौ परं ब्रह्माभिधीयते॥ इति।
कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते॥

इत्येवमनवच्छिन्नं ब्रह्म बोधयन्तस्तद्विषयां बीजभूतामविद्यां निवर्तयन्तोऽखिलं तत्कार्यभ्रमं निवर्तयन्ति। वाराणस्यां मृतस्य पुंस इव भगवन्महेश्वरोदितो रामशब्दः। यथोक्तं—

वाराहे—

पेयंपेयं श्रवणपुटकैरामनामाभिधानं
ध्येयंध्येयं मनसि सततं तारकब्रह्मरूपम्॥
जल्पञ्जल्पन् प्रकृतिविकृतौ प्राणिनां कर्णमूले
वीथींवीथीमटति जटिलः कोऽपि काशीनिवासी॥ इति।

न च रामशब्दस्य पदत्वात्कथमज्ञाननिवर्त्तकप्रमितिजनकत्वमिति वाच्यम्। त्वं रामोऽसीत्येवं भगवदुक्तरामशब्दस्य तज्जनकत्वोपपत्तेः। नचैवं पूर्वोक्तान्तःकरणकरणत्वविरोधः। यो हि रामरामेत्येवं भगवन्नामैव यावदन्तिमसाक्षात्कारं सङ्कीर्त्तयति तं प्रति सन्तुष्टभगवता त्वमेव रामोऽसीत्येवं उपदिश्यमानस्य तस्यैव करणत्वोपपत्तेः। यस्तु श्रवणादिभक्तिमात्ररसिकस्तच्चित्ते भगवान्स्वयमाविर्भवतीति तादृशाधिकारिणं प्रति चित्तस्यैव करणत्वमित्यविरोधः। अत एव "मच्चिता मद्गतप्राणा" इत्यनेकभक्तयधिकारेण "नाशयाम्यात्मभावस्थ" इत्येवोक्तम्। तत्सिद्धमुक्तप्रणालिकया सङ्कीर्तस्य न मुक्तिहेतुज्ञानहेतुत्वम्। श्रूयते च

"तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्त्तन। आस्य जानन्तो नाम चिद् विवक्तन महस्ते विष्णो सुमतिं भजामहे" इति।

अस्यार्थः कैश्चिदेवमुक्तः। तमु=प्रसिद्धं। श्रुत्यादिषु पूर्वमन्त्रे च [तमु इति प्रसिद्ध] इत्यर्थको निपातः। जन्ममरणादिसंसारसंतप्तानां कोमलामन्त्रणार्थ इत्यन्ये। स्तोतारः=स्तुध्वम्, गुणसङ्कीर्तनं कुरुध्वमित्यर्थः। ननु यज्ञाद्यनुष्ठाने प्रवर्तन्ते, भगवद्गुणसंकीर्तने तु लज्जन्ते,

अत आह । पूर्व्यम्=पूर्वजमित्यर्थः । न हि स्वपूर्वजस्तवने लज्जोचितेति भावः । ऋतस्य=वेदान्तवाक्यस्य । गर्भ=प्रतिपाद्यं । जनुषा पिपर्त्तनेति जन्म पूर्यतामितिवक्तव्ये (१)विपरीतनिर्देशश्छान्दसः । एवञ्च स्तुतेर्जन्मसमाप्तिः फलमुक्तं भवति ।

अन्ये त्वेवमाहुः । ऋतस्य=कर्मफलस्य "ऋतं पिबन्तौ"इतिमन्त्रे ऋतशब्दस्य तथा व्याख्यातत्वात् । गर्भ कारणभूतं भ्रान्तिज्ञानम् । जनुषा=जनकेनाज्ञानेन, सहार्थे तृतीया । पिपर्त्तन=पूरयत समापयतेत्यर्थः । एवञ्च सकार्याज्ञाननिवृत्तिः फलमुक्तं भवतीति । इतिकर्तव्यताकाङ्क्षायामाह । यथाविदेति । गुणादीनामानन्त्येऽपि स्वमतिपरिणामावधि वैदिकैः पौराणैः संस्कृतैः प्राकृतैर्वा यथाकथञ्चित्संकीर्त्तननिष्पादनमेवेति कर्तव्यता, दर्विहोमेष्विव [पू०मी०अ० ८ पा० ४ अधि० ४] तत्संम्पादनमिति भावः । स्तुत्यसम्भवं जानन्तो यूयमस्य परमात्मनो नामचित्=नामापि विवक्तन=वदतेति ।

अन्ये तु आनन्त=इति ज्ञानस्यावान्तरव्यापारत्वसूचनम् । अस्य=विष्णोः, नाम,आ=ईषद्, विवक्तन=वक्त, वदतेति यावत् । चिदित्यव्ययं भगवद्गुणसङ्कीर्तनात् तत्तद्गुणज्ञानसापेक्षान्नामसङ्कीर्तनस्याल्पायाससाध्यत्वं प्रतिपादयति, फलं तु मक्ष्यमाणन्यायेनोभयत्र सम्बध्यत इत्याहुः ।

एवं परानुपदिश्य श्रुतयः स्वयमूचुः । एते भजन्तु वा, मा वा, वयं तु ते=तव । महः=प्रकाशात्मकं स्वरूपम् । हेविष्णो सुमति=शुद्धज्ञानात्मकं भजामहे=सेवामह इति ।

अन्ये त्वेवमाहुः । श्रुतिरुभयविधस्य सङ्कीर्त्तनस्य फलान्तरं सूचयन्तीति उपदेश्यान् पुरुषान्प्रति ब्रूते । महः=प्रकाशात्मकम् । ते=त्वाम् । सुमतिं=शुद्धमतिम् । भजामहे । विष्णो इति सम्बोधनम्, त इत्येकवचनञ्च सङ्कीर्तनकर्तॄणां विष्णुसायुज्याभिप्रायेण । अन्यथा पादत्रयेण पुरुषसम्बोधनमन्त्यपादेन तु विष्णोः सम्बोधनमित्यसंबन्धं स्यात् । भजामहे इति बहुवचनमितरलोकसाहित्याभिप्रायेण । एवं चाहङ्ग्रहोपासनयेव भगवन्नामगुणसङ्कीर्तनाभ्यां भगवत्सायुज्यं भवतीत्युक्तं भवति ।

तथा च नानापुराणादिवाक्यसङ्ग्रहकरनाममाहात्म्यग्रन्थे--

पातञ्जलसंहितायाम्—

नृहरे इति यो नित्यं कीर्तयेच्छुद्धबुद्धिमान् ।
विमुक्तः सर्वपापेभ्यो हरि सायुज्यमृच्छति ॥ इति

(१) करणत्वनिर्देश इत्यर्थः ।

वात्स्यायनसंहितायाम्—

गोघ्नः सुरापो नियतं हरिरित्यसकृद्वदन् ।
एनसः स विमुक्तात्मा हरेः सायुज्यमाप्नुयात् ॥ इति ।

शातातपसंहितायाम्—

नाम्नां मे किल कीर्त्तनान्मयि नरः सायुज्यमायात्यहो । इति ।

एवञ्चोक्तमन्त्रेणापि ज्ञानोद्देशेन सङ्कीर्त्तनविधानात्सिद्धं तस्य तद्धेतुत्वम् ।

ननु "देवाँश्च याभिर्यजते ददाति" इतिवदस्य मन्त्रत्वान्न विधायकत्वम्, ब्राह्मणगतस्यैवाख्यातस्य विधायकत्वादिति चेन्न । "यस्योभयं हविरार्त्तिमार्च्छेत्" इत्यस्य सत्यपि ब्राह्मणगतत्वेऽविधायकत्वात्, "वसन्ताय कपिञ्जलानालभेत" इति सत्यपि मन्त्रत्वे विधायकत्वस्याचार्य्यैरुक्तत्वाच्च(१) अतश्च न ब्राह्मणगतत्वमन्त्रगतत्वे विधायकत्वाविधायकत्वयोः प्रयोजके, किन्त्वपूर्वार्थत्वप्राप्तार्थत्वे । अत एव सत्स्वपि विधिसान्निधानाहिशब्दसंयोगवर्तमानापदेशेषु, अपूर्वार्थत्वाद्विधित्वमुक्तम्, "उपरि हि देवेभ्यो धारयति" इत्यत्र "विधिस्तुधारणेऽपूर्वत्वात्" [पू० मी०अ० ३ पा० ४ सू० १५] इति । सङ्कीर्तनस्य च मुक्तिहेतुता न प्रमाणान्तरासिद्धेति युक्तमस्य विधित्वम् । नचैवमस्य वाक्यस्य सङ्कीर्त्तन विधायकत्वे न स्मारकत्वम्, स्मारकत्वे वा न विधायकत्वम्, कस्माद्विधायकत्वस्मारकत्वयोर्विरोधादिति वाच्यम् । "क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्" [पू० मी० अ० ५ पा० १ सू० ४] इत्यत्र विधानमपि स्मारकत्वस्याचार्य्यैरुक्तत्वात् । विधानस्मरणयोः कालभेदेन विरोधाभावाच्च ।

उक्तञ्च-

विधिशक्तिर्न मन्त्रस्य नियोगेनापनीयते ।
स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति ॥
[ तन्त्रवार्तिक० अ० २ पा० २ सू० ३० ] इति ।

न च वाक्ये[न]ष्टार्थाच्छावाकशास्त्रे विनियुक्तस्यास्य मन्त्रस्य कथं स्वार्थविवक्षेतिशङ्क्यम् । ब्रह्मयज्ञपारायणादौ विनियुक्तस्यापि स्वाध्यायस्यार्थविवक्षावदुपपत्तेः । किञ्च अन्यपरादप्यस्माद्वाक्यात्सङ्कीर्त्तनस्य पुरुषार्थहेतुता तावत्प्रतीयते । ज्ञानञ्च स्वतः प्रमाणम् । न चात्र विप्र-

(१) स्पष्टं चेदं मीमांसाद्वितीयाध्यायाद्वितीयपादगतषष्ठसप्तमयोर्मन्त्राविधायकत्वमन्त्रनिर्वचनाधिकरणयोः ।

लम्भकादिवाक्यवदप्रामाण्यशङ्का, अपौरुषेयत्वात्। न च "यजमानः प्रस्तरः" इतिवत्प्रमाणान्तरविरोधः, येन स्वार्थपरित्यागेन गौणताश्रियेत। नापि "वायुर्वै क्षेपिष्ठा देवता" इतिवदनुवादत्वम्, संवादिप्रमाणाभावात्। न च यत्परः शब्दस्तस्यैवार्थस्य तत्प्रमाणकत्वम्; अस्य च मन्त्रस्यान्यपरत्वे कथं सङ्कीर्त्तनश्रेयःसाधनतायास्तत्प्रमाणकत्वमिति शङ्कयम्। प्रत्यक्षानुमानादिजन्यज्ञानस्येव शाब्दज्ञानस्यापि साधकप्रमाणभावमात्रेण प्रामाण्योपपत्तौ तात्पर्य्यस्यापि तत्प्रयोजकत्वकल्पने गौरवात्। विशिष्टविधेर्विशेषणांशे तात्पर्य्याभावेऽपि तज्ज्ञानस्य तदंशे प्रमात्वाश्रयणाच्च। कल्पितविशेषणविधेरेव विशेषणे तात्पर्य्याच्च विशिष्टविधेस्तत्र तात्पर्य्याभावः। न च श्रुतवाक्यस्य विशेषणपरत्वाभावे कथं विशिष्टपरत्वमिति वाच्यम्। विशेषणविधित्वाभावेऽपि विशिष्टविधित्ववदुपपत्तेः। किञ्च लोकेऽपि न तात्पर्यज्ञानं शाब्दप्रमामात्रोपयोगि, तदन्तरेणापि शाब्दप्रमादर्शनात्(१)। किन्तु क्वचिदसम्भावनानिवृत्त्यर्थमपेक्ष्यते। सा चापौरुषेयत्वादिना सिद्धेति किं तात्पर्येण। तस्मात्सिद्धमेतद्वाक्यबलादपि सङ्कीर्तनस्य मुक्तिहेतुज्ञानजनकत्वमिति।

तदिदं सङ्कीर्तनं संयोगपृथक्त्वन्यायेन [ पू० मी० अ० ४ पा० ३ अधि० ३ सू० ५ ] यज्ञध्यानार्चनफलेऽपि विहितम्।

वैष्णवे बृहन्नारदीये च—

ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्॥ इति।

तथा—

श्रीभागवते गारुडे च।

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः।
द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात्॥ इति।

अत्र न तावद्ध्यानादयस्तदङ्गत्वेन कृतादयो वा विधेयाः। अनेकविधाने वाक्यभेदप्रसङ्गात्, "यदाप्नोति तदाप्नोती"त्यस्याऽऽनर्थक्यप्रसङ्गाच्च। ध्यानादीनां यच्छब्दोपबन्धेन कीर्त्तनस्य तच्छब्देन निर्देशायोगाच्च। अत एव "धाराग्नी पूर्णमासेऽनूच्येत वृधन्वती अमावास्यायाम्" इतिवत् [ पू० मी० अ० ३ पा० १ अधि० १३ सू० २३ ] ध्यानादीनां कृतादिषु व्यवस्थापि न विधेया। तद्विधौ हि कृते ध्यायेत, यजेत्

(१) अव्युत्पन्नोच्चरितवाक्यज्ञानाद् व्युत्पन्नस्य विनैव वक्तृतात्पर्यज्ञानं शाब्दप्रमित्युत्पत्तेरिति भावः।

त्रेतायामित्येव स्यात्, न तु यदाप्नोति तदाप्नोतीति सङ्कीर्त्तनस्य ध्यानादिभिः फलैक्यं निर्दिश्येत। कृते ध्यायेदिति व्यवस्थाश्रयणे युगान्तरे तदभावप्रसङ्गाच्च। वार्त्रघ्न्योरिवामावास्यायाम्। न च युगान्तरे यन्महता प्रयासेन साध्यते तदत्रात्यल्पेनेत्येवं कलिप्रशंसेयमिति वाच्यम्। कलिकालस्याननुष्ठेयत्वेन प्रवृत्त्यविषयत्वात्स्तुतिवैयर्थ्यात्। न च तत्र क्रियान्तरं विधातुमियं तत्स्तुतिरिति वाच्यम्। एतत्समीपे क्रियान्तरविधेरभावात्। नापि तत्सम्बन्धितया कीर्त्तनं विधातुम्। कीर्त्तने फलान्तराश्रवणेन तदपेक्षितफलसमर्पणोपपत्तौ स्तुतिपरत्वायोगात्। न च कीर्तनाश्रितः कालः फलोद्देशेन विधीयत इति वाच्यम्। कीर्त्तनस्य फलान्तरसम्बन्धितया पूर्वं विधानाभावेनाश्रयत्वानुवादायोगात्। अथ—

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः।
सर्वं करोति निश्छिद्रं नामसङ्कीर्तनं तव॥

"यस्य स्मृत्या" इत्यादिवाक्यपर्यालोचनया कृताङ्गस्य सङ्कीर्तनस्य स्तुतिरियमिति नैतत्पुरुषार्थमिति चेत्। न। "सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिण" इत्यादिना पुरुषार्थत्वस्याप्यवगमात्। तर्ह्युभयविधस्यापि "ध्यायन्कृत" इत्यादिना स्तुतिरिति चेन्न। तत्समीपे यागाभावेन तत्स्तुतित्वायोगात्। यथोक्तं, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इति। [ पू० मी० अ० १ पा० २ सू० ७ ] नाप्यनुवादमात्रम्। कस्यचिद्विधेः समीपे यागाभावेन केवलानुवादत्वे आनर्थक्यात्। तस्मादत्र ध्यानादिफलोद्देशेन सङ्कीर्तनं विधीयते। न चानेकफलोद्देशेन सङ्कीर्तनविधानेऽपि वाक्यभेदः स्यादिति शङ्क्यम्। "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इतिवत् "तदाप्नोति" इत्येकेन तच्छब्देनानेकेषामुपादानाद्वाक्यभेदाभावात्। न चैवं तदाप्नोतीत्येतावतैव फलविशेषसमर्पणाद् "ध्यायन्कृते" इत्यादि यदाप्नोतीत्यन्तमनर्थकं स्यादिति वाच्यम्। वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दस्य वैश्वदेवीशब्दापेक्षितविशेषसमर्पकत्वेनार्थवत्त्वात्।

यथाहुः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति।

न च कलिकालविधाननिमित्तो वाक्यभेदः। तद्विशिष्टकीर्त्तनविधानात्।

अयं वाक्यार्थः। तत्तद्युगे ध्यानादिभिर्यदवाप्यते तत्कलावनुष्ठितेन

कीर्त्तनेन भावयेदिति । एवं वक्तव्ये सङ्कीर्त्येति निर्देशो दर्विहोमन्यायेन सङ्कीर्त्तनसम्पादनमेवेतिकर्त्तव्यता नान्येति सूचनार्थः। तत्सिद्धं ध्यानादिफले सङ्कीर्त्तनं विधीयत इति ।

तथा तत्तत्कार्यविशेषसाधनत्वेन तत्तन्नामसङ्कीर्त्तनमुक्तं हेमाद्रौ—

मार्कण्डेयवाक्ये—

कूर्मं वराहं मात्स्यं वा जलसन्तरणे स्मरेत् ।
भ्राजिष्णुमग्निजनने जपेन्नाम त्वतन्द्रितः ॥
सङ्ग्रामाभिमुखो गच्छन् संस्मरेदपराजितम् ।
केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् ॥
नेत्रबाधासु सर्वासु हृषीकेशं तथैव च ।
अच्युतं चामृतं चैव जपेदौषधकर्म्मणि ॥
गरुडध्वजानुस्मरणादापदो मुच्यते नरः ।
ज्वरदुष्टशिरोरोगाविषवीर्यञ्च शाम्यति ॥
ग्रहनक्षत्रपीडासु देहबाधाटवीषु च ।
दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसंकटे ॥
अन्धकारे तथातीव्रे नरसिंहेति कीर्तयेत् ।
नारायणं शार्ङ्गधरं श्रीधरं पुरुषोत्तमम् ॥
वामनं खड्गिनञ्चैव दुःस्वप्नादिषु संस्मरेत् ।
अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् ॥
बलभद्रञ्च युद्धार्थी कृष्यारम्भे हलायुधम् ।
उत्तारणं वणिज्यार्थी श्रीराममभ्युदये तथा ॥
जगतो मङ्गलं विष्णुं माङ्गल्येषु प्रकीर्तयेत् ।
उत्तिष्ठन्कीर्तयेद्विष्णुं प्रस्वप्ने माधवं नरः ॥
भोजने चैव गोविन्दं सर्वत्र मधुसूदनम् ।
नारायणं सर्वकालं क्षुतप्रस्खलितादिषु ॥
स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे ।
कीर्त्तयेद्वासुदेवञ्च अनुक्तेष्वपि यादवम् ॥
कार्य्यारम्भे तथा राजन् यथेष्टं नाम कीर्त्तयेत् ।
सर्वाणि नामानि हि तस्य राजन् सर्वार्थसिद्ध्यै तु भवन्ति पुंसः ।
तस्माद्यथेष्टं खलु देवनाम सर्वेषु कार्येषु जपेत्तु भक्त्या ॥ इति ।

अत्र जलप्रतरणादिषु तत्तन्नामसङ्कीर्त्तनस्य तन्निर्विघ्नसिद्ध्यादिकमेव प्रयोजनं स्पष्टमवसीयते। भोजनादिषु तु विषयसम्बन्धकृततत्प्रवणतानिरासेन भगवत्प्रवणता सङ्कीर्त्तनस्य प्रयोजनम् ।

यथोक्तं—

क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचित्तो न भवाय कल्पते ॥ इति ।

नामसङ्कीर्त्तनाद्याविष्टचित्तत्वमनुभवसिद्धम् ।

अथ सङ्कीर्त्तनस्य पापक्षयसाधनत्वे नानापुराणवाक्यानि लिख्यन्ते-

श्रीभागवते—

स्तेनः सुरापो मित्रध्रुग् ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ॥
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ इति ।

यतः=नामोच्चारणात् भगवतस्तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयमिति मतिर्भवति । यद्वा तद्विषया विष्णुविषया नामोच्चारयितुः ।

यद्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत् ।
इति च ।

पाद्मे ।

यस्तु सङ्कीर्त्तयेन्नित्यं नारायणमनामयम् ।
स पूतो नात्र सन्देहो महापातकसङ्कटात् ॥
यत्र तत्र स्थितो वापि कृष्णकृष्णेति कीर्त्तयेत् ।
सर्वपापविशुद्धात्मा स गच्छेत्परमां गतिम् ॥ इति ।

वैष्णवे—

यन्नाम कीर्तितं भक्त्या विलायनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ इति ।

बृहन्नारदीये ।

घोरे कलियुगे प्राप्ते हरिनामपरायणाः ।
समस्ताघौघनिर्मुक्ता यास्यन्ति परमां गतिम् ॥ इति ।

आग्नेयपुराणे ।

न भयं यमदूतानां न भयं रौरवादिकात् ।
न भयं प्रेतराजस्य गोविन्देति च जल्पताम् ॥ इति ।

ब्रह्मवैवर्ते ।

हनन्ब्राह्मणमत्यन्तं कामतो वा सुरां पिबन् ।
कृष्णकृष्णेत्यहोरात्रं सङ्कीर्त्य शुचितामियात् ॥ इति ।

वाराहे ।

अभक्ष्यभक्षणात्पापमगम्यगमनाच्च यत् ।
नश्यते नात्र सन्देहो गोविन्दस्य च कीर्त्तनात् ॥
स्वर्णस्तेयं सुरापानं गुरुदाराभिमर्शनम् ।
गोविन्दकीर्त्तनात्सद्यः पापं याति महामुने ॥

तावत्तिष्ठति देहेऽस्मिन्कलिकल्मषसम्भवः ।
गोविन्दकीर्तनं यावत् कुरुते मानवो नहि ॥ इति ।

कौर्मे ।

गोविन्देति सदा भक्त्या येन गीतं महात्मना ।
सहस्रात्तेन मुच्येत पापात्तु गुरुतल्पगात् ॥ इति ।

मात्स्ये ।

परदाररतो वापि परापकृतिकारकः ।
विशुद्धो मुक्तिमाप्नोति कृष्णनामानुकीर्त्तनात् ॥

गारुडे ।

गुरुदाराभिगमने स्वजनाभिगमेऽपि यत्
तत्पापं याति गोविन्दगोविन्देति च कीर्त्तनात् ॥ इति ।

ब्रह्माण्डे—

महापातकयुक्तोऽपि कीर्त्तयन्ननिशं हरिम् ।
शुद्धान्तःकरणो भूत्वा जायते पङ्क्तिपावनः ॥ इति ।

बृहन्नारसिंहे ।

गोविन्देति वदञ्जन्तुः प्रत्यहं नियतेन्द्रियः ।
सर्वपापविनिर्मुक्तः सुरवद्भासते नरः ॥ इति ।

आदित्यपुराणे ।

हरेः सङ्कीर्त्तनं पुण्यं महापातकनाशनम् । इति ।

वायुपुराणे ।

नमो नारायणायेति यस्तु कीर्त्तयते मुदा ।
गुरुतल्पशतेनापि सद्यस्तेन प्रमुच्यते ॥ इति ।

नन्दिपुराणे ।

सर्वदा सर्वकालेषु ये तु कुर्वन्ति पातकम् ।
नाम सङ्कीर्त्तनं कृत्वा यान्ति विष्णोः परं पदम् ॥ इति ।

हरिवंशे ।

शयनादुत्थितो यस्तु कीर्तयेन्मधुसूदनम् ।
कीर्त्तनात्तस्य पापानि विलयं यान्त्यशेषतः ॥ इति ।

प्रभासपुराणे ।

नाम्नां मुख्यतरं नाम कृष्णाख्यं यत्परन्तप ! ।
प्रायश्चित्तमशेषाणां पापानां मोचकं परम् ॥ इति ।

इतिहासोत्तमे,

स्वप्नेऽपि नामस्मृतिरादिपुंसः क्षयं करोत्याहितपापराशेः । इति ।

भविष्योत्तरे ।

कोटिपापानि सन्त्येव स्वल्पानि च बहूनि च ।
न तानि भूयो बाधन्ते हरिनामानुकीर्त्तनात् ॥ इति ।

ननु मन्त्रार्थवादानां प्रमाणान्तराविरोधे सति न स्वार्थे प्रामाण्यम्। "धूम एवाग्नेर्दिवा ददृशे नार्चिः" "यजमानः प्रस्तर" इत्यादौ तथा दर्शनात्। पौराणानां चैषामर्थवादानामस्ति स्मार्तप्रायश्चित्तविरोधः, मन्वादिस्मार्तविधयो हि स्वार्थतात्पर्योपेता गुरुतरप्रयत्नसाध्यानि द्वादशवार्षिकादीनि तत्तद्दोषनिर्हरणाय विदधति, अल्पप्रयत्नसाध्यस्य च संकीर्त्तनस्य पापक्षयहेतुत्वे तत्रैव सर्वेषां प्रवृत्तौ स्मार्तविधीनां प्रवर्तकत्वं व्याहन्येत प्रवर्त्यपुरुषाभावात्। अतश्चान्यानर्थक्यन्यायेनास्ति तद्विरोधः, विरोधे च नैषां पौराणार्थवादानां स्वार्थे प्रामाण्यमिति कथञ्चिद्भजनीयदेवतास्तावकत्वमाश्रयणीयम्, सर्वेषां पुराणानां भजनीयदेवताप्रतिपादने तात्पर्यात्। न च प्रवृत्त्या ज्ञानोन्नयने तज्जनकत्वेन पदानां कार्यान्वित एव स्वार्थे शक्तिग्रहार्थे[न]सिद्धार्थपरत्वं पुराणानामिति वाच्यम्। पुत्रस्ते जात इति वाक्यश्रवणानन्तरं दृश्यमानमुखविकासादिना हर्षतद्धेतुज्ञानयोरुन्नयने तज्जनकत्वेन सिद्धेऽप्यर्थे शक्तिग्रहसम्भवात्। यद्यपि च "धर्म्मः प्रोज्झितकैतवोऽत्र परमो" "धर्मे चार्थे च कामे च" इत्यादिधर्मप्रतिपादकत्वोक्तिस्तत्र तत्र धर्म्मप्रतिपादनस्य देवताप्रतिपादनवदुपलम्भाच्च वेदस्येव भेदेन पुराणानामपि देवतायां धर्मे चास्ति तात्पर्यम्। तथाप्युदाहृतवाक्यानां स्मार्तविधिविरोधेन स्वार्थप्रामाण्यासम्भवात् स्तावकत्वमेवाश्रयणीयमिति न संकीर्त्तनस्य पापक्षयहेतुता। प्रमाणाभावात्। अथ विधिसिद्धमेव संकीर्तनस्य पापक्षयहेतुत्वमित्युच्येत। तन्न। "पापक्षयकामः संकीर्त्तयेत्" इति विस्पष्टविध्यदर्शनात्। स्मार्तविधिविरोधे कल्पनाया अयोगाच्च। यद्यपि च कश्चिद्विधिरुदाह्रियेत। तथापि तद्विहितस्य संकीर्त्तनस्य द्वादशाब्दादेश्च विकल्पव्यवस्थासमुच्चयान्यतराश्रयणेन पापक्षयहेतुत्वं वाच्यम्, उभयोरपि श्रुतिमूलत्वेन प्रामाण्यावश्यंभावात्। तत्र न तावद्विकल्पः। पापक्षये नित्यवच्छ्रवणबाधेन शब्दस्वरसभङ्गप्रसङ्गात्। नापि देशविशेषेणाधिकारिविशेषेण वा व्यवस्था, सामान्यतः प्रवृत्तशब्दस्य विशेषलक्षणायां स्वारस्यभङ्गादेव। अतः समुच्चयो युक्तः। न च तत्रापि नैरपेक्ष्यं प्रत्येकवाक्यावगतं भज्येतेति शङ्क्यम्। साधनान्तराभावापरपर्यायस्य नैरपेक्ष्यस्याशब्दार्थत्वात्। संकीर्त्तनादिसाधनतामात्रस्य तदर्थत्वात्। उभयप्रतिपादने वाक्यभेदात। स च समुच्चयः सङ्कीर्त्तनस्य स्मार्तप्रायश्चित्तं प्रत्यङ्गत्वेन न तु दर्शादिवत्समप्राधान्येन, नापि प्रायश्चित्तस्य तदङ्गत्वेन। "मन्त्रतस्तन्त्रत" इत्याद्युक्तपुराणवाक्येभ्य एव संकीर्त्तनस्य सकलकर्माङ्गत्वावगमेन द्वादशाब्दादि प्रत्यपि, अङ्गत्वावश्यंभा-

वात्। श्रूयते च विशेषतोऽपि तदङ्गत्वम्।

श्रीभागवते,

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्।
न निष्पुनन्ति राजेन्द्र! सुराकुम्भमिवापगाः॥ इति।

अत्र च नारायणपराङ्मुखं न निष्पुनन्तीत्युक्तया पुनतां तेषां नारायणपरायणत्वमङ्गमुक्तं भवति। तत्परायणत्वञ्च तद्भजनमेवेति भजनविशेषस्य संकीर्त्तनस्य सिद्धं स्मार्तप्रायश्चित्ताङ्गत्वम्। एवञ्च संकीर्तनं प्रति पापक्षयस्य फलत्वनिर्देशोऽप्युपपद्यते। अङ्गानां प्रधानफलेनैव फलवत्त्वात्। नापि गुरुतरप्रयत्नसाध्यस्मार्तप्रायश्चित्तानर्थक्यम्। संकीर्त्तनमात्रेण फलाजननात्। तत्सिद्धं संकीर्त्तनस्य न स्वातन्त्र्येण पापक्षयहेतुत्वमिति।

अत्रोच्यते।

उक्तं तावत् "श्रावयेच्चतुरो वर्णान्" "पुराणं न्यायमीमांसाद्युपपुराणाद्यैर्वेदार्थमुपबृंहयेत्" इत्यादिवाक्येभ्यः पुराणप्रामाण्यम्। शिष्टैरत्यन्तमादृतत्वाच्च तदास्थेयम्, तत्कर्त्तारश्च व्यासादयोऽत्यन्तं विश्वसनीयाः, अतः स्मृतिवदेव प्रत्यक्षश्रुतिमूलत्वमेषामाश्रयणीयम्, नत्वप्रामाण्यम्। न चायमस्ति नियमः, एवंकामशब्दयुक्तालिङ्गाद्युपेतादेव वाक्यात्साध्यसाधनसम्बन्धावगतिरिति। "तरति ब्रह्महत्यां योऽश्वमेधेन यजते, एतावता हैनसा मुक्तो भवति नैशमेनो व्यपोहति" इत्यादौ तदभावेऽपि तदवगतेः। "पूषा प्रपिष्टभाग" इत्यत्राख्यातविरहेऽपि पेषणस्य यागीयद्रव्यसंस्कारसाधनत्वस्वीकाराच्च। अथ तत्र विधिकल्पनया तदवगति रितिचेत्, प्रकृतेऽपि तथा किं न स्यात्, विधिकल्पकस्यापूर्वार्थत्वस्याविशेषात्, न हि संकीर्त्तनस्य पापक्षयहेतुत्वमवगतपूर्वम्। अथ यन्नामसंकीर्त्तनात्सकलपापक्षयस्तस्य सानुरागं नैरन्तर्येण भजनात्किं न स्यादित्येवं भजनीयस्तुत्या भजनविधिशेषत्वसम्भवे किं विधिकल्पनयेति चेत्। भजनविध्यैकवाक्यत्वाभावेन स्तावकत्वायोगात्। उपक्रमोपसंहाराभ्यां, अजामिलोपाख्यानाद्यैः संकीर्त्तनमात्रपरत्वावगमाच्च। उक्तानेकपुराणवाक्येषु संकीर्त्तनस्य पापक्षयहेतुत्वं गतिसामान्याच्च। संकीर्त्तनमेव स्तूयत इति चेत्। न। अविधीयमानस्य स्तुत्ययोगात्। स्तुत्युन्नीतस्तस्य विधिरिति चेत्। एवं तर्हि विधीयमानस्य फलाकाङ्क्षायां रात्रिसत्रन्यायेन अर्थवादिकफलकल्पनवत्पापक्षयफलत्वकल्पनात्सिद्धं संकीर्त्तनस्य तद्धेतुत्वं, स्मार्तविधिविरोधे फलकल्पना नोत्तिष्ठतीति चेत्, न। तथा सति फला-

भावेऽन्यवाक्यवैयर्थ्यापत्तेः। न च तद्युक्तम्। अनन्तरमेव प्रामाण्यस्योक्तत्वात्। अनुपदञ्च विरोधस्य परिहरिष्यमाणत्वात्। दृश्यन्ते च संकीर्त्तने प्रत्यक्षा विधयः। पाद्मे तावद् यत्रतत्र स्थितो वेत्यादिरुक्तः। श्रीभागवतादौ च श्रोतव्यः कीर्तितव्यश्चेत्यादिः।

वायुपुराणेऽपि—

यावज्जीवं प्रणवमथवावर्त्तयेद्रौद्रियं वा
याजुर्वेद्यं वसतिमथवा वारणस्यां विदध्यात्।
हित्वा लज्जां कलिमलकुलच्छेदनानीरयेद्वा
विष्णोर्नामान्यनिशममृतप्राप्तिरेवं चतुर्द्धा॥ इति।

नन्वजामिलोपाख्यानादौ विहितस्यापि संकीर्त्तनस्य "मन्त्रतस्तन्त्रतश्छिद्रम्"इत्याद्युक्तपुराणवाक्यैरन्यशेषत्वावगमाद् वायुपुराणस्थवाक्ये न चामृतप्राप्तिहेतुत्वप्रतीतेर्न स्वातन्त्र्येण पापक्षयफलत्वकल्पनोचिता, यथाऽनारभ्याधीतस्यापि प्रवर्ग्यस्य "पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति" इति प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वावसायान्न फलं कल्प्यते तद्वदिति चेन्न।

सर्वेषामप्यघवतामिदमेव तु निष्कृतम्।
नाम व्याहरणं विष्णोर्यतस्तद्विषया मतिः॥
[ श्रीभा० स्कन्ध० ६ अ० २ श्लो० १० ] इति।

एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम्।
यदा नारायण इति जगाद चतुरक्षरम्॥
[ श्रीभाग० स्कन्ध० ६ अ० २ श्लो० ८ ]

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत॥
[ श्रीभा० स्कन्ध ६ अ० ३ श्लो० २३ ]

इति चैवकारश्रुत्यैव पापक्षयं प्रति स्वातन्त्र्येण हेतुत्वावगमात्। एवकारार्थस्य चाप्राप्तत्वेनानुवादायोगात्। वर्त्तमानापदेशस्य चाङ्गत्वबोधकवाक्येष्वप्यविशेषात्। तथा—

विष्णुपुराणेऽपि।

प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥

इति परशब्दश्रुत्या स्वातन्त्र्यमवगम्यते। न ह्यङ्गस्य प्रधानात्परत्वं युज्यते। अनुस्मरणशब्देन च संकीर्त्तनमुच्यते।

क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्।
क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्॥

इति वाक्यशेषे संकीर्तनस्तवनात्। न ह्यन्यद्विधीयतेऽन्यस्तूयत इत्युक्तं साम्प्रदायिकैः। "प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्" इत्यत्रैकशब्दोऽपि नैरपेक्ष्यं सूचयति। अङ्गाङ्गिनोः समुच्चये तन्न युज्येत। तथा—

विष्णुधर्मे।

अथ पातकभीतस्त्वं सर्वभावेन भारत।
विमुक्तान्यसमारम्भो नारायणपरो भव॥

इति वाक्यमपि प्राधान्ये सङ्गच्छते। अङ्गत्वे प्रधानारम्भत्यागायोगात्। तथा हि अत्र कैवल्यशब्देन न साधनान्तराभाव उच्यते, तस्य भक्तेश्च विधाने वाक्यभेदात्। तद्विशिष्टविधाने साधनान्तरविशिष्टायास्तस्या अघक्षयहेतुत्वं न स्यात्। किन्तु कार्य्याव्यवहितपूर्वक्षणमात्रवृत्तित्वापरपर्यायं पुष्कलत्वमभिधीयते। न च तदङ्गत्वे सम्भवति। अङ्गस्य कार्य्योपयोगिप्रधानोपकारजनकोपकारजनकस्य कार्याव्यवहितपूर्वक्षणैकवृत्तित्वायोगात्। तच्च केवलशब्दवाच्यपुष्कलत्वं न तावद्भक्त्युद्देशेन विधीयते। अघक्षयं प्रति भक्तेस्तां च प्रति कैवल्यस्य विधौ वाक्यभेदात्। अघक्षयं प्रति गुणभूतायाः कैवल्यं प्रति प्राधान्ये वाजपेयाधिकरणोक्तवैरूप्यप्रसङ्गाच्च। [ पू० मी० अ० १ पा० ४ अधि० ६ ] नाप्यघक्षयोद्देशेन तस्य भक्तेश्च विधानम्, वाक्यभेदात्। नापि तद्विशिष्टा भक्तिर्विधीयते, सोमविशिष्टयागविधान इव मत्वर्थलक्षणापत्तेः। नाप्यारुण्यैकहायनीविशिष्टक्रयव(१)दुभयविशिष्टाघक्षयविधानम्। तस्य फलत्वेनाविधेयत्वात्। किन्तु पुष्कलत्वभक्तिविशिष्टमेकं कारकं विधीयतेऽघक्षयोद्देशेन। "अग्नये शुचये" इतिवत्। अतश्चाघक्षये भक्तिः पुष्कलं कारणमिति फलितो वाक्यार्थः, अग्निः शुचिर्देवतेतिवत्। ततश्च केवलाया भक्तेः पापक्षयोद्देशेन विधानात् सिद्धा स्वातन्त्र्येण तद्धेतुता सङ्कीर्त्तनस्य। एवञ्चोदाहृतानेकपुराणवाक्यानामपि मुख्यया वृत्त्या सङ्कीर्त्तनस्य पापक्षयसाधनत्वप्रतिपादकत्वे सम्भवति न स्तावकत्वमाश्रयणीयम्, श्रौते सम्भवति लक्षणाया अन्याय्यत्वात्। यत्तु "मन्त्रतस्तन्त्रत" इत्यादिवाक्यैः सङ्कीर्त्तनस्य कर्म्माङ्गत्वमुक्तम्, तन्नानिष्टम्। "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयात्" इतिवत्संयोगपृथक्त्वन्यायसम्भवात्। "प्रायश्चित्तानि चीर्णानि" इति तु वाक्यं नाङ्गत्वमवगमयति। किन्तु नारायण-

(१) पू० मी० अ० ३ पा० १ अधि० ६ सू० १२।

पराङ्मुखं पुनन्ति सन्ति नितरां न पुनन्ति सवासनं पापक्षयं न कुर्वन्तीति प्रतिपादयति । अन्यथा निरित्युपसर्गानर्थक्यात् । अत एव "कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते" इत्यत्रात्यन्तिकग्रहणं कृतम् । अत एव कृतप्रायश्चित्तानामपि समयान्तरे पुनः पापे प्रवृत्तिर्दृश्यते । तत्संस्कारस्य विद्यमानत्वात् । न ह्यस्माकमनुभवक्रियाभ्यामेव संस्कारो जायत इति मन्त्रम् । अनुभवत्वक्रियात्वयोरननुगतत्वेन संस्कारकारणतानवच्छेदकत्वात् संस्कारमाधाय नश्यतीत्यस्ति पापसंस्कारः । श्रूयते च—

विष्णुपुराणे ।

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मौ नृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ इति ।

तद्भाविताः=तद्वासनावासिता इत्युक्तं साम्प्रदायिकैः । स च संस्कारो ब्रह्मविद्यया निवर्तते विशिष्टभक्त्या वा, न तु द्वादशाऽब्दादिनेत्याशयेनोक्तं न निष्पुनन्तीति । न त्विदं वाक्यं भक्तेरङ्गत्वं प्रतिपादयतीति सिद्धं स्वातन्त्र्येण सङ्कीर्त्तनस्य दुरितनिवृत्तिहेतुत्वम् ।

नन्वेवं सति स्मार्तप्रायश्चित्तविधीनामानर्थक्यं स्यादिति चेत् ।

अत्र केचिदाहुः ।

स्मार्तप्रायश्चित्तानां बह्वायाससाध्यत्वाद् यानि गुरुतरब्रह्महत्यादिदुरितानि तन्निवर्तकत्वम् । कामतः प्रकाशं कृततन्निवर्त्तकत्वं वाऽऽश्रयणीयम् । भगवत्सङ्कीर्तनस्य तु अल्पायाससाध्यत्वेनाकामतो रहस्यानुष्ठितप्रकीर्णकाद्यल्पदुरितनिवर्त्तकत्वमिति न कस्याप्यानर्थक्यमिति ।

तदयुक्तमित्याचार्य्याः । "स्तेनः सुरापो मित्रध्रुक्" इत्याद्यनेकोदाहृतवाक्यैः स्पष्टं महापातकादिनिवर्तकत्वाभिधानात् ।

कोटिपापानि सन्त्येव स्वल्पानि च बहूनि च ।
न तानि भूयो बाधन्ते हरिनामानुकीर्त्तनात् ॥

इति भविष्योत्तरवाक्येऽविशेषेण सकलपापनाशकत्वाभिधानाच्च । न चैषामबुद्धिपूर्वानुष्ठितविषयत्वम् ।

हनन्ब्राह्मणमत्यन्तं कामतो वा सुरां पिबन् ।

इतिब्रह्मवैवर्त्तवचने कामतः कृतस्यापि निवृत्त्यभिधानात् । नापि रहस्यविषयत्वम् । "प्रसभं वा सुरां पिबन्" इति वह्निपुराणवचने प्रकाशमनुष्ठितस्यापि नाशोक्तेः, "इतस्ततोऽप्युपानिन्ये(१)न्यायतोऽन्यायतो-

( १ ) यतस्ततश्चोपानिन्ये इति श्रीभागते पाठः ।

धन"मित्यादिना प्रकारां बुद्धिपूर्वं महापातकमनुतिष्ठतोऽप्यजामिलस्य नामसङ्कीर्त्तनेन तन्निवृत्तिप्रतिपादनाच्च। विष्णुधर्म्मे च तादृशस्यैव क्षत्रबन्धोः सङ्कीर्त्तनमात्रेण परमपूतत्वाभिधानात्।

विष्णुपुराणेऽपि—

पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः॥
प्रायश्चित्तान्यशेषाणि तपः कर्म्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्॥

इत्यविशेषेण सकलाघनिवर्तकत्वोक्तेः। अत्र चानुस्मरणशब्दस्य सङ्कीर्त्तनपरत्वमुक्तमधस्तात्। स्मरणशब्दप्रयोगस्तु मानसमपि भगवन्नाम्नोऽनुसन्धानं समस्तमघं विलापयतीत्याशयेन कृतः। एतेनैतदप्यपास्तम्। कृष्णशब्दो योगवृत्त्या परब्रह्मपरः, "कृषिर्भूवाचक" इत्यादिवचनात्, अनुस्मरणशब्देन च पुनः पुनश्चिन्तनरूपं निदिध्यासनमुच्यते, तस्य च तत्वज्ञानप्रतिबन्धकदुरितनिवृत्तिजनकत्वाभिधानम्, परत्वं च सकलाघनिवर्त्तकब्रह्मविद्याफलत्वादिति। "क जपो वासुदेवे"ति वाक्यशेषविरोधात्। कृष्णशब्दस्य नन्दनन्दनमूर्तिरूढत्वेन तस्या एव प्रथमप्रतीतेश्च। अतश्चैतद्वाक्यं संकीर्त्तनस्याखिलपापविध्वंसकत्वं प्रतिपादयतीति न युक्तेयं व्यवस्था।

अन्ये तु महाभागा एवमाहुः। श्रद्धाभक्तिज्ञानसम्पन्नस्य सङ्कीर्त्तनेऽधिकारः। तद्रहितस्य तु स्मार्तप्रायश्चित्ते। तथा हि। श्रद्धा नाम सङ्कीर्त्तनस्य पापक्षयसाधनतां प्रतिपादयत्सु पौराणवचनेषु दृढतरो विश्वास इदमित्थमेवेति, एवंविधश्च निश्चयः शास्त्रीयेऽर्थे सर्वत्रेष्यते। तथाचोक्तं भगवता—

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥ इति।

[ गी० अ० ४ श्लो० ४० ]

तथा—

ब्रह्मसंहितायाम्।

यन्नामकीर्त्तनफलं विविधं निशम्य
न श्रद्दधाति मनुते यदुतार्थवादम्।
यो मानुषस्तमिह दुःखचये क्षिपामि
संसारघोरं विविधार्त्तिनिपीडिताङ्गम्॥

इति वाक्यमश्रद्धस्य दुःखप्राप्तिं प्रतिपादयच्छ्रद्धाया उपयोगितामाह। तथा कात्यायनसंहितायां शिवधर्म्मोत्तरे च यथाक्रमम्।

अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ॥
स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ।
विधिवाक्यमिदं सर्वं नार्थवादः शिवात्मकम् ।
लोकानुग्रहकर्ता यः स मृषार्थं कथं वदेत् ॥

इति वाक्यपर्य्यालोचनयापि श्रद्धावतोऽधिकारो गम्यते । एवं "यन्नामकीर्त्तनं भक्त्या" इति विष्णुपुराणवचनं भक्तिमतः कीर्त्तनात्पापक्षयं ब्रवीति । अत्र भक्तिशब्देन भगवदनुराग उच्यते न साधनभक्तिः, तस्याः सङ्कीर्त्तनशब्देनोक्तेः । "भक्त्या सञ्जातया भक्त्या" इत्यत्रानुरागेऽपि भक्तिशब्दप्रयोगाच्च । तथा—

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषुतेष्वच्युताभक्तिरच्युतास्तु सदा त्वयि ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥

इतिपूर्वश्लोकप्रार्थिताया भक्तेरुत्तरश्लोके प्रीतिशब्देन व्यवहाराच्च । तत्र त्वयि भक्तिरविच्युतास्त्वित्युक्ते कीदृशी सेत्याकाङ्क्षायां, अविवेकिनां विषयेषु यादृशी प्रीतिस्तादृशी त्वद्विषया प्रीतिरसर्पतु मेतिनिर्देशेन प्रीतिः सेत्युक्तं भवति । न च हेमाप! लक्ष्मीपते ! या विषयेषु प्रीतिः सा मे हृदयादपसर्पत्विति निर्देशेन विरक्तिप्रार्थनमेवोत्तरश्लोकार्थः किन्न स्यादिति वाच्यम् । उभयप्रार्थने हि भगवताप्युभयविषयोऽनुग्रहः कृतः स्यात् । "भक्तिर्मयि तवास्त्येव भूयोऽप्येवं भविष्यति इति तु भक्तिमात्रानुग्रहो दृश्यते । अतः प्रीतिशब्देन भक्तिरेवोत्तरश्लोके व्यवहृतेति सिद्धं विष्णुपुराणवचनात् प्रेमरूपाया भक्तेरधिकारिविशेषणत्वम् । तथा "केचित्केवलया भक्त्या वासुदेवपरायणा" इत्यत्रापि वासुदेवपरायणानामेव भक्तिरघक्षयसाधनमित्युक्तम् । एवं "यतस्तद्विषया मतिः" "तदुत्तमश्लोकगुणोपलम्भनम्" इतिवचनाभ्यां भगवद्विषयकज्ञानमप्यधिकारिविशेषणमवसीयते, सङ्कीर्त्तनमात्रस्य तद्विषयेत्यादेरानर्थक्यापातात् ।

तथा—

यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ॥
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥

इत्यपि वाक्यं चिन्तनमात्रस्य मुक्तिहेतुत्वोपन्यासेन संकीर्त्तनस्याघनाशकत्वे चित्रताबुद्धिं परिहरच्चिन्तनसापेक्षस्य तस्याघनाशकत्वं दर्शयति। कीर्त्तनमात्रस्य तु नाशकत्वे सत्यपि चिन्तनस्य मुक्तिहेतुत्वे चित्रताबुद्धिः स्यादेव। उभयोः परस्परनिरपेक्षयोर्भगवद्भक्तित्वाविशेषात्। द्वादशाब्दादिनाश्यस्येषत्प्रयत्नसाध्यसङ्कीर्त्तननाश्यत्वासम्भवाच्च। महाफलज्ञानसहकृतत्वे तु भवति चित्रबुद्धिपरिहार इति सिद्धं ज्ञानस्याधिकारिविशेषणत्वम्। तस्मादुक्तव्यवस्थया न स्मार्तप्रायश्चित्तानर्थक्यमिति।

अपरे पुनराचार्या भगवदनुग्रहावगतभगवन्नाममाहात्म्या एवमाहुः। द्विविधमधिकारिविशेषणम्। अर्थसिद्धं, श्रुत्येकसिद्धञ्च। तत्राद्यं कर्मस्वरूपसिद्धावुपयुज्यते। यथा सामर्थ्यविद्वत्त्वादि। न ह्यसमर्थेनाविदुषा शक्यते कर्म कर्तुम्। द्वितीयं तु फलसिद्धौ यथा राजत्वादि, न हि तद्विना कर्मस्वरूपं न सिध्यति, अन्येन त्वनुष्ठितात्फलं न भवति। इदमेवमितिनिश्चयस्तु न श्रुत्येकसिद्धमधिकारिविशेषणम्। "राजा राजसूयेन यजेत" इतिवत्तादृशनिश्चयवान् कुर्य्यादिति श्रुत्यभावात्, बहुवित्तव्ययाऽऽयाससाध्ये कर्मण्यन्वयव्यतिरेकाभ्यां प्रवृत्तिहेतुत्वेन तदुपयोगावधारणाच्च। अत आर्थिकमस्य तत्राधिकारनिमित्तत्वम्। संकीर्त्तने त्वीषत्प्रयत्नसाध्यत्वात् तादृशनिश्चयमन्तरेणापि प्रवृत्तिसिद्धेर्न तस्याधिकारनिमित्तत्वम्। यत्तु "अज्ञश्चाश्रद्दधानश्च" इतिवचनम्, तदज्ञस्येवाश्रद्दधानस्यापि प्रवृत्त्यभावमात्रपरम्। "यन्नामकीर्त्तने" त्यादिवाक्यत्रयं त्वर्थवादबुद्धिनिषेधपरं न श्रद्धावतोऽधिकारप्रतिपादनपरम्। यद्यपि च—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥

[ गी० अ० १७ श्लो० २८ ]

इति वाक्यं सर्वकर्मसु श्रद्धायाः फलोपयोगितामाह। तथा चोक्तं श्रीधरस्वामिभिः यतस्तत्प्रेत्य लोकान्तरे न फलति विगुणत्वादिति।

श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥

इति च विस्पष्टमेव श्रद्धायाः पुरुषविशेषणत्वम्। तथापि संकीर्त्तनेन पापक्षये जनयितव्ये न श्रद्धानियमः। यथोक्तम्—

प्रभासपुराणे,

मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम्।

सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत्कृष्णनाम ॥ इति ।

अत्र तारयेदिति पापक्षयनिर्देशो न मुक्तेः, तस्या आवृत्तिसापेक्षत्वेन सकृदिति निर्देशायोगाच्च ।

वाराहेऽपि,

गोविन्देत्युक्तिमात्रेण हेलया कलिवर्तिनाम् ।
पापौघोविलयं यातीति—

श्रीभागते ।

पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः ।
हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ इति ।
[ श्रीभा० स्कन्ध ६ अ० २ श्लो० १५ ]

सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ इति च ।
[ श्रीभा० स्कन्ध ६ अ० २ श्लो० १४ ]

नचैतेषां स्वार्थपरत्वम् । अजामिलोपाख्यानादेरुपक्रमोपसंहाराभ्यामेतदर्थपरत्वात्, विध्यन्तराशेषत्वाच्च, गतिसामान्याच्च । एतेन भक्तिज्ञानयोर्नियमोऽपि प्रत्युक्तः । भगवत्यनुरक्तस्य तद्विषयज्ञानवतश्च तन्नाम्नि हेलनायोगात् ।

गोविन्देति तथा प्रोक्तं भक्त्या वा भक्तिवर्जितम् ।
दहते सर्वपापानि युगान्ताग्निरिवोत्थितः ॥

इति वाराहवचनाच्च ।

अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ।
सङ्कीर्त्तितं मघं पुंसो दहेदेधो यथानलः ॥
[ श्रीभा० स्कन्ध ६ अ० २ श्लो० १८ ]

यथाऽगदं वीर्य्यतममुपभुक्तं यदृच्छया ।
अजानतोऽप्यात्मगुणं कुर्य्यान्मन्त्रोऽप्युदाहृतः ॥
[ श्रीभा० स्कन्ध० ६ अ० २ श्लो० १९ ]

इति भागवतवचनाच्च । अत्र मन्त्रो नामात्मकः, तथा स्वकार्य्यं कुर्य्यादेव, न हि वस्तुशक्तिः श्रद्धादिकमपेक्षत इत्यर्थः, इत्युक्तं श्रीधरस्वामिभिः । अनुरागरूपायाश्च फलभक्तेः साधनभक्त्यनन्तरं पापक्षये सति जायमानत्वनिर्देशेनाधिकारिविशेषणत्वायोगः । यत्तु "यन्नाम कीर्त्तितं भक्त्ये"ति वाक्यमुपन्यस्तम्, तदप्यनुत्तममिति विशेषणादनुरागयुक्तसङ्कीर्त्तनस्य सवासनपापक्षयहेतुताप्रतिपादनपरम्, पापक्षयमात्रे तु न

तदपेक्षा उक्तानेकवाक्येभ्यः। "केचित्केवलया भक्त्ये"त्यपि वाक्यं सवासनपापक्षयहेतुपरम्।

कचिन्निवर्त्ततेऽभद्रात्कचिच्चरति तत्पुनः।
प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत्॥ इति।

[ श्रीभा० स्क० ६ अ० १ श्लो० १० ]

तस्यैव पुरा पृष्टत्वात्। अतश्च वासुदेवपरायणानामघक्षयमात्रहेतुत्वेनात्र भक्तिर्विधीयते। "आकाशस्तल्लिङ्गात्" [ उ०मी० अ० १ पा० १ सू० २२ ] इत्यनेन न्यायेन प्रश्नप्रतिवचनयोर्वैरूप्यस्यान्याय्यत्वात्। पूर्वोक्तरीत्या पौष्कल्याभिधायकमुख्यकेवलशब्दविरोधाच्च, न हि वासुदेवपरायणत्वसापेक्षत्वे पौष्कल्यं युज्यते। नापि पापक्षयमात्रभक्तेः पुष्कलकारणतामात्रप्रतिपादकमेतत्, प्रश्नवैरूप्यादेव। नापि कात्स्र्न्यशब्दश्रवणात्सवासनपापक्षयोक्तेर्भक्तेः पुष्कलकारणताप्रतिपादनपरत्वम्।

गोविन्देति वदन् जन्तुः प्रत्यहं नियतेन्द्रियः।
सर्वपापविनिर्मुक्त—

इति पूर्वोदाहृतबृहन्नारसिंहवाक्ये उपसर्गद्वयप्रतिपादितसवासनाघक्षयमुद्दिश्याऽऽवृत्तिनियतेन्द्रियत्वविधानेन भक्तेस्तत्र पौष्कल्यायोगात्। न च—

सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रति॥

इत्युदाहृतवाराहवचनान्मोक्षाख्यसवासनपापक्षयेऽपि नावृत्त्यपेक्षेति शङ्क्यम्। मोक्षप्राप्तिहेतुं भक्तिमार्गं गम्यतेऽनेनेति व्युत्पत्त्या गमनशब्देन निर्दिश्य तं प्रत्याधिकारसम्पादकत्वेन परिकरबन्धनशब्दसूचितः पापक्षयस्तेन पुंसा कृत इत्येवमर्थत्वात्तस्य। यच्च "एकेनैव भवेन्मुक्तिर्द्वाभ्यां शम्भुर्ऋणी भवेत्" इति शैवे वचनं तत्रापि त्रिर्महादेवशब्दोक्तिरभ्यासोपलक्षणार्था। उच्चार्यमाणानेकनामव्यक्तीनां च सत्यामपि प्रत्येकमज्ञाननिवर्त्तकज्ञानजननशक्तावन्त्ययैव प्रतिबन्धकदुरिताभावाज्ज्ञानमुत्पद्यते। इतराभ्यस्तु महत्प्रयोजनसमर्थेभ्योऽपि तदलाभान्महत्तरसेवाकर्तुरल्पफललाभे राजेव शम्भुर्ऋणी भवेदित्यर्थः। नापि वासुदेवपरायणत्वमुद्दिश्य भक्तेः पुष्कलकारणत्वमुच्यते। "अघं धुन्वन्ति" इत्यादेरानर्थक्यात् प्रश्नवैरूप्यात्, वासुदेवपरायणपदोदितायाः फलभक्तेः "इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या" इत्यावृत्तिसाध्यत्वावगमाच्च। नापि फलभक्तेः सवासनपापक्षयहेतुता प्रतिपद्यते। "केवलया" इत्यादेरानर्थक्यात्। तस्माद्यथा सवासनया पापक्षयहेतुर्विमर्शनाख्यः साङ्गः

पूर्वश्लोकेषु दृष्टान्तत्वेनोक्तः एवमिहापि तद्धेत्वन्तरं साङ्गं दार्ष्टान्तिकत्वेन तात्पर्य्यवृत्त्या प्रतिपाद्यते । तत्र कार्त्स्न्यशब्देनाघक्षयस्य सवासनत्वनिर्देशः । वासुदेवपरायणशब्दस्तु वासुदेव एव परमयनमाश्रयश्चित्तवृत्तेर्येषामित्येवं तदेकनिष्ठत्वं वदन् तदनुरागरूपां फलभक्तिमाह, तदनुरागं विना तदेकनिष्ठत्वायोगात् । अनुरागोत्पत्तिश्च नासति पापक्षये भवतीति तत्साधनं समर्पयितुं केवलया भक्त्येत्युक्तम् । समर्पणप्रकारस्तु पूर्वमुक्तः । एवञ्च भक्त्यैकसाध्ये पापक्षये सत्युत्पन्नो भगवदनुरागः सवासनं पापं धुनोतीत्येवं शिष्टानुरागस्य सवासनपापक्षयसाधनत्वपरमेतद्वाक्यं नत्वनुरागस्य संकीर्त्तनेन पापक्षये जनयितव्येऽङ्गत्वप्रतिपादनपरमिति सिद्धम् ।

ये अपि "यतस्तद्विषया मतिः" इति । "तदुत्तमश्लोकगुणोपलम्भनम्" इति वचने ज्ञानवतोऽधिकारे प्रमाणत्वेनोपन्यस्ते । तत्रापि ज्ञानवतां "सुनिष्कृतं ज्ञानवतोदाहृतै"रिति न स्पष्टं श्रूयते । कल्पना च "सर्वेषामप्यघवता"मित्युपक्रमविरुद्धा । न चानर्थक्यमनयोः । उक्तार्थोपपत्तिप्रदर्शनार्थत्वात् । यत इत्यस्य तत्रैव स्वारस्यात् । यतो नामोच्चारणादुच्चारयितृविषया भगवतो मतिर्भवति मदीयोऽयं मया सर्वतो रक्षणीय इति । उच्चारयितुर्वा भगवद्विषया तद्गुणविषया वा मतिर्भवति । तत इदमुत्कृष्टं निष्कृतमित्युपपत्तिः । किञ्च संकीर्त्तनस्य प्राप्तस्य तेनाघनिवृत्तिसम्बन्धे ज्ञानगुणसम्बन्धे च वाक्यं भिद्येत । "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र होमस्येव दधीन्द्रियसम्बन्धे । "जगाद चतुरक्षरम्" इत्यक्षरग्रहणं चाक्षरोच्चारणमेव पापं नाशयति न तु स्वजन्यमतिसापेक्षमिति दर्शयति । अन्यथा "यदा नारायणेत्येतज्जगाद" इत्येवावक्ष्यत् । "अज्ञानादथवा ज्ञानात्" इति चास्मिन्प्रकरणे ज्ञानानपेक्षत्वस्य विस्पष्टमुक्तत्वान्न ज्ञानवत एवाधिकारकल्पना युक्ता ।

एतेन "यस्मिन् न्यस्तमति"रित्यत्राप्येषा निरस्ता । प्रत्यक्षवचनविरोधे तदयोगात् । प्रकारान्तरेण चित्रताबुद्धिपरिहारसम्भवाच्च । तथा हि । अत्र नरकशब्देन न दुरितफलनिर्देशः । वक्ष्यमाणाघनिवृत्त्यैव तन्निवृत्तेः सिद्धत्वेन पृथगवचनीयत्वात् । किन्तु नराणां कामित्येवं व्युत्पत्त्या "युवा स्यात् साधुयुवा" इति श्रुतिप्रतिपादितो मानुषः सार्वभौमानन्द उच्यते । तं यस्मिन् न्यस्तमतिर्निवेशितबुद्धिर्न याति न प्राप्नोति । तस्य "शतायुर्वै पुरुष" इति श्रुतेः प्रत्यक्षेण वा विनश्वरस्य तुच्छत्वेन महाफलभगवच्चिन्तनफलत्वायोगात् । तर्हि "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द" इति श्रुतिसिद्धो हैरण्यगर्भा-

नन्दः फलं तत्राह "यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः" इति। तस्याश्वमेधोपासनाजन्यस्यानित्यत्वेन हरिचिन्तनमहन्महिमाननुरूपत्वात्। अनित्यत्वञ्च "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति वचनात्। किं तर्हि फलमत आह। "मुक्तिश्चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः" अतश्चामलत्वनिर्देशेन पापक्षयस्य मुक्तिं प्रति शेषत्वान्न महाफलत्वमिति सूचितम्। पुंसां चेतसि स्थितोऽव्यय इति प्रसिद्धदातृवैलक्षण्यं ध्वनितम्, लोके दातारः स्वमनसि स्थितेभ्यो धनं प्रयच्छन्तो व्ययन्ति अयं पुनः प्रतिगृहीतृहृदयेऽवस्थित एव मुक्तिं प्रयच्छन्न व्येति, एवं केवलमनःसाध्यचिन्तनस्य पापक्षयेनापि साध्या मुक्तिर्यत्र फलं तत्र यन्मनसा ध्यायतीति न्यायेनेन्द्रियद्वयसाध्यसंकीर्त्तनस्य पापक्षयः फलमिति न चित्रमित्याह। "किं चित्र"मित्यादिना। एवमस्य वाक्यस्य चित्रताबुद्धिनिरासपरत्वे सम्भवति न ज्ञानवतोऽधिकारकल्पना युक्ता। "सांकेत्यम्" इत्यादिवचनविरोधात्। ननु श्रद्धादिविहीनं संकीर्त्तनमासन्नमरणस्यैव पापक्षयहेतुभूतं किं न स्यात्। "एतावतालमघनिर्हरणाय पुंसाम्" "संकीर्त्तनं भगवतो गुणकर्मनाम्नाम्"। "विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम्" इत्यत्र म्रियमाणत्वस्य श्रूयमाणत्वात्। तथा, यस्यावतारगुणकर्मविडम्बनानि नामानि येषु विगमे विवशा गृणन्ति" "तेऽनेकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं प्रपद्ये" इत्युक्तिषु विगमश्रवणाच्च, एवं साङ्केत्यादि वाक्यान्यपि समानप्रकरणस्थानि, तत्समानार्थानि च पुराणान्तरगतानि वाक्यानि म्रियमाणाधिकाराण्येव, ततश्च स्मार्तं प्रायश्चित्तं जीवतः पापक्षयहेतुः सङ्कीर्तनं तु म्रियमाणस्येति चेत्। न। "तावत्तिष्ठति देहेऽस्मिन्कालिकल्मषसम्भवम्" इति वाराहवचने गोविन्दसङ्कीर्तनस्य सत्येव देहे पापक्षयहेतुत्वश्रवणात्। अत्र हि गोविन्दसङ्कीर्त्तनावधिकं पापावस्थानमित्युक्तम्, यदि च कृतेऽपि गोविन्दकीर्त्तने जीवतः पापं तिष्ठेत्, तदवधिकत्वप्रतिपादनं विरुध्येत। श्रूयते च-

गच्छन् तिष्ठन् स्वपन् वापि पिबन्भुञ्जन् हसँस्तथा।
कृष्णकृष्णेति सङ्कीर्त्य मुच्यते पापकञ्चुकात्॥

इति वचने वाशब्देन जीवतो यस्यां कस्यांचिदप्यवस्थायां सङ्कीर्त्तनेन पापक्षयः। किञ्च सङ्कीर्त्तनस्य पापक्षये जनयितव्ये म्रियमाणत्वापेक्षायां "केचित्केवलया भक्त्या" इत्युक्तं पौष्कल्यं व्याहन्ये-

त। न च विस्पष्टं श्रूयते म्रियमाणानामेवाघक्षयकरं सङ्कीर्त्तनमिति। कल्पना चोक्तानेकप्रमाणविरोधे न सम्भवतीत्युक्तम्। "एतावताल"मित्यस्य तु स्वारस्येन प्रतीयमानोऽर्थोऽन्य एवाभियुक्तैरुक्तः। तथा हि। अलं शब्दस्तावद् द्व्यर्थः, पर्य्याप्तिवचनो निवारणवचनश्च। तत्रास्य पर्य्याप्तिवचनत्वेऽलं मल्लो मल्लायेतिवदेतावदलमिति प्रथमा स्यात्, तृतीयान्तत्वश्रवणात्तु, अलमतिप्रसङ्गेनेतिवन्निवारणार्थः। एवं चाघक्षयायैतावन्न कर्त्तव्यमित्यर्थः। किं तदित्याकाङ्क्षायामाह। "सङ्कीर्त्तनं भगवतो गुणकर्म्मनाम्ना"मिति। तेषां प्रत्येकं सम्यक्कीर्त्तनस्य सवासनपापक्षयद्वारा मुक्तिहेतुत्वेन पापक्षयमात्रे समुदितानां वैयर्थ्यात्। तस्य यथाकथंचिदुच्चरितान्यतरमात्रसाध्यत्वात्। तदाह विक्रुश्येति। उद्यतदण्डपुरुषदर्शनेनोऽत्पन्नभयतयाक्रोशपूर्वकं न तु स्वपरमनोह्लादनहेतुसुललितम्, तत्रापि पुत्रबुध्या न भगवद्बुध्या, तदपि म्रियमाणत्वेन शिथिलगात्रत्वाच्च स्पष्टम्। तथा प्रसिद्धमहापातकोऽजामिलोऽपि न तु यथाकथञ्चित्प्रमादजातपातकः, सोऽपि मुक्तिनत्वघक्षयमात्रमिति। एवञ्चाघक्षये समुदितानां वैयर्थ्यपरमिदं वाक्यम्। न तु म्रियमाणत्वस्याधिकारिविशेषणत्वपरमपि, वाक्यभेदात्। "यस्यावतारे"त्यपि वचनमसुविगमावस्थायां सङ्कीर्त्तनस्य पापक्षयद्वारा मुक्तिहेतुतामाह न तु तदवस्थान्तरे पापक्षयहेतुतां निराकर्त्तुमिष्टे, उक्तवचनाविरोधात्। अन्यथा विवशत्वश्रवणात् तस्यामप्यवस्थायां तदभावे कृतात्सङ्कीर्तनात्पापक्षयो न स्यात्। "गच्छँस्तिष्ठन्" इत्याद्यवस्थाश्रवणाच्च तदितरावस्थायां कृतस्य तस्य तद्धेतुत्वं न स्यात्। तस्मान्नेयमपि व्यवस्था।

अथ--

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते।
प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम्॥

इति वचनादननुतप्तविषयं स्मार्तप्रायश्चित्तम्। इतरविषयं तु प्रकृतमिति चेत्। न। स्मार्तप्रायश्चित्तेऽप्यनुतापश्रवणात, साङ्केत्यादिवचनविरोधाच्च। उत्कृष्टत्वपरैकशब्दवत्युक्तवचने च सवासनपापक्षयेऽनुतापापेक्षोक्तेः। नापि देशकालाद्यपेक्षया व्यवस्था।

चक्राङ्कितस्य नामानि सदा सर्वत्र कीर्त्तयेत्।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः॥

इति विष्णुधर्म्मवचनात्"यत्र तत्र स्थितो वापी"ति पाद्मवचनाच्च नचैवं सर्वेषामत्रैव प्रवृत्तेः स्मार्तविधीनामानर्थक्यम्। बहुतरदुर्वासना-

वशेन भगवन्नामविमुखानां तत्रैव प्रवृत्तेः। दृश्यन्ते हि तादृशा अपि बहवः पुरुषाः। एवञ्च स्मार्तविधिविरोधाभावेन मन्त्रार्थवादेभ्योऽप्यव-गम्यमाना सङ्कीर्त्तनस्याघक्षयहेतुतावश्यमङ्गीकार्या देवताविग्रहन्याधयात्। तस्माद्यदा कदाचिद्यत्र कुत्रचिच्छ्रद्धाभक्तिज्ञानानुतापशुद्धिरहि-तेनापि सकृदुदितं भगवन्नाम प्रारब्धमहदवमानमबलानुष्ठितपापेतरद-खिलमंहो निवर्त्तयति। प्रारब्धस्य तस्य "तावदेव चिरम्" इति भोगै-कनाश्यत्वावगमात्। इतरयोरप्यंहसोः कीर्त्तनानाश्यत्वश्रवणेन भोगै-कनाश्यत्वात्। यथोक्तं—

पाद्मे-

सतां निन्दानाम्नः परममपराधं वितनुते यतः ख्यातिं यातं कथमु सहते तद्विगर्हामिति?।

नाम्नो बलाद्यस्य हि पापबुद्धिर्नविद्यते तस्य यमैर्विशुद्धिः। इति च।

म्रियमाणेन तु येन केनचित्सकृदुक्तमपि तत् अंहो निवृत्तिं जनयत्काशीमरणन्यायेन मुक्तिं जनयति। "यस्यावतारे" इत्युक्तवत्। श्रद्धादिसम्पन्नेन तु अभ्यस्यमानं भगवन्नाम सवासनपापक्षयं जनयदन्ते नामोच्चारणाभावेऽपि मुक्तावुपयुज्यते। उक्तं हि—

सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्ववाहु
र्यो मां मुकुन्दनरसिंहजनार्दनेति।
जीवो जपत्यनुदिनं मरणे ऋणीव
पाषाणकाष्ठसदृशाय ददामि मुक्तिम्॥ इति।

तथा साधनचतुष्टयसम्पन्नस्यानुष्ठितश्रवणमननस्यापि कुतश्चि-त्प्रतिबन्धाद्भगवति वेदान्तप्रतिपादितस्वरूपे चेतोऽनवतारे भगवन्नामस-ङ्कीर्त्तनं प्रतिबन्धनिवृत्त्या तत्त्वज्ञानोत्पत्तावुपयुज्यते। यथोक्तम्—

नक्तं दिवा च गतभीर्जितनिद्र एको
निर्द्वन्द्व ईक्षितपथो मितभुक् प्रशान्तः।
यद्यच्युते भगवति स्वमनो न सज्जे
न्नामानि तद्रतिकराणि पठेदलज्जः॥ इति।

अत्र च निर्द्वन्द्वत्वादिसङ्कीर्त्तनं तेषामाश्रमधर्मत्वात्। अन्येषां तु आश्रमान्तरवर्तां न तदपेक्षणम् "अनन्यगतयो मर्त्या भोगिनोऽपि" इत्यादिना तद्रहितानामपि भगवन्नामैकनिष्ठानां मुक्तिश्रवणात्। "सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पका" इति नाममात्रैकानिष्ठानां सर्वानपेक्षताप्रतिपादनाच्च। उक्तञ्च भगवत्कौमुदीकाद्भिः।

आकृष्टिः कृतचेतसां सुमहतामुच्चाटनं चांहसा
माचाण्डालममूकलोकसुलभं वश्यश्च मुक्तिश्रियः ॥
नो दीक्षां न च दक्षिणां न च पुरश्चर्य्यां मनागीक्षते
मन्त्रोऽयं रसनास्पृगेव फलति श्रीरामनामात्मकः ॥ इति ।

तत्सिद्धं संकीर्त्तनस्य मुक्तिफलत्वं पापक्षयाद्यनेकफलत्वं चेत्यास्तामेतद्, भगवन्नाममहिम्नो ब्रह्मादिभिरपि साकल्येन वक्तुमशक्यत्वात् ।

अयञ्च संक्षेपः ।

विश्वासभक्त्यर्थधियामभावे कदापि कुत्रापि कथञ्चनापि ।
उक्तं सकृन्नाम हरेर्हरीति ध्वंसं प्रकुर्यादखिलाघराशेः ॥ १ ॥
कृष्णेति रामेति शिवेति शब्दान्विश्वासयुक्तस्तु सदाभ्यसेद्यः ।
लब्ध्वा परां भक्तिमथ प्रबोधं मुक्तः स भूयादिति सिद्धमत्र ॥ २ ॥

कंसध्वंसनहेतुर्दुस्तरभवजलनिधेर्दृढः सेतुः ।
जनको यश्च विधातुस्तुष्टोऽनेन स हरिर्भवतु ॥ २ ॥

इति सङ्कीर्त्तनानिर्णयः ॥

॥ अथ स्मरणनिर्णयः ॥

तत्र स्मरणं नाम भगवन्नामरूपादीनामनुसन्धानध्यानापरपर्य्यायो मानसो व्यापारविशेषः । तच्च कर्तव्यत्वेनोक्तं—

पाद्मे ।

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥ इति ।

स्मरणे च प्रवृत्तिर्नानाविधसत्कर्म्मसाध्येति दर्शयितुं तत्तद्विधीनामेतत् किङ्करत्वमुक्तम् । निषेधानां किङ्करत्वोक्तिरपि तन्निषेध्यानामेतत्प्रवृत्तिप्रतिबन्धकत्वात् । स्मरणस्यात्यन्त सत्वशोधकत्वमुक्तं भागवते ।

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ इति ।
[ श्रीभा० स्क० १२ अ० ३ श्लो० ४८ ]

तस्य भगवन्मूर्त्तिभक्तिवैराग्यज्ञानहेतुत्वमपि ।

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं (१)तनोति ।

---

( १ ) शमं तनोतीति श्रीभागवते पाठः ।

सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानञ्च विज्ञानविरागयुक्तम् ॥ इति ।
[ श्रीभा० स्क० १२ अ० १२ श्लो० ५४ ]

ज्ञानं=मूर्तिस्फूर्तिः । विज्ञानं=सविलासाविद्यानिवर्तकम् । अत्यन्तसत्त्वशुध्यादिकं च स्मरणावृत्त्या भवतीत्याशयेन पाद्मे सततशब्दः । अत एव—

विष्णुपुराणे ।

विष्णुसंस्मरणादेव समस्तक्लेशसंक्षयः ।
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥
तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलकल्मषः ॥ इति ।

ननु पाद्मवैष्णवयोर्विष्णोः कर्मत्वनिर्देशेन स्मरणस्य तदर्थता प्रतीयते । विष्णुश्च मन्त्रवर्णेनोपांशुयाजार्थत्वेनावगत इति स्मरणं तद्द्वारोपांशुयाजाङ्गम्, उत्तमप्रयाजादिगतविष्णुस्मरणवत् । एवञ्च स्मरणस्य परार्थत्वान्मुक्त्यादिफलश्रुतिरर्थवादः, अपापश्लोकश्रवणवदिति चेत् ।

न विधिशब्दस्य मन्त्रत्व इति न्यायेन [ पू० मी० अ० १० पा० ४ अधि० १४ सू २३ ] मान्त्रवर्णिकविष्णुशब्दद्वारैव विष्णोः कर्माङ्गत्वात् । यथा "हृदिस्थे भगवत्यनन्ते" "अविस्मृतिः कृष्णपदारविन्दयो"रिति च शब्दान्तरेणाप्यर्थं निर्दिश्य स्मरणविधानात् उत्तमप्रयाजादिषु तु विष्णुशब्देनैव क्रियमाणस्मरणस्य युक्तमङ्गत्वम् । पदारविन्दयोरत्यन्तं कर्मानङ्गत्वाच्च न तत्स्मरणं तदुपयोगि । विष्णुस्मरणमात्रस्योपांशुयाजार्थता, इतरस्य तु मुक्त्याद्यर्थतेति चेत् । न । तादर्थ्यद्वयकल्पने मूलभूतश्रुतिद्वयकल्पनायां गौरवप्रसङ्गात् । पुराणवाक्यस्य स्वातन्त्र्येण प्रामाण्याभावात् । सर्वविधिनिषेधानां किङ्करत्वप्रतिपादनस्यात्यन्तं निरालम्बनत्वापाताच्च । उपांशुयाजस्य स्वर्गार्थत्वेन स्वर्गस्य विघ्नत्वप्रतिपादनायोगाच्च । एवकारश्रुतेर्मुक्त्युक्तेश्चात्यन्तं वैयर्थ्यापाताच्च सर्वकर्मणाञ्च विष्णुप्रीत्यर्थत्वान्न कर्मत्वनिर्देशो विरुध्यते तस्मात्तत्पुराणांजस्यपर्य्यालोचनयाऽऽवर्त्यमानभगवत्स्मरणस्य स्वातन्त्र्येण मुक्तिहेतुत्वमाश्रयणीयम् । श्रूयते चैतद्गोपालतापनीये ।

सदा मां संस्मरन्ब्रह्म मत्पदं याति निश्चितमिति ।

कैवल्योपनिषद्यपि ।

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ इति ।

अत्र भूतयोनिः=परमात्मा। अदृश्यत्वादिगुणको, धर्म्मोक्तेरिति न्यायात्। सकृत्स्मरणं तु सङ्कीर्त्तनवत्पापक्षयहेतुः। यथोक्तं—

श्रीभागवते।

सकृन्मनः कृष्णपदारविन्दयो
र्निवेशितं तद्गुणरागि यैरिह।
न ते यमं पाशभृतश्च तद्भटान्
स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः॥ इति।

[ श्रीभा० स्क० ६ अ० १ श्लो० १९ ]

मनो निवेशने हेतुस्तद्गुणरागीति। भगवद्गुणेषु रागो यस्य तत्, तथा। गुणाश्च तत्र तत्रोक्ताः।

बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम्।
रन्ध्रान् वेणोरधरसुधया पूरयन्गोपवृन्दै
र्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः॥

[ श्रीभा० स्क० १० अ० २१ श्लो० ५ ]

तं गोरजःक्षुरितकुन्तलबद्धबर्ह
वन्यप्रसूनरुचिरेक्षणचारुहासम्।
वेणुक्वणन्तमनुगैरनुगीतकीर्त्तिं
गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः॥
श्यामं हिरण्यपरिधिं वनमाल्यबर्ह
धातुप्रवालनटवेषमनुव्रतांसे।
विन्यस्तहस्तमपरेण धुनानमब्जं
कर्णोत्पलालककपोलमुखाब्जहासम्॥

[ श्रीभा० स्क० १० अ० २३ श्लो० २२ ]

कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम्॥ इति।

[ श्रीभा० स्क० १० अ० ३५ श्लो० २० ]

तथा—

प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम्।
करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्वणम्॥ इति।

[ श्रीभा० स्क० ७ अ० ८ श्लो० २०-२१ ]

तथा—

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम्॥

वैरूप्याच्छूर्पणख्याः प्रियविरहरुषा रोपितभ्रूविजृम्भ
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कौसलेन्द्रोऽवतान्नः ॥ इति ।

बृहन्नारदीयेऽपि सकृत्स्मरणस्याघघातकतोक्ता ।

सकृत्संस्मरणाद्विष्णोर्नश्यन्ति क्लेशसञ्चयाः ॥ इति ।

पाद्मेऽपि—

प्रयाणे चाप्रयाणे च यन्नामस्मरतां नृणाम् ।
सद्यो नश्यति पापौघो नमस्तस्मै चिदात्मने ॥ इति ।

शुचित्वाद्यनपेक्षत्वञ्चोक्तं—

भविष्ये—

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेद्देवमीशानं न स पापेन लिप्यते ॥ इति ।

विष्णुरहस्ये—

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ इति ।

स्मरणप्रकारश्च—

श्रीभागवते ।

एकैकशोऽङ्गानि धियानुभावयेत
पादादियावद्धसितं गदाभृतः ।
जितं जितं स्थानमपोह्य धारयेत्
परं परं शुध्यति धीर्यथायथा ॥ इति ।

[ श्रीभा० स्कन्ध० २ अ० २ श्लो० १३ ]

म्रियमाणतादशायां तु भगवत्स्मरणमेकमप्यनेकधर्मसाध्यं मुक्तिहेतु च ।

एतावान्सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः ॥

[ श्रीभा० स्कन्ध० २ अ० १ श्लो० ६ )

तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम् ।
म्रियमाणो ह्यवहितस्ततो याहि परां गतिम् ॥

[ श्रीभा० स्क० १२ अ० ३ श्लो० ४९ ]

म्रियमाणैरभिध्येयो भगवान्परमेश्वरः ।
आत्मभावं नयत्यङ्ग सर्वात्मा सर्वदर्शनः(१) ॥

[ श्रीभा० स्क० १२ अ० ३ श्लो० ५० ]

---

( १ ) सर्वसंश्रयः, सर्वसंभव इति च पाठान्तरम् ।

ज्ञातवचनेभ्यः—

तदिदं भगवत्स्मरणं स्वादिरतावत्कर्म्मसाद्गुण्यार्थमपि ।

न्यूनातिरिक्ततासिद्धौ कलौ वेदोक्तकर्म्मणाम् ।
हरिस्मरणमेवात्र सम्पूर्णं फलदायकम् ॥
हरिस्मरणनिष्ठानां हरिपूजारतात्मनाम् ।
सत्यं समस्तकर्म्माणि यान्ति सम्पूर्णतां द्विजाः ॥

इति बृहन्नारदीयोक्तेः । प्रतिकर्म्मावृत्तित्वमभिप्रेत्य निष्ठरतशब्दोक्तिः । अनन्तरवचनात् "यस्य स्मृत्ये"ति वचनाच्च स्मरणस्य पूजाकीर्त्तनाभ्यां समुच्चये प्राप्ते केवलस्मरणस्यापि साद्गुण्यकरत्वज्ञापनायैवकारः । समुच्चयनैरपेक्ष्ये शक्ताशक्ताधिकारिभेदेन पद्धत्यवैगुण्यवैगुण्यभेदेन वा व्यवस्थापनीये । बहुवचनं कर्मसम्बन्धिसकलपुरुषाभिप्रायेण । फलान्तरार्थमप्यमुष्योक्तं—

गोपालोत्तरतापनीये ।

व्रजस्त्रियां यमुनापारवासिने दुर्वाससे भैक्ष्यं दातुमुद्यतानां यमुनातरणोपायं कृष्णेति ब्रह्मचारीतिस्मरणमुपादिश्य श्रुतम् "यं मां स्मृत्वाऽगाधा गाधा भवति, यं मां स्मृत्वाऽपूतः पूतो भवति, यं मां स्मृत्वाऽव्रती व्रती भवति, यं मां स्मृत्वा सकामो निष्कामो भवति, यं मां स्मृत्वाऽश्रोत्रियः श्रोत्रियो भवतीति दिक् ।

सकृत्स्मृतो योऽखिलपापहन्ता स्मृतोऽसकृद्यश्च विमुक्तिदाता ।
विश्वोद्भवावस्थितिनाशकर्त्ता तुष्टः स भूयाद्यमुनाविहर्ता ॥ १ ॥

इति कामस्मरणनिर्णयः ।

अथ पादसेवननिर्णयः ।

पादसेवनं नाम भगवत्परिचर्य्या, चमरान्दोलनपर्वमहोत्सवाद्यनेकरूपा । सा च सामान्यतः कर्तव्यत्वेनोक्ता ।

श्रीभागवते—

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम् ।
न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ इति ।
[ श्रीभा० स्क० ११ अ० २ श्लो० २ ]

अत्र च नैव वैगुण्यशङ्केत्युक्तं तत्रैव—

मन्येऽकुतश्चिद्भयमच्युतस्य पादाम्बुजोपासनमत्र नित्यम् ।
उद्विग्नबुद्धेरसदात्मभावात् सर्वात्मना(१) यत्र निवर्त्तते भीः ॥ इति ।
[ श्रीभा० स्क० ११ अ० २ श्लो० ३३ ]

( १ ) विश्वात्मनेति श्रीभागवते पाठः ।

अस्यान्तः करणशोधकत्वे—

यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितं मलं धियः।
सद्यः क्षिणोत्यन्वहमेधती सती यथा पदाङ्गुष्ठविनिःसृता सरित्॥इति
[श्रीभा० स्क० ४ अ० २१ श्लो० ३१]

वैराग्यादिहेतुत्वे संसारदुःखनिवर्त्तकत्वे च—

विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्य्यवान्।
यदङ्घ्रिमूले कृतकेतनः पुनर्न संसृतिं क्लेशवहां प्रपद्यते॥ इति।
[श्रीभा० स्क० ४ अ० २१ श्लो० ३२]

तावद्भयं द्रविणगेहसुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः।
तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः॥
[श्रीभा० स्क० ३ अ० ९ श्लो० ६]

इति च।

पुरुषार्थचतुष्टयहेतुत्वे—

धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः।
एकमेव हरेस्तत्र कारणं पादसेवनम्॥ इति।

एवञ्च सर्वापि भगवत्परिचर्य्योक्तप्रणालिकया मुक्तिहेतुरिति सिद्धम्।

अथ सांवत्सरिकास्तद्विशेषाः।

तत्र फाल्गुनकृष्णप्रतिपदि श्रीभगवतो दोलोत्सवः कार्य्यः।

चैत्रे मासि सिते पक्षे एकादश्यां नरोत्तमः।
दोलारूढं महाविष्णुं कुर्याद्भक्त्या महोत्सवम्। इत्यपि क्वचित्।

एतन्महिमा चोक्तो—

गारुडे।

दोलारूढं प्रपश्यन्ति कृष्णं कलिमलापहम्।
अपराधसहस्रैस्तु मुक्तास्ते घूर्णने कृते॥
आन्दोलनदिने प्राप्ते रुद्रेण सहिताः सुराः।
कुर्वन्ति प्राङ्गणे नृत्यं गीतं वाद्यञ्च हर्षिताः॥
तावत्तिष्ठन्ति पापानि जन्मकोटिकृतान्यपि।
यावन्नान्दोलयेद् भूप कृष्णं कंसविनाशिनम्॥
दोलास्थितस्य कृष्णस्य येऽग्रे कुर्वन्ति जागरम्।
सर्वपुण्यफलावाप्तिर्निमेषेणैव जायते॥
दोलास्थितं तु ये विष्णुं पश्यन्ति मधुमाधवे।
क्रीडन्ते विष्णुना सार्द्धं वैकुण्ठे देववन्दिताः(१)॥

(१) देवपूजिता इति पाठान्तरम्।

तस्मात्सर्वप्रयत्नेन दोलायात्रामहोत्सवः ।
कार्य्यः सर्वफलावाप्त्यै सर्वपापहरः शुभः ॥ इति ।

तथा चैत्रशुक्लद्वादश्यां दमनकोत्सवः ।

यथोक्तं तत्रैव—

चैत्रे मासि तथा विष्णोः कार्य्यो दमनकोत्सवः ।
वैष्णवैर्विष्णुभक्त्या च जनतानन्दवर्धनः ।
देवानन्दसमुद्भूता दिव्या दमनमञ्जरी ॥
निवेद्या विष्णवे भक्त्या सर्वपुण्यफलेप्सुभिः ॥ इति ।

रामार्चनचन्द्रिकायाम्—

द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।
बौधायनादिभिः प्रोक्तः कर्त्तव्यः प्रतिवत्सरम् ॥
पारणाहे न लभ्येत द्वादशी घटिकापि चेत् ।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे ॥ इति ।
माधवे दमनारोपो मधौ न विहितो यदि ।
वैशाख्यां श्रावणे भाद्रे कर्त्तव्यं वा तदर्पणम् ॥ इति च ।

अथ प्रयोगः ।

उपवासदिने प्रातः स्नानादि निर्वर्त्य दमनकारामं गत्वा क्रमेण तमादाय चन्दनादिना तत्रैव तं प्रपूजयेत् । श्रीकृष्णपूजार्थं त्वां नेष्यामीति सम्प्रार्थ्य प्रणमेत् । यथादैवतमन्यत्रोहः । तत उत्पाट्य कारुहस्ते दत्वा तस्मै मूल्यदानपूर्वकं तत आदाय पञ्चगव्येनाभिषिच्य शुद्धोदकेन प्रक्षाल्याशोकमूले स्थण्डिले स्थापयित्वा तस्मिन्दमनकेऽशोककालवसन्तकामान् गन्धाद्यैः प्रपूजयेत् । शुचौ देशे काममात्रं पूजयेदित्यन्ये ।

अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन ।
शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे ॥

इत्यशोकम् ।

त्रुट्यादिकालपर्य्यन्तः कालरूपो महाबलः ।
कलते चैव यः सर्वं तस्मै कालात्मने नमः ॥

इति कालम्—

वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताप्रिय ।
सहस्रमुखसंवाह ! कालरूप ! नमोऽस्तु ते ॥

इति वसन्तम्—

काम ! भस्मसमुद्भूत ! रतिबाष्पपरिप्लुत ।

ऋषिगन्धर्वदेवादिविमोहक ! नमोस्तु ते ॥ इति कामम्।

एवञ्चतुरो देवांस्तत्र सम्पूज्य—

नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते ॥

इति दमनकमुपतिष्ठेत् । तत ओंकामाय नम इति मन्त्रेण सपरिवारमन्मथरूपिणं दमनं गन्धादिभिस्तत एवोद्भूतदमनेन पूजयेत् । ततो धौतनववाससाऽऽच्छाद्य नवे वैणवे पटले निधाय मङ्गलवाद्यगीतपुरुषसूक्तादिवेदघोषेण स्वगृहमानयेत् । ततो रात्रौ देवं सम्पूज्य तदनुज्ञया दमनाधिवासनं कुर्य्यात् । तादित्थं देवस्य पुरतः स्थण्डिलमुपलिप्य तत्राष्टदलं कमलं कृत्वा सितपीतकृष्णरक्तवर्णैः सम्पूर्य तद्बहिश्चतुष्कोणं विधाय पीतवर्णेन सम्पूर्य तद्बहिर्वर्त्तुलमण्डलत्रयं विधाय श्वेतरक्तपीतैः सम्पूर्य्य तद्बहिश्चतुष्कोणं विधाय रक्तवर्णेन पूरयेत् , सर्वतोभद्रं वा सम्पादयेत् । उपरि पञ्चवर्णं वितानं कुर्यात् । उक्तमण्डले शुद्धोदकपूर्णं हेमरत्नफलयुतं कुम्भं निधाय तस्मिन् दमनपटलं संस्थाप्य—

पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः ।
दमन त्वमिहागच्छ सान्निध्यं कुरु ते नमः ॥

इति दमनके तत्र तद्देवतामावाहयेत् । ततो दमनपूर्वभागे क्लीं कामदेवाय नमः । ह्रीं रत्यै नमः । इति रतिसहितं कामदेवं गन्धादिभिः पूजयेत् । क्लीं भस्मशरीराय नमः । इत्याग्नेय्याम् । क्लींमनङ्गाय नमः । इति दक्षिणस्याम् । क्लीं मन्मथाय नमः । इति नैर्ऋत्याम् । क्लीं वसन्तसखाय नमः । इवि वारुण्याम् । क्लीं स्मराय नमः । इति वायव्याम् । क्लींमिक्षुचापाय नमः । इति कौबेर्य्याम् । क्लीं पुष्पबाणाय नमः । इतीशान्याम् । ह्रीं रत्यै नम इत्यस्य सर्वत्रानुषङ्गः । ततः "तत्पुरुषाय विद्महे कामदेवाय धीमहि । तन्नोऽनङ्गः प्रचोदयात" इति कामगायत्र्या दमनमष्टोत्तरशतमभिमन्त्र्य, गन्धादिभिः सम्पूज्य, हृदयमन्त्रेण पुष्पाञ्जलिं निवेद्य,

नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मन्थाय जगन्नेत्रे रतिप्रिय नमोऽस्तु ते ॥

इति नमस्कुर्यात् ।

ततः—

क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥

इति परमेश्वरं प्रार्थ्य, पुष्पाञ्जलिं दत्वा, दमनं सर्वतो रक्षन् गीता-

दिना रात्रिमतिवाहयेत् । इत्यधिवासनम् ।

प्रातर्नित्यपूजान्तं विधायानेकोपचारैः पुनः सम्पूज्य दमनमञ्जरीं सदूर्वां गन्धाक्षतयुक्तां मूलमन्त्रेणाभिमन्त्र्य कराभ्यां गृहीत्वा—

देवदेव जगन्नाथ वाञ्छितार्थप्रदायक ।
हृत्स्थान् पूरय मे विष्णो कामान्कामेश्वरीप्रिय ।
इमं दमनकं देव गृहाण मदनुग्रहात् ।
इमां सांवत्सरीं पूजां भगवन्परिपूरय ॥

इतिजप्त्वा मूलमन्त्रेण भगवत्यर्पयेत् । ततो यथाशोभं दमनकमारोप्य भगवन्तं प्रार्थयेत् ।

मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ! ॥
वनमालां यथादेव कौस्तुभं सततं हृदि ।
तद्वद्दामनकीं मालां पूजां च हृदये वह ॥
जानताजानता वापि न कृतं यत्तवार्चनम् ।
तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यत्पूजितं मयादेव परिपूर्णं तदस्तु मे ॥ इति ॥

ततो देवं नमस्कृत्य गुरुं दमनेन वस्त्रादिना च सम्पूज्य भगवति कर्म निवेद्य स्वयं च तत्प्रसादत्वेन दमनशेषं धृत्वा द्विजान्सम्पूज्य भोजयेत् । स्वयं च बन्धुभिः सह भुञ्जीतेति । इति दमनोत्सवः ।

अथ जलक्रीडोत्सवः ॥

गारुडे—

निक्षिप्य जलपात्रे तु मासे माधवसंज्ञके ।
माधवं येऽर्चयिष्यन्ति देवतास्ते नरा भुवि ॥
स्वर्णपात्रेऽथवा रौप्ये ताम्रे वा मृन्मयेऽपि वा ।
तोयस्थं योऽर्चयेद्देवं शालिग्रामसमुद्भवम् ॥
प्रतिमां वा महाभाग तस्य पुण्यमनन्तकम् ।
तस्माज्ज्येष्ठे सदा भूप ! तोयस्थं योऽर्चयेद्धरिम् ॥
वीततापो नरस्तिष्ठेद्यावदाभूतसंप्लवम् ॥ इति ।
शेषः कालविकल्पोऽयमुष्णस्य तारतम्यतः ।
गन्धोदकयुते पात्रे नित्यपूजां समाप्य च ॥

अतिवाह्य दिनं रात्रौ नीत्वा देवं निजासनम् ।
पञ्चोपचारैः सम्पूज्य तीर्थं प्राश्य विसर्जयेत ।
आत्मानं गृहदारादि तेन तीर्थेन पावयेत् ॥
द्वादश्यां तु जले रात्रावर्चयेद्गरुडोक्तितः ।
द्वादश्यां पूजयेद्रात्रौ जलस्थं जलशायिनम ॥ इति ।

विष्णुधर्मोत्तरे—

वैशाखे पूर्णमास्यां वै जलस्थं जगदीश्वरम् ।
पूजयेद्वैष्णवो भक्त्या कृत्वोत्साहं मुदान्वितः ॥
गीतवाद्यपताकाद्यैः कृत्वा पुण्यमहोत्सवम् ।
ज्येष्ठस्यैकादशीं शुक्लां यजेत्तावत् प्रहर्षितः ॥ इति ।

अथ प्रसङ्गाद् वसन्तपुष्पमहिमा ।

मल्लिकाकुसुमैर्देवं वसन्ते गरुडध्वजम् ।
अर्चयेत् परया भक्त्या मुक्तिभागी भवेन्नरः ॥
यः पुनः पाटलैः पुष्पैर्वसन्ते गरुडध्वजम् ।
अर्चयेत्परया भक्त्या दहेत्पापं त्रिधार्जितम् ॥ इति ।
यः पश्यति तृतीयायां कृष्णं चन्दनरूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥

इति वचनाच्च छन्दतोऽनुष्ठेयः ।

आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ॥
तस्यां रथे समारोप्य भगवन्तं रमापतिम् ।
यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान् बहून् ॥

इति स्कान्दवचनाद्रथोत्सवोऽपि ।

अथाषाढशुक्लद्वादश्यां शयनोत्सवः ॥

रामार्चनचन्द्रिकायां गारुडे—

मिथुनस्थे सहस्रांशौ न स्वापयति यो हरिम् ।
वैष्णवैः सह संभूय ह्यनावृष्टिस्तदा भवेत् ॥

भविष्ये—

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलाराशिगते तस्मिन् पुनरुत्थापयेत्प्रभुम् ॥

अथ प्रयोगः ॥

पारणाहे पूर्वरात्रौ महतीं पूजां वाद्यघोषयुतां विधाय वैष्णवान- भ्यर्च्य भगवन्तं नीराज्य नरयान आरोप्य वैष्णवैः सह गीतवादित्रनृ-

त्यघोषैर्जलाशयं नीत्वा पुष्पाञ्जलिं दत्वा यानादुत्तार्य्य तीरेऽङ्घ्रिन्यास-माशास्य हस्तं दत्वोपवेशयेत् । धौताङ्घ्रिपाणिराचान्तः श्रीविष्णोरनुग्र-हार्थं शयनीक्षीरामहोत्सवं करिष्य इति सङ्कल्यात्मन्यासपूर्वकं देवन्या-सं कृत्वा "स्वर्णघर्म्मानुवाकेन "पुरुषसूक्तेन"उत्तरनारायणेन" चाभिषि-च्य पञ्चामृतेन संस्नाप्य सम्पूज्य जय जय महाविष्णो विश्वमनुगृहा-णेति सम्प्रार्थ्य जलमध्ये पर्य्यङ्कं शुक्लवस्त्रसमाच्छन्नं सोपधानं संस्थाप्य तस्मिन् भगवन्तम् "अतो देव" इति मन्त्रेण प्रस्वापयेत् ।

शेष पर्य्यङ्कवर्य्येऽस्मिन् फणामणिगणामले ।
श्वेतद्वीपान्तरे देव कुरु निद्रां नमोऽस्तु ते ॥

इति नमस्कृत्य गन्धादिभिर्महापूजां कृत्वा,

सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् ।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाव्यय ॥

इति सम्प्रार्थ्य देवस्याग्रे चातुर्मास्यव्रतानि स्वीकुर्य्यात् ।

चतुरो वार्षिकान् मासान्देवस्योत्थापनावधि ।
इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥
इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात् तव केशव ॥
गृहीतेऽस्मिन् व्रते देव पञ्चत्वं यदि मे भवेत् ।
तदा सम्पूर्णतां यातु प्रसादात्ते जनार्द्दन ॥ इति ।

श्रावणे शाकस्य वर्जनं भाद्रे दध्नः, आश्विने पयसः, कार्तिके द्विद-लस्येति चातुर्मास्यव्रतसंक्षेपः । विस्तरस्तु व्रतप्रकाशे ज्ञेयः । अशक्तौ यः कश्चिन्नियमोऽनुष्ठेयः ।

आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्य्यात् यत्किञ्चिन्नियतो नरः ॥

इति मदनरत्ने महाभारतवचनात् । ततो यथाशक्ति देवं स्तुत्वा प्रजा-पाले राजनि मङ्गलमाशास्य शङ्खचरणतीर्थं वैष्णवैः सहाभिवन्द्य प्राश्य गीतादिना भगवन्तं परितोष्य वैष्णवान् सम्पूज्य नरयाने भगवन्तमा-रोप्य गीतादिघोषैर्मन्दिरमानीय नीराज्य वैष्णवान् विसृज्य निजासने उपवेश्य कर्म निवेदयेत् । इति शयनोत्सवः ।

अथ पवित्रारोपणोत्सवः ।

हेमाद्रौ—
विष्णुरहस्ये ।

श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।

द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥

तच्च नित्यमुक्तं बह्वृचपरिशिष्टे ।

विधिना शास्त्रदृष्टेन यो न कुर्य्यात्पवित्रकम् ॥
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ॥ इति ।

पाद्मेऽपि—

ऊर्जे व्रतं मधौ दोलां श्रावणे तन्तुपूजनम् ।
चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः ॥

गारुडेऽपि—

प्रावृट्काले तु ये मर्त्या नार्चिष्यन्ति पवित्रकैः ।
तेषां सांवत्सरी पूजाऽफलं तस्य भविष्यति ॥

तस्य=पवित्राख्यनागस्य(१) ।

मन्त्रप्रकाशे—

अथ चाद्विघ्नयोगेन मुख्यकालो न लभ्यते ॥
कन्यायां चापि कुर्वीत यावन्नोत्तिष्ठते हरिः(२) ॥ इति ।

अथ प्रयोगः ।

दशम्यां हैमरौप्यताम्रान्यतमसूत्रेण तदसम्भवे पट्टसूत्रेण तदभावे कुमार्या कर्त्तितेन कार्पासेन पवित्राणि कार्य्याणि ।

तद्यथा—

स्नात्वा त्रिगुणं त्रिगुणीकृत्य पञ्चगव्येन प्रोक्ष्य शुद्धोदकेन प्रणवेन

(१) अत्रेदमनुसन्धेयम् ।

कनीयान् वासुकेर्भ्राता पवित्रो नाम नागराट् ।
निराहारव्रतो भूत्वा दैविकं शरदां शतम् ॥
तपस्तेपे समाश्रित्य देवदेवं महेश्वरम् ।
प्रसन्नस्तपसा तस्य पुरतः पुरुषोत्तमः ॥
प्रणतार्तिहरः शम्भुराविरासीदुमाधवः ।
प्रसादाभिमुखं दृष्ट्वा देवं स भुजगेश्वरः ॥
कण्ठाभरणतां प्राप्तुं वव्रे वरमनुत्तमम् ।
तथेत्याभाषितं कण्ठे दधार त्रिपुरान्तकः ॥
ये त्वां न बहु मन्यन्ते यथा सम्भावितो मया ।
जपहोमादिजं तेषां फलं त्वामेतु निश्चयात् ॥ इति ।

(२) अन्यत्रापि—

पवित्रारोपणं विघ्नात् श्रावणे न भवेद् यदि ।
कार्त्तिकावधिसिंहार्के कर्तव्यमिति नारदः ॥ इति ।

प्रक्षाल्य मूलमन्त्रेण शङ्खोदकेनाष्टोत्तरशतमभिषिच्य भगवद्गायत्र्या ता
वद्वारमभिमन्त्र्य नवसूत्र्याष्टोत्तरशततदर्द्धतदर्द्धगुणितानि क्रमेण देव
स्य जानूरुनाभिपर्य्यन्तान्युत्तममध्यमकनिष्ठानि पवित्राणि सम्पाद्य तेषु
यथाक्रमं षट्त्रिंशच्चतुर्विंशतिद्वादशसंख्याकानङ्गुष्ठपर्वतदर्द्धमात्रान् ग्र-
न्थीन् कृत्वा अष्टोत्तरसहस्रगुणितमुक्तद्विगुणं वा वनमालापवित्रं नि-
र्माय तस्मिन्नष्टोत्तरशतं ग्रन्थीन् कुर्य्यात् । "चत्वारो ग्रन्थयः स्मृताः"
इति तु गारुडे । ततो याजमानपवित्रं गन्धपवित्रं च कनिष्ठेन समं कृत्वा
गुर्वग्न्योः पवित्रे मध्यमसमे निबध्य साधारणपवित्राणि त्रिभिस्त्रिभिः
सूत्रैः कुर्य्यात् । ततोऽष्टाक्षरेण पवित्राण्यभिमन्त्र्य कुङ्कुमगोरोचनकर्पूरै-
रञ्जयित्वा "इदं विष्णु"रितिमन्त्रेणोत्तमाधिवासकं त्रिरभिमन्त्रयेत्, द्विर्म-
ध्यमम्, सकृत्कनिष्ठम् , ततो नववैणवपटले तानि निधाय शुभ्रवस्त्रे-
णाच्छाद्य देवस्य पुरतः स्थापयेत् । ततोऽपामार्गेण दन्तधावनं कृत्वा
स्नात्वा नित्यक्रियां विधाय भगवन्तं संपूज्य प्रार्थयेत ।

क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ।
मयैतत् क्रियते देव तव तुष्ट्यै पवित्रकम् ॥
न हि विघ्नो भवेदत्र कुरु नाथ दयां मयि ।
सर्वथा सर्वदा विष्णो ! मम त्वं परमा गतिः ॥ इति ।

तत एकभक्तं कृत्वा तां रात्रिमतिवाहयेत् । इति दशमीकृत्यम् ।

अथैकादशीकृत्यम् ।

अथैकादश्यां नित्यपूजान्तं कृत्वा देवस्य पुरतः सर्वतोभद्रे पुण्या-
म्बुपूर्णं कुम्भं निधाय तस्मिन्पवित्रपटलं संस्थाप्य फलपुष्पमालाल-
ङ्कृतं वितानमुपर्याबध्य भगवन्तमभ्यर्च्य पायसं निवेद्य—

सांवत्सरस्य यागस्य पवित्रीकरणाय भोः ।
विष्णुलोकात् पवित्राद्य आगच्छेह नमोऽस्तु ते ॥

इति मन्त्रेण मूलमन्त्रयुतेन पवित्रं तं तुष्ट्याऽऽवाह्योत्तममध्यकनिष्ठेषु
ब्रह्मविष्णुशिवान् सत्वरजस्तमांसि वेदत्रयं लोकत्रयं चाऽऽवाह्य वनमा-
लायां प्रकृतिमावाह्य तदीये मौकुटे भागे द्युलोकमावाह्य—

सर्वाभरणचित्राङ्ग सर्वदेव नमोऽस्तु ते (१) ।
लावण्यरूपविश्वात्मन् ज्येष्ठसूत्रं समाश्रय ॥
सर्वाधारधरारूप सर्वकर्तः प्रजापते ।
सर्वथात्मेश सूत्रेऽस्मिन् सान्निध्यं कुरु ते नमः ॥

( १ ) सर्वदेवनमस्कृत इत्यन्यत्र पाठः ।

अतिवेग जगद्योने पुरुषात्मन्विश्वरूपते ।
कनीयो मे प्रभो देव तेजसा सूत्रमाश्रय ॥

इति त्रिभिर्मन्त्रैरुत्तमादीनि त्रीण्यभिमन्त्र्य,

प्रकृतिर्जगतः कर्त्री सर्वलावण्यदायिनी ।
श्रीसूत्र नित्यकल्याणि सांनिध्यं कुरु ते नमः ॥
सर्वरत्नोज्वलाकार ब्रह्माण्डब्रह्मरोचिष ।
मुकुटोत्तमसर्वाङ्ग श्रियः सूत्र इहेहि भोः ॥

इति वनमालातदूर्ध्वभागावभिमन्त्रयेत् । तत आवाहितदेवता मूलमन्त्रेण सम्पूज्य त्रिसूत्र्यां ब्रह्मविष्णुशिवान् नवसूत्र्यामोङ्कारसोमवह्निब्रह्मनागशशिरविशिवविश्वेदेवान् ग्रन्थिषु क्रियापौरुषीवीराविजयेशापराजितामनोन्मनीजयाभद्रामुक्तिदा आवाह्य गन्धादिभिस्ताम्बूलान्तैः सम्पूजयेत् । ततो गन्धपवित्रं धूपितं गृहीत्वा प्रणवेनाभिमन्त्र्य—

विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ।
सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ॥

इतिमन्त्रेण मूलमन्त्रेण च देवस्य पादयोः समर्प्य नीराज्य पञ्चोपचारैः सम्पूज्य स्तवैः स्तुत्वा देवं निमन्त्रयेत् ।

आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥
क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधो भव ते नमः ॥ इति ।

ततो देवं नत्वा देवाय सूत्रेभ्यश्च पुष्पाञ्जलिं निवेद्य सूत्राणि सर्वतो रक्षन् गीतादिना रात्रौ जागरणं कुर्यात् । इत्यधिवासनम् ।

अथ प्रातर्नित्यपूजान्ते पवित्रपूजां कृत्वा नीराज्य स्तुत्वा नत्वा मङ्गलघोषपूर्वकं गन्धदूर्वाक्षतयुक्तानि उत्तममध्यमकनिष्ठानि क्रमेण मूलमन्त्रेणादाय ज्येष्ठमष्टाविंशत्या मूलमन्त्रेणाभिमन्त्र्य,

कृष्ण कृष्ण नमस्तुभ्यं गृहाणेदं पवित्रकम् ।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ॥

इति मूलमन्त्रेण निवेदयेत् । एवं मध्यमम् । ततः कनिष्ठम् । ततो वनमालामष्टाविंशत्याभिमन्त्र्य—

वनमालां यथादेव कौस्तुभं सततं हृदि ।
तद्वत्पवित्रन्तूतंस्त्वं पूजां स्वहृदये वह ॥

इत्युच्चार्य मूलेन मुकुटमारभ्य विनिवेदयेत्। ततो हैममुख्यानीतरा-ण्यष्टोत्तरशतेनाष्टाविंशत्या वाभिमन्त्र्य—साधारणपवित्राणि परिवार-देवताभ्यो नामभिर्दत्वा देवाय महानैवेद्यं ताम्बूलञ्च निवेद्य नीराज्य चामरैः संवीज्य दर्पणं प्रदर्श्य पुष्पाञ्जलिं दत्वा प्रार्थयेत्।

मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज॥
जानताजानतावापि न कृतं यत्तवार्चनम्।
केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्वा क्षमस्व मधुसूदन॥ इति।

ततो नमस्कृत्य मूलमन्त्रं यथाशक्ति प्रजप्याग्नौ देवमावाह्य नित्य-होमं निर्वर्त्य मूलेन पवित्रं समर्प्य वह्निस्थदेवं प्रतिमायामुद्वास्य गुरु-समीपमागत्य गन्धवस्त्रालङ्कारादिसमर्पणपूर्वकं पवित्रं समर्प्य शक्त्या द-क्षिणां दत्वा नमस्कुर्य्यात्। ततो वैष्णवद्विजान्संपूज्य तेभ्यः पवित्राणि दत्वा याजमानपवित्रं स्वयं धृत्वा ब्राह्मणान् सम्भोज्य यथाशक्ति द-क्षिणां दत्वा बन्धुभिः सह भुञ्जीत। ततः त्रिरात्रमहोरात्रं वा देवे पवि-त्राणि धारयेत्। तावति काले ब्रह्मचारी हविष्याशी भवेत्। अभिषेक-समये पवित्राणि उत्तार्य पुनर्दद्यात्। ततो देवमभ्यर्च्य सूत्रं विसर्जयेत्।

सांवत्सरीं शुभां पूजां सम्पाद्य विधिवन्मम।
व्रजेदानीं पवित्र! त्वं विष्णुलोकं विसर्जितः॥ इति।

ततो भगवति कर्म्म निवेदयेत्। न रात्रौ हरिं स्नापयेत्। दमनक-पवित्रद्वादश्योस्तु न रात्रावपि कुर्य्यादिति नृसिंहपरिचर्य्योक्तेः॥ इति पवि-त्रारोपणोत्सवः।

अथ कटदानोत्सवः।

मदनरत्ने,

भविष्योत्तरे।

प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि।
कटदानं भवेद्विष्णोर्महापूजां प्रवर्तयेत्॥ इति।

महापातकनाशनमिति नृसिंहपरिचर्य्यायां पाठः। कटदानं=वि-ष्णोः शयनस्याङ्गपरिवृत्तिकरणम्। द्वादश्यामेतदिति तु रामार्चनचन्द्रि-कायाम्।

तत्प्रयोगश्च व्रतसङ्कल्पवर्जं शयनोत्सववद् द्रष्टव्यः। सङ्कल्पे कट-

दानोत्सवं करिष्ये इति विशेषः। शेषे पर्यङ्केति मन्त्रस्थाने च—

देवदेव जगन्नाथ योगिगम्य निरञ्जन।
कटदानं कुरुष्वाद्य प्राप्ते भाद्रपदे शुभे॥

इत्युच्चार्य्य कर्णिकापरिवृत्तिं विदध्यात्। इति कटदानोत्सवः।

अथाश्विनशुक्लदशम्यां सीमातिक्रमणोत्सवः।

भविष्ये—

शमीयुक्तं जगन्नाथं भक्तानामभयङ्करम्।
अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः॥

स्कान्दे।

आश्विनस्य सिते पक्षे सीमातिक्रमणोत्सवम्।
दशम्यां वैष्णवः कुर्य्याद्गीतवाद्यभटैर्वृतः॥ इति।

शमीपूजनाङ्गमन्त्रश्च रामार्चनचन्द्रिकायाम्।

शमी शमयते पापं शमी लोहितकण्टकी।
धरित्र्यर्जुनबाणानां रामस्य प्रियवादिनी॥ इति।
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम्।
गीतवादित्रनिर्घोषैस्ततो देवं गृहं नयेत्॥ इति सीमातिक्रमणोत्सवः।

अथ कार्त्तिकोत्सवः।

स्कान्दे।

कार्त्तिके नार्चितो यैस्तु भक्तियोगेन केशवः।
नरकं ते गमिष्यन्ति यमदूतैश्च मन्त्रिताः॥ इति।

विष्णुरहस्ये कार्त्तिकं प्रकृत्य—

मालतीन्दीवरैः पद्मैः कमलैश्च सुगन्धिभिः।
कुसुमोसीरकर्पूरैर्विलिप्य वरचन्दनैः॥
नैवेद्यधूपदीपाद्यैरर्चयेत्तु जनार्द्दनम्।
मनसा कर्म्मणा वाचा पूजयेद्गरुडध्वजम्॥
कुर्यात् तदीयस्तवनं बृहद्भक्तिजितेन्द्रिय। इति।

रात्रिचतुर्थभागे च गानादिना जागरणं निर्वर्त्य स्नात्वा किञ्चि-द्व्रतं विधेयमित्युक्तं—

रामार्चनचन्द्रिकायाम्।

कार्त्तिके पश्चिमे यामे तव गीतं करोति यः।
वसते वै स वैकुण्ठे पितृभिः सह नारद॥
नीराजयेत्तं ततः स्नायाद्विधिना तुष्टये हरेः।
व्रतं चरेत्तथा किञ्चिच्छ्रुत्वोर्जमहिमानकम्॥ इति कार्त्तिकोत्सवः।

अथ भगवत्प्रबोधोत्सवः।

मदनरत्ने ब्राह्मे।

एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम्।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः॥ इति।

तत्रैव भविष्योत्तरे।

कार्त्तिके शुक्लपक्षस्य एकादश्यां पृथासुत।
मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद् द्विजः॥

मन्त्रः—

ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय।
बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव॥
इयञ्च द्वादशी देव प्रबोधार्थं सुनिर्मिता।
त्वयैव सर्वलोकानां हितार्थं शेषशायिना॥
उत्तिष्ठोत्तिष्ठ गोविन्द नारायण जगत्पते।
त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत्॥ इति।

वाराहे।

कुमुदस्य च मासस्य भवेद् या द्वादशी शुभा॥ इति प्रकृत्य
कृत्वा ममैवं कर्म्माणि द्वादश्यां तत्र माधवि॥
ममैवाराधनार्थाय इमं मन्त्रमुदीरयेत्।

मन्त्रः—

"ब्रह्मणा रुद्रेण च स्तूयमानो भवानृषिवन्दितो वन्दनीय प्राप्ता द्वादशीयं ते प्रबुध्यस्व जाग्रस्व मेघाः गताः पूर्णश्चन्द्रः शारदानि पुष्पाणि लोकनाथ तुभ्यमहं ददानि" इति। रामार्चनचन्द्रिकायामपि द्वादशीविधानाद्द्वादश्युक्ता, "अथ कार्तिकशुक्लार्क" इत्यादिना। एवञ्च वाराहेऽपि विस्पष्टं द्वादशीविधानाद्भविष्योत्तरवाराहमन्त्रवर्णयोश्च तत्सङ्कीर्त्तनात्सकलशिष्टाचाराच्च द्वादश्यामेव प्रबोधोत्सवः। अन्यथा भविष्योत्तर एकादशीविधानात्तत्र तत्करणे तत्रत्यमन्त्रवर्णस्यासमवेतार्थता स्यात्। एकादशीवद् द्वादश्या अपि विहितत्वेनात्यन्तं बाधायोगात, अष्टदोषदुष्टविकल्पापत्तेश्च। तस्मादेकादशीश्रवणं तत्र लौकिकोपकल्पनाभिप्रायं बहुश्रुत्यनुरोधेन व्याख्येयम्। "सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः" इतिवाक्यगतक्रीणातिरिवावभृथदीक्षादिश्रुत्यनुरोधेन क्रयोपकल्पनपरः (१)। उक्तञ्च नृसिंहपरिचर्य्यायामेतत् "एकादश्यामुपोषितः समाहितो वा भूत्वा द्वादश्यां नक्तं शयनोत्थापनव्रतं कुर्य्यादिति वचनद्वयार्थो व्याख्येयः, तदाकाशं वायुं सृष्ट्वा तेजोऽसृजतेतिवत्" इति। तस्माद् द्वाद-

(१) स्पष्टं चेदं पूर्वमीमांसैकादशाध्यायद्वितीयपादगतचतुर्दशाधिकरणे।

श्यामेवायमनुष्ठेयः ।

अथ प्रयोगः ।

शयनोत्सववज्जलाशयं गत्वा सङ्कल्पपर्यन्तं विधाय प्रबोधोत्सवं कुर्व इति सङ्कल्प्य तद्वदेव सम्पूज्य भविष्यमन्त्रेण वाराहमन्त्रेण वेदं विष्णुरिति मन्त्रयुक्तेन, वादित्रघोषैश्च जलतल्पादुत्थाप्य तीरे समुपवेश्य महानुग्रहं प्रार्थयेत् ।

सोऽसावदभ्रकरुणो भगवान्प्रवृद्ध
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
उत्थाय विश्वविजयाय च नो विषादं
माध्व्या गिरापनयतात्पुरुषः पुराणः ॥ इति ।

ततः पुष्पाञ्जलिं निवेदयेत् ।

गता मेघा वियच्चैव निर्मलं निर्मला दिशः ।
शारदानि च पुष्पाणि गृहाण मम केशव ॥ इति ।

"आपो वा इदमासं सलिलमेव" इत्यनुवाकं जप्त्वा पञ्चामृताभिषेकपूर्वकं पुरुषसूक्तेनाभिषिच्य नीराज्य न्यासपूर्वकं गन्धादिभिर्महापूजां कृत्वा कर्पूरेण नीराज्य साक्षतजलमादाय प्रतिमासव्रतानि निर्दिश्य भगवानेतैः प्रीयतामिति भगवति निवेद्य "जयजय जह्यजाम्" इति वेदस्तुत्या स्तुत्वा-

स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां
ध्यायन्तु भूतानि शिवं मिथो धिया ।
मनश्च भद्रं भजतादधोक्षजे
आवेश्यतां नो मतिरप्यहैतुकी ॥

इत्याशिषः प्रार्थ्य गीतादिघोषैर्भगवन्तं रथ आरोप्य जयजयस्वनपूर्वकं पञ्चोपचारैः सम्पूज्याशिषः प्रार्थयेत् ।

युक्तः शैब्यादिवाहैर्मधुमधुररणत्किङ्किणीजालमालै
रत्नौघैर्मौक्तिकानामविरलमणिभिः सम्भृतश्चैव हारैः ।
हैमैः कुम्भैः (१)पताकाशिवतररुचिभिर्भूषितः केतुमुख्यै
श्छत्रैर्ब्रह्मेशवन्द्यो दुरितहरहरेः पातु जैत्रो रथो वः ॥
पलायध्वं पलायध्वं रे रे दितिजदानवाः ।
संरक्षणाय लोकानां रथारूढो नृकेशरी ॥ इति ।

ततो भगवत्प्रसादमालामादाय प्रह्लादादिभिराकृष्यमाणरथं परिभाव्य स्वयं वैष्णवैः सहाकर्षणं कुर्वन्पुरमध्ये रथं भ्रामयेत् ।

---

(१) शिवतररुचिभिरिति अन्यत्र पाठः ।

यथोक्तं रामार्चनचन्द्रिकायाम् ।

नृत्यैर्वाद्यैर्भागवतैः घण्टावाद्यजयस्वनैः ।
भ्रामयेत्स्यन्दनं विष्णोः पुरमध्ये समन्ततः ॥
रथेन सह गच्छन्ति पुरतः पृष्ठतोऽग्रतः ।
महाविष्णुसमा ह्येते भवन्त्यङ्घ्रिभवा अपि ॥ इति ।

स्वस्वगृहागतश्च देवः सर्वैः पूज्यः ।

येषां गृहागतो याति रथस्थः श्रीनृकेसरी ॥
पूजा तैस्तैः प्रकर्तव्या वित्तशाठ्यविवर्जितैः ।

इति तत्रैव वचनात् । ततश्च स्वगृहागमनादि शयनोत्सववत्कार्यम् । इति बोधनोत्सवः ॥

अथ जयन्तीसंक्षेपः ।

मत्स्योऽभूद् धुतभुग्दिने मधुसिते, कूर्मो विधौ माधवे,
वाराहो गिरिजासुते नभसि, यद् भूते सिते माधवे ।
सिंहो, भाद्रपदे सिते हरिदिने श्रीवामनो, माधवे
रामो गौरितिथावतः परमभूद्रामो नवम्यां मधाः ॥
कृष्णोऽष्टम्यां नभसि च परे चाश्विने यद्दशम्यां
बौद्धः, कल्की नभसि समभूच्छुक्लषष्ठ्यां क्रमेण ॥ इति ।

हुतभुग्दिनं=प्रतिपत्(१) । विधुः=दशमी । गिरिजासुतः=चतुर्थी । भूतं=चतुर्दशी । हरिदिनं=द्वादशी । गौरीतिथिः=तृतीया ।

तत्रार्घ्यमन्त्राः ।

सत्यव्रतोपदेशाय जिह्ममीनशरीरधृक् ।
प्रलयाब्धिकृतावास गृहाणार्घ्यं नमोऽस्तु ते ॥
धृतवान् कूर्मरूपेण मन्दरं क्षीरसागरे ।
स्वभक्तरक्षणपरो गृहाणार्घ्यं नमोऽस्तु ते ॥
ब्रह्मनासिकसम्भूत शङ्खचक्रगदाधर ।
वराहरूप देवेश गृहाणार्घ्यं नमोऽस्तु ते ॥
कश्यपादितिसम्भूत वटुरूपि जगद्गुरो ।
कृपया देवदेवेश गृहाणार्घ्यं नमोऽस्तु ते ॥
जमदग्निसुतो वीर क्षत्रियान्तकर प्रभो ।

(१) एतेनात्र हुतभुग्दिनं तृतीयेति केषां चिद्व्याख्यानं न सयुक्तिकम् । अग्निवाचकेन हुतभुक्शब्देन त्रित्वलक्षणाद्वारा तृतीयायां लक्षितायां लक्षितलक्षणास्यादतस्तदपेक्षयाऽग्निदेवत्यतया प्रसिद्धायाः प्रतिपद एव षष्ठीसमासेन ग्रहीतुमुचितमिति व्यञ्जितमिति विभावनीयम् ।

गृहाणार्घ्यं मया दत्तं कृपया परमेश्वर ॥
दानवानां विमोहाय महामोहस्वरूपधृक् ।
गृहाणार्घ्यं मया दत्तं दीनबन्धो नमोऽस्तु ते ॥
भूभारोत्तारणार्थाय संबलग्रामसम्भव ।
गृहाणार्घ्यं मया दत्तं कल्किनि परमात्मने ॥ इति ।

अर्घ्यदानं च षोडशोपचारैः सम्पूज्य तत्तज्जन्मकाले विधेयम् । जन्मकालास्तु--

अह्नो मध्ये वामनो रामरामौ
मत्स्यः क्रोडश्चापराह्णे विभागे ।
कूर्मः सिंहो बौद्धकल्की च सायं
कृष्णो रात्रौ कालसाम्ये च पूर्वौ ॥ इति जयन्त्युत्सवाः ।

अथार्चननिर्णयः ।

अर्चनं पूजा । सा चाभ्युदयनिःश्रेयसहेतुरिति तत्र तत्रोक्तम् । श्रीभागवते तावत् ।

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिमतो विन्दत्यभीप्सितम् ॥ इति ।

तथार्चनं प्रकृत्य--

एतद्वदन्ति मुनयो मुहुर्निःश्रेयसं नृणाम् ।
नारदो भगवान् व्यास आचार्योऽङ्गिरसः सुतः ॥ इति ।
एतत्कमलपत्राक्ष कर्म्मबन्धविमोचनम् । इति च ।

बृहन्नारदीये ।

शिवपूजापरो वापि विष्णुपूजापरोऽपि वा ।
यत्र तिष्ठति तत्रैव लक्ष्मीः सर्वाश्च देवताः ॥ इति ।
यत्र पूजापरो विष्णोस्तत्र वह्निर्न बाधते ।
राजापि तस्करो वापि व्याधयश्च न सन्ति हि ॥
प्रेताः पिशाचाः कूष्माण्डा ग्रहा बालग्रहास्तथा ।
डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्चकम् ॥ इति ।

तथा ।

मनोहरैश्च गन्धैश्च पुष्पैश्च सुमनोहरैः ।
अभ्यर्च्य विष्णुमीशं वा तत्तत्सारूप्यतां व्रजेत् ॥ इति ।
शङ्करस्याथवा विष्णोर्घृतयुक्तश्च गुग्गुलम् ।
दत्वा धूपं नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ इति च ।
तिलतैलान्वितं दीपं विष्णोर्वा शङ्करस्य वा ।

दत्त्वा नरः सर्वकामान् सम्प्राप्नोति नरोत्तम ॥
घृतेन दीपं यो दद्याच्छङ्करायाथ विष्णवे ।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत् ॥
यद्यदिष्टतमं भोज्यं तत्तदीशाय विष्णवे ।
दत्त्वा तु तत्पदं याति चत्वारिंशत्कुलान्वितः ॥ इति ।

कौर्मेऽपि ।

एष देवो महादेवः सदा संसारभीरुभिः ।
ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिङ्गे महेश्वरः ॥
येऽर्चयिष्यन्ति मां नित्यं भक्त्या कलियुगे द्विजाः ।
विधिना वेददृष्टेन ते गमिष्यन्ति तत्पदम् ॥
नार्चयन्ति हरे रूपं शिवं ये श्रुतिनोदितम् ।
तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥ इति ।

नरसिंहपुराणेऽपि ।

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजादयः ।
सम्पूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम् ॥
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः ।
सम्पूज्य तं सुरश्रेष्ठं प्राप्नुवन्त्यभिवाञ्छितम् ॥ इति ।

शालग्रामार्चने फलविशेषो नृसिंहपरिचर्यायाम्—

स्कान्दे ।

शालग्रामशिलालिङ्गे यः करोति समर्चनम् ॥
तेनार्चितं कार्तिकेय ! युगानामेकसप्ततिः ॥ इति ।

लिङ्गपुराणेऽपि ।

गन्धमाल्यार्घ्यनैवेद्यैः शालग्रामशिलार्चनम् ।
कुरुते मानवो यस्तु कलौ भक्तिपरायणः ॥
कल्पकोटिसहस्राणि रमते सन्निधौ हरेः ॥ इति ।

अन्यान्यपि पूजास्थानान्युक्तानि—

श्रीभागवते । ( स्कन्ध० ११ अ० २७ श्लो० ९ )

अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये वाप्सु हृदि द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत्स्वगुरुं माममायया ॥ इति ॥

अथ प्रयोगः । ब्राह्मे मुहूर्त उत्थाय श्रीगोविन्दं स्मृत्वा—

प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतमदवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥

प्रातर्नमामि वचसा मनसा च मूर्ध्ना पादारविन्दयुगलं परमस्य पुंसः।
नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य॥
प्रातर्भजामि भजतामभयङ्करं तं प्राक्सर्वजन्मकृतपापभयापहत्यै।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरशोकप्रणाशमकरोद् धृतशङ्खचक्रः॥
प्रातः स्मरामि दधिघोषविनीतनिद्रं निद्रावसानरमणीयमुखारविन्दम्।
हृद्यानवद्यवपुषं नवकञ्जनाभमुन्निद्रपद्मनयनं नवनीतचोरम्॥

इति पठित्वा शौचदन्तधावनमुखप्रक्षालनानि विधाय भगवन्तं ध्यात्वा तत्पादोदकं धारयित्वात्मीयां तनुं शुद्धां विचिन्त्य तीर्थं गत्वा परमेश्वरप्रीतये स्नानादिकं करिष्ये इति सङ्कल्प्य स्वगृह्योक्तस्नानं विधायाचान्तः, "अस्त्राय फट्" इत्यस्त्रमन्त्रेणाभिमन्त्र्यास्त्रेणैकभागेनाङ्गानि प्रक्षाल्य भागान्तरेण सर्वदेहमालिप्य तीर्थे निमज्ज्यास्त्रमन्त्रं यथाशक्त्यावर्त्योन्मज्ज्याचम्य हृन्मन्त्रेणाङ्कुशमुद्रया तीर्थमावाहयेत; गङ्गायां नेति केचित्। भागान्तरं जले विलाङ्ग्याष्टदलमालिख्य तत्र देवमालिख्य तत्र देवमावाह्य पञ्चोपचारैरभ्यर्च्य शक्तितो मूलमन्त्रेणाघमर्षणं कृत्वा "कृष्ण मां पावय" इति निमज्ज्य "पूतोऽस्मि" इत्युन्मज्ज्य मूलेन कुम्भमुद्रया स्वात्मानमभिषिञ्चेत्।

दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु।
व्यवकाशमेकमुष्टिं कुर्यात् सा कुम्भमुद्रिका॥

ततो जलेनोर्ध्वपुण्ड्रं विधाय "कृष्णं तर्पयामि" इति त्रीनञ्जलीन् क्षिप्त्वा पूर्ववत् संपूज्य पञ्चाङ्गानि सन्न्यस्य हृदि देवमुद्वास्य तटमागत्य द्विराचम्यास्त्रभू शुद्धे वस्त्रे परिधाय द्विराचम्य दश तिलकान् मृदा कुर्यात् "केशवाय नमः" इति ललाटे प्रथमं, स च दशाङ्गुलः कार्यः। "दशाङ्गुलप्रमाणं यदुत्तमोत्तममुच्यते" इत्यादित्यपुराणात्। अन्यान्यपि परिमाणान्तराणि ग्रन्थान्तरोक्तानि यथाचारं कर्तव्यानि। "नारायणाय नमः" इत्युदरे "माधवाय नमः" इति हृदि। "गोविन्दाय नमः" इति कण्ठे। "विष्णवे नमः" इति दक्षिणकुक्षौ। "मधुसूदनाय नमः" इति दक्षिणबाहौ। "त्रिविक्रमाय नमः" इति दक्षिणकर्णे। "वामनाय नमः" इति वामकुक्षौ। "श्रीधराय नमः" इति वामबाहौ "हृषीकेशाय नमः" इति वामकर्णे "पद्मनाभाय नमः" इति अपरभागे। "दामोदराय नमः" इति कटौ। तदिदं तिलकधारणं नित्यम्।

यागो दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्॥

इति मदनपारिजाते ब्रह्मपुराणवचनात् । ततो वैदिकीं सन्ध्यां कृत्वा मूलेन त्रिवारं मार्जनमष्टाविंशतिवारं तर्पणं रविमण्डलस्थदेवाय द्वादशवाराऽर्घ्यप्रदानं दशवाराभिमन्त्रितजलपानञ्च कृत्वा सूर्य्यादीन्नमस्कृत्य पूजामन्दिरं गच्छेदित्युक्तं मन्त्रप्रकाशिकायां विद्यारण्यैः । अथ धौताङ्घ्रिचरण आचान्तो देववेश्मनि सम्मार्जनोपलेपनाङ्गणप्रोक्षणानि स्वस्तिकादीनि च कुर्य्यात् । एतन्माहिमा—

बृहन्नारदीये ।

देवतायतने राजन् कृत्वा सम्मार्जनं नरः ।
यत्फलं समवाप्नोति तन्मे निगदतः शृणु ॥
यावत्यः पांशुकणिकाः सम्यक् संमार्जिता नृप ! ।
तावत् युगसहस्राणि विष्णुलोके महीयते ॥
यस्तु देवालये राजन्नपि गोचर्ममात्रकम् ।
जलेनासेचनं कुर्य्यात् तस्य पुण्यफलं शृणु ॥
यावत्यः पांशुकणिका द्रवीभूता जनेश्वर ।
तावज्जन्मार्जितैः पापैः सद्य एव प्रमुच्यते ॥
गन्धोदकेन यो मर्त्यो देवतायतने नृप ।
भक्तितः सेचनं कुर्य्यात् तस्य पुण्यफलं शृणु ॥
द्रवीभूतानि यावन्ति रजांसि मनुजेश्वर ।
तावद्वर्षसहस्राणि हरिसारूप्यमश्नुते ॥
शिलाचूर्णेन यो मर्त्यो देवतायतने नृप ।
करोति स्वस्तिकादीनि तेषां पुण्यं निशामय ॥
यावत्यः कणिका भूमौ क्षिप्ता रविकुलोद्भव ।
तावद्युगसहस्राणि हरिसालोक्यमश्नुते ॥ इति ।

वाराहेऽपि ।

गृहीत्वा गोमयं देवि मम वेश्मोपलेपयेत् ।
न्यस्तानि तत्र यावन्ति पतन्ति च विलिम्पतः ॥
तावद्वर्षसहस्राणि दिव्यानि दिवि मोदते ।
सम्मार्जनं प्रवक्ष्यामि तच्छृणुस्व वसुन्धरे ॥
यां गतिं पुरुषाः यान्ति स्त्रियो वा कर्म्मणि स्थिताः ।
शुचिर्भागवतः शुद्धो ह्यपराधविवर्जितः ॥
यावन्तः पांसवो भूमेरुद्धीयन्ते तु चालिताः ।
तावद्वर्षशतान्याशु स्वर्गलोके महीयते ॥ इति ।

अथ पूजापात्राणि प्रक्षाल्य गन्धपुष्पादीन्युपकल्प्य देवस्य पुरतः

कौशाद्यासने स्थित्वा स्वपुरतः शङ्खं संस्थाप्य स्वस्य दक्षिणतो गन्धा-द्युत्तरतः स्वयमाहृतशुद्धजलपूर्णकुम्भमासाद्य देवस्य दक्षिणतो घृत-दीपं वामतस्तैलदीपं विधाय शङ्खघण्टानादपुरःसरं नानास्तोत्रैर्भग-वन्तं बोधयेत्। नादयोर्महिमा—

बृहन्नारदीये—

देवतायतने कुर्वन् राजन् शङ्खरवं नरः।
सर्वपापविनिर्मुक्तो ब्रह्मणा सह मोदते।
देवतायतने ये तु घण्टानादं प्रकुर्वते।
तेषां पुण्यानि कथितुं कः समर्थोऽस्ति पण्डित॥ इति।

वाराहे—

विना भेर्यादिशब्देन द्वारस्योद्घाटनं मम।
महापराधं जानीयात् द्वात्रिंशन्तं(१) मम प्रिये॥ इति।

आदिशब्देन शङ्खादि। उद्घाटनं नामात्रप्रबोधो विवक्षितः। तत्र

(१) अत्र भेर्यादिशब्दं विना देवद्वारोद्घाटनस्यैकत्रिंशत्त्वेन महापराधस्य च द्वा-त्रिंशत्तमत्वेन ग्रहणादन्येषामाकाङ्क्षिततया पूजायां सर्वैः सर्वथा हेयतया चेतरेऽपि त्रिंश-दपराधा भक्तजनसौकर्यायात्र समावेशिताः, ते च यथा वाराहपुराणे ११७ अध्याये—वराह उवाचेत्युपक्रम्य उक्ताः—

प्रथमं चापराधान्नं न रोचेत मम प्रिये।
भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्तनः॥
द्वितीयस्त्वपराधोऽयं धर्मविघ्नाय वै भवेत्।
गत्वा मैथुनसंयोगं योनुमां स्पृशते नरः॥
तृतीयमपराधन्तु कल्पयामि वसुन्धरे।
दृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते॥
चतुर्थमपराधन्तु दृष्टं नैव क्षमाम्यहम्।
स्पृष्ट्वा तु मृतकञ्चैव ह्यसंस्कारकृतं तु वै॥
पञ्चमञ्चापराधं च न क्षमामि वसुन्धरे।
दृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते तु माम्॥
षष्ठं तं चापराधं वै न क्षमामि वसुन्धरे।
ममार्चनस्य काले तु पुरीषं यस्तु गच्छति॥
सप्तमं चापराधन्तु कल्पयामि वसुन्धरे।
यस्तु नीलेन वस्त्रेण प्रावृतो मां प्रपद्यते॥
अष्टमं चापराधं च कल्पयामि वसुन्धरे।
ममैवार्चनकाले यस्त्वसमं वै प्रभाषते॥

वापराधप्रायश्चित्तप्रकरणे "भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत्" इत्युक्तेः। स्तोत्राणि तु—

शौरे जागृहि जागृहि क्षणमपि त्वामन्तरेणाखिलं
नैव स्थातुमलं कुतः सुखफलं भुञ्जीत विश्वं विभो।
तेनोत्तिष्ठ कृपाविशिष्ट निलय स्वां दृष्टिमुन्मीलय
त्रैलोक्योपरि तां प्रसारय हरे! पीयूषधारामिव॥
श्रीजाने जगदीश जागृहि जय त्रैलोक्यमालोकयतां
देवेश स्वदृशा विलोकय तया पीयूषसम्पूर्णया।
साचेदञ्चति किञ्चिदेव कुटिला सत्ता समालम्बतां

नवमं चापराधं तं न शोचामि वसुन्धरे।
अविधानं तु यः स्पृश्य मामेव प्रतिपद्यते॥
दशमश्चापराधोऽयं मम चाप्रियकारकः।
क्रुद्धस्तु यानि कर्माणि कुरुते कर्मकारकः॥
एकादशापराधं तु कल्पयामि वसुन्धरे।
अकर्मण्यानि पुण्यानि यस्तु मामुपकल्पयेत्॥
द्वादशं चापराधं तं कल्पयामि वसुन्धरे।
यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति॥
त्रयोदशं चापराधं कल्पयामि वसुन्धरे।
अन्धकारे च मां देवि यः स्पृशेत कदाचन॥
चतुर्दशापराधं तु कल्पयामि वसुन्धरे।
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत्॥
अपराधं पञ्चदशं कल्पयामि वसुन्धरे।
अधौतेन तु वस्त्रेण यस्तु मामुपकल्पयेत्॥
षोडशन्त्वपराधानां कल्पयामि वरानने।
स्वयमन्नं तु यो भ्रयादज्ञानादपि माधवि॥
अपराधं सप्तदशं कल्पयामि वसुन्धरे।
यस्तु मात्स्यानि मांसानि भक्षयित्वा प्रपद्यते॥
अष्टादशापराधं च कल्पयामि वसुन्धरे।
जालपादं भक्षयित्वा यस्तु मामुपसर्पति॥
एकोनविंशापराधं कल्पयामि वसुन्धरे।
यस्तु मे दीपकं स्पृष्ट्वा मामेव प्रतिपद्यते॥
विंशकं चापराधं तं कल्पयामि वरानने।

क्वेदं भूमितलं क्व चापि सलिलं क्वाग्निरनलः क्वानिलः ॥ इत्यादीनि ।
ततो भगवन्तं प्रबुद्धं नीराज्य दन्तधावनं समर्प्य निर्माल्यमपसार्य पूजामारभेत । आचम्य प्राणानायम्य तिथ्यादि संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं यथाशक्ति यथामिलितोपचारैः पूजनं करिष्य इति संकल्प्य "पृथ्वि त्वये"ति मन्त्रेण स्वस्तिकासन उपविशेत् ।
वाराहे—

जानूर्वोरन्तरे सम्यक् कृत्वा पादतले शुभे ।
ऋजुकायो भवेद्योगी स्वस्तिकं तत्प्रवक्ष्यते ।
पुण्यं निगदितुं तस्य कः समर्थोऽस्ति पण्डितः ॥ इति ।
अपसर्पन्तु ये भूता ये भूता दिवि संस्थिताः ॥
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।

सहस्रार "हुं फट् , इति रक्षां दिक्षु विधाय दक्षिणतो गं गणपतये

श्मशानं यस्तु वै गत्वा मामेव प्रतिपद्यते ॥
एकविंशापराधं तं कल्पयामि वसुन्धरे ।
पिण्याकं भक्षयित्वा तु यो मामेवाभिगच्छति ॥
द्वाविंशं चापराधं तं कल्पयामि प्रिये सदा ।
यस्तु वाराहमांसानि प्रमारेणोपपादयेत् ॥
अपराधं त्रयोविंशं कल्पयामि वसुन्धरे ।
सुरां पीत्वा तु यो मर्त्यः कदाचिदुपसर्पति ॥
अपराधं चतुर्विंशं कल्पयामि वसुन्धरे ।
यः कुसुम्भं च मे शाकं भक्षयित्वोपचक्रमे ॥
अपराधं पञ्चविंशं कल्पयामि वसुन्धरे ।
परप्रावरणेनैव यस्तु मामुपसर्पति ॥
अपराधेषु षड्विंशं कल्पयामि वसुन्धरे ।
नवान्नं यस्तु भक्ष्येत न देवान् न पितॄन् यजेत् ॥
सप्तविंशं चापराधं कल्पयामि गुणान्विते ।
उपनाहौ च प्रपदे तथा वापीं च गच्छति ॥
अपराधं त्वष्टविंशं कल्पयामि गुणान्विते ।
शरीरं मर्दयित्वा तु यो मामाप्नोति माधवि ॥
एकोनत्रिंशापराधो न स स्वर्गेषु गच्छति ।
अजीर्णेन समाविष्टो यस्तु मामुपगच्छति ॥
त्रिंशकं चापराधं तं कल्पयामि यशस्विनि ।
गन्धपुष्पाण्यदत्वा तु यस्तु धूपं प्रयच्छति ॥ इति ।

नमः। दुं दुर्गायै नमः। सं सरस्वत्यै नमः। क्षं क्षेत्रपालाय नमः। इति नमस्कृत्य वामतो गुरुपरम्परां नमेत्। यथासम्प्रदायं वामतोऽस्त्रमन्त्रेण पाणी शोधयित्वा तालत्रयं विधाय चक्राय स्वाहा अङ्गुष्ठाभ्यां नमः। विचक्राय स्वाहा तर्जनीभ्यां नमः। सुचक्राय स्वाहा मध्यमाभ्यां नमः। त्रैलोक्यरक्षणचक्राय स्वाहा अनामिकाभ्यां नमः। असुरान्तकचक्राय स्वाहा कनिष्ठिकाभ्यां नमः। इत्यङ्गुलिन्यासं कृत्वा एवमेव हृदयादिन्यासं कुर्यात्। आचक्राय स्वाहा हृदयाय नमः। इति अङ्गुष्ठरहितावक्रकराङ्गुलिभिर्हृदि, विचक्रायस्वाहा शिरसे स्वाहेति एताभिरेव शिरसि, सुचक्रायस्वाहा शिखायै वषट् इति अधोंगुष्ठमुष्टिना शिखायां, त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुमिति व्यस्तकरद्वयाङ्गुलिभिर्धर्मणि, असुरान्तकचक्रायस्वाहा अस्त्राय फडिति अङ्गुष्ठेन मध्यमाङ्गुलित्रयं संपीड्य सरलया तर्जन्या वामाङ्गुष्ठमूलमास्फालयेदिति पञ्चाङ्गन्यासं कृत्वाचार्यो मूलमन्त्रन्यासं कुर्यात्। ततः तद्विष्णोः परमं पदमिति मूलमन्त्रेण च कलशमभिमन्त्र्य कर्पूरादिना तुलसीदलैश्च संस्कृत्य तदुदकेन शङ्खमुक्तमन्त्राभ्यामापूर्य गन्धपुष्पतुलसीदलैः संस्कृत्योक्तमन्त्राभ्यामभिमन्त्र्य तज्जलं पात्रं गृहीत्वा तुलसीदलैरात्मानं वस्त्रादिभिर्विभूषितं देवासनं पूजाङ्गानि च पात्रगन्धादीनि मूलमन्त्रेण प्रोक्ष्य पाद्यार्घ्यार्थं त्रीणि पात्राणि कलशोदकेनापूर्य पाद्यार्घ्यपात्रयोर्गन्धपुष्पतुलसीदलानि आचमनीयपात्रेण लवङ्गादिसुगन्धिद्रव्याणि तुलसीदलानि च निक्षिप्य "हृदयाय नमः" "शिरसे स्वाहा" "शिखायै वषट्" इति मन्त्रैर्यथाक्रममभिमन्त्र्य गायत्र्या मूलमन्त्रेण च सर्वाण्यभिमन्त्रयेत्। ततो भूतशुद्धिप्राणप्रतिष्ठे कुर्यात्। ते, इत्थम्, वामनासापुटे धूम्रवर्णं "यम्" इति वायुबीजं ध्यायन् षोडशवारं च जपन् वायुमापूर्यापूरणेन च प्रलयकृद्वायोरिवामुष्य वृद्धिं शोषणशक्तिं च विचिन्त्य चतुःषष्टिवारं जपन् कुम्भकं कृत्वा प्रतिबद्धवायुना स्वतनुव्याप्तिशोषणे ध्यात्वा द्वात्रिंशद्वारं जपन् दक्षिणनासापुटेन रेचयेत्। ततो दक्षिणपुटे "रम्" इत्यग्निबीजमरुणं लीनमारुतं ध्यायन् पूर्ववदापूर्य वृद्धिदाहशक्ती प्रलयाग्निवत् विचिन्त्य पूर्ववत्कुम्भकं कृत्वा तेनाग्निना स्वतनुदाहं ध्यात्वा वामनासापुटेन ध्यानभ—सहवायुं पूर्ववत्। ततो वामनासापुटे "ठम्" इति चन्द्रबीजं शुक्लं ध्यायन् अमृतैनक्यं विचिन्त्य पूर्ववज्जपन् पूरकं कुर्वन् ललाटचन्द्रं ब्रह्मरन्ध्रापरपर्यायं प्रति नीत्वा "वम्"इति जपन् पूर्ववत् कुम्भकं कुर्वन् नीतबीजाद्गलितसौधधारया सर्ववर्णमय्या दग्धदेहमाप्लाव्य तत्तद्वर्णस्थानयुतं दिव्यदे·

हमुत्पन्नं विचिन्त्य पूर्ववत् दक्षिणनासया रेचनं कृत्वा "लम्" इतिबीजेन देहकाठिन्यं "हम्" इति सुषिरोत्पत्तिं ध्यायेत्। ततः ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हों हं सः सोऽहम्।

मम प्राणा इह प्राणा मम जीव इह स्थितः।

मम सर्वेन्द्रियाणि मनो बुद्धिरहङ्कारश्चित्तं पृथिव्यप्तेजोवाय्वाकाशशब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थ प्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा, सोऽहं हंसः हों हं सं षं शं वं लं रं यं क्रौं ह्रीं आमामिति मन्त्रेण प्राणप्रतिष्ठां कृत्वात्मानमीशाभिन्नं विचिन्त्य षोडशप्रणवावृत्तिं षोडशसंस्कारसिद्ध्यर्थं निर्वर्तयेत्।

अथ मातृकान्यासः॥

मातृकानां ब्रह्मर्षिर्गायत्रीच्छन्दो मातृकासरस्वतीदेवता हलो बीजानि स्वराः शक्तयः शरीरशुद्धौ विनियोग इत्युक्त्वा शिरोजिह्वाहृत्सु "ब्रह्मणे नमः" इत्येवमृषिच्छन्दोदेवताः क्रमेण विन्यस्य अं कं खं गं घं ङं आं हृदयाय नमः। इं चं छं जं झं ञं ईं शिरसे स्वाहा। उं टं ठं डं ढं णं ऊं शिखायै वषट्, एं तं थं दं धं नं ऐं कवचाय हुम्, ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्, अं यं रं लं वं शं षं सं हं क्षं अः अस्त्राय फट्। इति षण्मन्त्रैरङ्गुष्ठादिकनिष्ठान्ताङ्गुलीषु करतलकरपृष्ठयोश्च विन्यस्य तैरेव यथामन्त्रलिङ्गं हृदादिष्वपि न्यसेत्।

अथ मातृकादेवतां ध्यायेत्।

> पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो
> देशां भास्वत्कपर्दाकलितशशिकला(१)मिन्दुकुन्दावदाताम्।
> अक्षस्रक्कुम्भचिन्तालिखितवरकरीं(२) त्र्यक्षरां पद्मसंस्था
> मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि॥ इति।

ततः कण्ठे षोडशमातृका अ इत्याद्या न्यसेत्। हृदये क इत्याद्या द्वादश। नाभौ ड इत्याद्या दश। लिङ्गे ब इत्याद्याः षट्। आधारे व इत्याद्याश्चतस्रः। भ्रुवोर्मध्ये हक्षौ। ॐ नमः सर्वत्रादौ योज्यम्।

ॐ नमः इति तु न्यास आन्तरः परिकीर्तितः।

इति गौतमीतन्त्रोक्तेः। इत्यन्तर्मातृकान्यासः।

---

(१) कपर्दाकलितशशिकलामिति मेरुतन्त्रे पाठः।

(२) लिखितकरतलामिति मेरुतन्त्रे पाठः।

अथ बहिर्मातृकान्यासः ।

अथ प्रणवादिनमोन्तानेतान् भालमुखनयनश्रवणनासापुटगण्डो-ष्ठदन्तपङ्क्तिद्वयेषु मूर्धरसनयोश्च विन्यस्य दक्षिणबाहोर्मूलमध्यमणिब-न्धाङ्गुलिमूलाग्रदेशेषु कवर्गं, वामबाहुसम्बन्धिषु तेष्वेव चवर्गं विन्यसे-त्। दक्षिणपादस्योरुमूलजानुचरणमध्याङ्गुलिमूलाग्रदेशेषु च टवर्गमे-तेषु एव वामपादसन्धिषु तवर्गं, पार्श्वद्वयपृष्ठनाभ्युदरेषु च पवर्गं विन्य-स्य हृद्दक्षिणांसककुद्वामांसेष्वन्तस्थान् न्यसेत् । बाहुद्वयपदद्वययोः शष-सहान् हृदयमारभ्य विन्यस्योदराननयोर्लक्षौ न्यसेत्। सर्वत्र प्रणवादिन-मोन्तत्वे "आदरात्" इति क्रमदीपिकोक्तेः। एतानेव वर्णान् सानुस्वारान् "ॐ क्षं नमः" इत्येवं प्रातिलोम्येनोक्तेषु भालादिस्थानेषु विन्यस्य ॐ अः नमः, इत्येवं सविसर्गान् अकारादीन् न्यसेत्, पुनः अः नम इत्यादि यथा-स्थानं न्यस्त्वा अं नम इत्यादि यथास्थानं न्यस्त्वा अं नम इत्यादिगं तं यथास्थानं सोभया १ न्यसेत् । इति मातृकान्यासः ॥

अथ केशवादिन्यासः ॥

अमुष्य प्रजापतिर्ऋषिः, गायत्रीछन्दः, लक्ष्मीनारायणो देवता देह-शुद्धौ विनियोगः । ऋष्यादिन्यासाङ्गन्यासौ पूर्ववत् ।

ध्यानम्—

उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं
पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टम् ॥
नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं
विष्णुं वन्दे दरकमलकौमोदकीचक्रपाणिम् ॥

आकल्पाः=आभरणानि यस्य तं, दरः=शङ्खः ।

इति ध्यात्वोक्तस्थानेषु यथाक्रममेतान्मन्त्रान् न्यसेत् । अं के-शवाय कीर्त्यै नमः । एवमुत्तरत्रापि सानुस्वारतत्तद्वर्णादित्वनमो-न्तत्वे । नारायणाय कान्त्यै, माधवाय तुष्ट्यै, गोविन्दाय पुष्ट्यै, विष्णवे धृत्यै, मधुसूदनाय शान्त्यै, त्रिविक्रमाय क्रियायै, [ वामनाय दयायै, श्रीधराय मेधायै, हृषीकेशाय हर्षायै, पद्मनाभाय श्रद्धायै, दामोदराय लज्जायै, वासुदेवाय लक्ष्म्यै, सङ्कर्षणाय सरस्वत्यै, प्रद्यु-म्नाय प्रीत्यै, चक्रिणे जयायै, ] गदिने दुर्गायै, शार्ङ्गिणे प्रभायै, खड्गिने सत्यायै, शङ्खिने चण्डायै, हलिने वाण्यै, मुसलिने विलासिन्यै, शूलिने विजयायै, [ पाशिने विरजायै ] अङ्कुशिने विश्वायै, मुकुन्दाय विनदायै, नन्दजाय सुनदायै, नन्दिने स्मृत्यै, नराय ऋद्ध्यै, नरकजिते समृद्ध्यै, हरये

शुद्ध्यै, कृष्णाय बुद्ध्यै, सत्याय भुक्त्यै, सात्वताय मत्यै, शौरये क्षमायै, शूरवराय रमायै, जनार्दनायोमायै, भूधराय क्लेदिन्यै, विश्वमूर्तये क्लिन्नायै, वैकुण्ठाय वसुदायै, इति पञ्चवर्गाणाम् ।

त्वगात्मने पुरुषोत्तमाय वसुधायै, असृगात्मने बलिने परायै, मांसात्मने बलानुजाय परायणायै, मेद आत्मने बलाय सूक्ष्मायै, अस्थ्यात्मने वृषघ्नाय संध्यायै, मज्जात्मने वृषाय प्रज्ञायै, शुक्रात्मने हंसाय प्रभायै, प्राणात्मने वराहाय निशायै, शक्त्यात्मने विमलाय अमोघायै, क्रोधात्मने नरसिंहाय विद्युतायै, इति यादीनाम् ।

अमुष्य च न्यासस्य श्रीमिति बीजादित्वं फलविशेषजनकं ताराग्रहाणामिव "शुक्राग्रान् गृहीतप्रजाकामः" इति वाक्यविहितं शुक्राग्रत्वम्। फलविशेषस्तूक्तः क्रमदीपिकायाम् । "समुपैत्य रमां प्रथीयसीं पुनरन्ते हरितां व्रजत्यसौ" । इति केशवादिन्यासः ।

मं नमः पराय जीवात्मने नमः। भं नमः पराय नारायणात्मने नमः। इति द्वाभ्यां सकलवपुषि न्यसेत् । एवमुत्तरत्रापि सानुस्वारप्रतिलोमवर्णोक्तिः । परायेतिपदं, नमः शब्दद्वयं च ज्ञेयम् । मत्यात्मनेऽहङ्कारात्मने मन आत्मने, इति त्रिभिर्हृदि न्यसेत् । शब्दात्मने स्पर्शात्मने रूपात्मने रसात्मने गन्धात्मने, इति पञ्चभिः शिरोमुखहृदयगुह्याङ्घ्रिषु । श्रोत्रात्मने त्वगात्मने चक्षुरात्मने जिह्वात्मने घ्राणात्मने, इति यथालिङ्गं श्रोत्रादिषु, वागात्मने हस्तात्मने पादात्मने पाय्वात्मने उपस्थात्मन इति वागादिषु, आकाशात्मने, वाय्वात्मने, अग्न्यात्मने, जलात्मने पृथिव्यात्मने, इति मूर्धमुखहृल्लिङ्गपादेष्विति पञ्चवर्गाणां शं हृत्पुण्डरीकात्मने हं द्वादशकलसूर्य्यमण्डलात्मने, सं षोडशकलचन्द्रबिम्बात्मने, रं दशकलवह्निबिम्बात्मने, इति चतुर्भिर्हृदि, षं परमेष्ठ्यात्मने वासुदेवाय, यं पुरुषात्मने सङ्कर्षणाय, हं विश्वात्मने प्रद्युम्नाय, वं निवृत्त्यात्मने अनिरुद्धाय, लं सर्वात्मने नारायणायेति पुनर्मूर्धादिषु कुक्षौ कोपतत्वात्मने नृसिंहायेति सर्वदेहे ॥ इति तत्वन्यासः ।

अथ प्राणायामः ।

षोडशवारं बीजं जपन् दक्षिणनासापुटे च वायुं विरेच्य द्वात्रिंशद्वारं जपन् वामेन तेनापूर्य चतुःषष्टिवारं जपन् कुम्भकं कुर्य्यादिति क्रमदीपिकायामुक्तं "रेचयेन्मारुतम्" इत्यादिना ।

गौतमीतन्त्रेऽपि,

प्राणायामं चरेन्मन्त्री रेचपूरककुम्भकैः ॥ इति ।

पूरकादित्थं शारदामते । ततः स्वशरीरे पीठन्यासः, प्रणवादिनमोन्तान् मन्त्रान् न्यसेत् सर्वत्र । ॐ आधारशक्त्यै नमः, मूलप्रकृत्यै, कूर्माय, अनन्ताय, पृथिव्यै क्षीरसमुद्रायेति मूलाधारमारभ्योर्ध्वोर्ध्वं श्वेतद्वीपाय रत्नमण्डपाय कल्पवृक्षायेति हृदि, दक्षिणांसे धर्माय वामांसे ज्ञानाय वामोरुमूले वैराग्याय दक्षिणोरुमूले ऐश्वर्य्यायेति पीठपादाः । मुखे अधर्माय, वामपार्श्वे अज्ञानाय, नाभौ अवैराग्याय, दक्षिणपार्श्वे अनैश्वर्यायेति गात्राणि । ततः पीठमध्ये हृदि सम्पूर्णमब्जं विचिन्त्य तद्दलेषु अं अर्कमण्डलाय, उं सोममण्डलाय, मं वह्निमण्डलाय इदं त्रयं केसरेष्विति, श्रीभागवते श्रीधरस्वामिनः । कर्णिकायाम् आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने, तत्रैवाष्टासु पूर्वादिदिक्षु मध्ये च विमलायै, उत्कर्षण्यै, ज्ञानायै, क्रियायै, योगायै, प्रह्व्यै, सत्यायै, ईशानायै, अनुग्रहायै, कर्णिकायामेव ॐ नमोभगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नम इति । एवं पीठं सम्पूज्य तत्र जपाकुसुमारुणं प्रणवं ध्यात्वा तत्कर्णिकायां नित्यानन्दचित्प्रकाशममृतं श्रीगोपीजनवल्लभं सञ्चिन्तयेत् ।

अथ करयोर्मन्त्रन्यासं कुर्य्यात् ।

स यथा श्रीदशाक्षरस्य नारद ऋषिर्विराट्छन्दः श्रीकृष्णो देवता अमितिबीजं स्वाहेति शक्तिः कृष्णः प्रकृतिर्दुर्गाधिष्ठात्रीदेवता मन्त्रन्यासे विनियोग इत्युच्चार्य्य शिरसि नारदाय ऋषये नमः, रसनायां विराट्छन्दसे नमः, हृदि श्रीकृष्णदेवतायै नमः, गुह्ये अमिति बीजाय नमः । पादयोः स्वाहेतिशक्त्यै नमः । इति विन्यस्य करतलकरपृष्ठकरपार्श्वेषु प्रणवसम्पुटितमूलमन्त्रं न्यसेत् । ततः ॐ गों ॐ नम इति इत्येवं दशाक्षराणि दक्षिणाङ्गुष्ठप्रभृतिवामाङ्गुष्ठान्तकराङ्गुलीनामग्र्यपर्वसु विन्यस्य दक्षिणाङ्गुलिदक्षिणकनिष्ठान्तासु वामाङ्गुष्ठादिवामकनिष्ठान्तासु च तथैव न्यसेत् । पुनस्तथैव वामाङ्गुष्ठादिदक्षिणाङ्गुष्ठान्तासु न्यस्य वा सानुस्वाराणि दशाक्षराणि नमोन्तानि दक्षिणाङ्गुष्ठादिवामकनिष्ठान्तासु विन्यस्य आचक्राय स्वाहेत्यादिपूर्वोक्ताङ्गपञ्चकन्यासं विधाय बीजसम्पुटितमातृकाभिः पुरोदितमातृकास्थानेषु विन्यस्य दशतत्त्वन्यासं तनुयात्, गों नमः पराय मह्यात्मने भआत्मा? इति गुह्यहृदास्यशिरःसु, अहङ्कारात्मने महत्तत्त्वात्मने, इति हृदि, प्रकृत्यात्मने पुरुषात्मने परमात्मने, इति सर्वाङ्गे, तत एतेष्वेव स्थानेषु विपरीतैर्विपरीतवर्णयुक्तैरेव मन्त्रैर्विन्यस्य मूर्धादिपादान्ते वपुषि प्रणवपुटितमूलमन्त्रेण

व्यापकन्यासं कराभ्यां विधायामुष्याद्यवर्णं मूर्धनि मध्यमाङ्गुल्या न्यसेत तर्जन्यात्वितवामया द्वितीयं नेत्रयोः, अङ्गुष्ठरहितसर्वाङ्गुलिभिः तृतीयं श्रोत्रयोः, अङ्गुष्ठानामिकाभ्यां चतुर्थं नासयोः, सर्वाभिः पञ्चमं मुखे, अङ्गुष्ठतर्जनीभ्यां षष्ठं हृदि, अङ्गुष्ठमध्यमाभ्यां सप्तमं नाभौ, अङ्गुष्ठहीनाङ्गुलिभिरष्टमं गुह्ये, ताभिरेव नवमं जान्वोः, सर्वाभिर्दशमं पादयोः, सर्वत्र प्रणवपुटितत्वम् । ततोऽनयैव विधयाग्रिमाक्षरपञ्चकं, अग्रिमस्थानपञ्चके विन्यस्याद्यवर्णपञ्चकमाद्यस्थानपञ्चके न्यसेत्, पुनर्विपरीताक्षराणि विपरीतस्थानेषु न्यसेत्, तदिदं दशाक्षराणां न्यासत्रयं क्रमेण सृष्टिस्थितिसंहृतिरिति यतिवामनप्रस्थयोरमुना क्रमेण भवति गृहस्थस्य संहृतिः सृष्टिः स्थितिरिति स्थितिसंहृतिः सृष्टिरिति ब्रह्मचारिणः ।

अथ विभूतिपञ्जरन्यासः ।

आधारे गुह्ये नाभौ हृदि गले मुखे अंसयोरूर्वोर्दशाक्षराणि सानुस्वाराणि नमोन्तानि न्यसेत्, पुनरेवमेव कण्ठे नाभौ कुक्षिद्वये हृदि स्तनयोः पार्श्वयोरपरगले श्रोणिद्वये न्यस्त्वा शिरस्यास्येऽक्ष्णोः श्रुत्योर्नसोः कपोलयोश्च विन्यस्य पूर्वोक्तेषु करपत्सन्ध्यग्रेषु न्यसेत्, पुनः कराङ्गुलिषु पादाङ्गुलिषु च न्यस्त्वा शिरसि तदीयप्राच्यादिचतुर्दिक्षु तस्मिन्नेव सकले दोष्णोः सक्थ्नोश्च न्यसेत् पुनर्मूर्धनेत्रद्वयमुखकण्ठहृदयोदरनाभिमूलगुह्यजानुद्वयप्रपदद्वयेषु विन्यस्य श्रोत्रद्वयगण्डद्वयांसद्वयस्तनद्वयपार्श्वद्वयकटिद्वयोरुद्वयजानुद्वयजङ्घाद्वयाङ्घ्रिद्वयेषु न्यसेत् । तदेवं दश दशाक्षरावृत्तयः संपद्यन्ते । प्रत्यावृत्ति च व्यापकन्यासो विधेयः ।

अथ मूर्तिपञ्जरन्यासाः ।

ॐ अं कृष्णवर्णाय केशवाय कीर्त्यै धात्रे नम इति भाले । नं आं कनकवर्णाय नारायणाय कान्त्यै अर्यम्णे नम इति उदरे। ॐ मों श्यामवर्णाय माधवाय तुष्ट्यै मित्राय नम इति हृदि । भं ई कर्पूरवर्णाय गोविन्दाय पुष्ट्यै वरुणाय नम इति कण्ठमूले । गं उं रक्तवर्णाय विष्णवे धृत्यै अंशवे दक्षिणपार्श्वे । वं ऊं धूम्रवर्णाय मधुसूदनाय शान्त्यै भगाय नम इति दक्षिणभुजमूले। तें पं हरितवर्णाय त्रिविक्रमाय क्रियायै विवस्वते नम इति गलदक्षिणभागे । वां पें पिङ्गलवर्णाय वामनाय दयायै इन्द्राय नम इति वामपार्श्वे । सुं ओं अभ्रवर्णाय श्रीधराय मेधायै पूष्णे नम इति वामभुजमूले । दें औं चित्रवर्णाय हृषीकेशाय हर्षायै पर्जन्याय नम इति गलवामभागे । वां अं पाण्डुरवर्णाय

पद्मनाभाय श्रद्धायै त्वष्ट्रे नम इति पृष्ठे । यं अः अञ्जनवर्णाय दामोदराय लज्जायै विष्णवे नम इति ककुदि । अथ द्वादशाक्षरं मूर्ध्नि न्यस्त्वा पूर्वोक्तमाद्यं दशाक्षराणां न्यासद्वयं विधाय सानुस्वाराण्य मूनि चतुर्थ्यन्तानि हृन्मूर्धशिखाकवचास्त्रपार्श्वद्वन्द्वकटिपृष्ठमूर्द्ध शब्दयुतान्येष्वेव स्थानेषु विन्यस्याचक्राद्यङ्गपञ्चकन्यासमृष्यादिन्यासं च कृत्वा यथोपदेशं शङ्खचक्रगदापद्मकौस्तुभवनमालाश्रीवत्सवेणुमुद्रा दर्शयेत। नमः सुदर्शनाय "अस्त्राय फट्" इत्युक्त्वास्त्रमुद्रया दशदिशां बन्धनं कृत्वा श्रीकृष्णं ध्यायेत् ।

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ॥
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं करवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ इति ।

अथ चिन्तितभगवता स्वात्मनोऽभेदं विचिन्त्य पूर्वोक्तपीठस्थ मीश्वरं—

स्वागतं देवदेवेश सन्निधौ भव केशव ।
गृहाण मानसीं पूजां मयार्थैः परिभाविताम् ॥

इति संप्रार्थ्य मानसैर्निर्दोषैः षोडशोपचारैरर्चयेत् । अत्र शङ्खपूजनादि कृत्वा हृत्स्थं देवं प्रतिमादावावाह्य बाह्यपूजा कार्येत्यागमविदः । भूतशुद्धेः पूर्वं शङ्खस्थापानाद्यर्घ्यादिपात्राभिमन्त्रणान्तं कार्य्यमिति तु श्रीभागवते । अथ—

महानीलनीलाभमत्यन्तबालं गुडास्निग्धवक्त्रान्तविस्रस्तकेशम् ।
अलिव्रातपर्य्याकुलोत्फुल्लपद्मप्रमुग्धाननं श्रीमदिन्दीवराक्षम् ।

इति देवं ध्यात्वा कुसुमपूरितमञ्जलिं विधाय हृदि पूजितां भगवन्मूर्तिं मूलमन्त्रेणाञ्जलिगतां विभाव्य मूलेन "सहस्रशीर्षा" इति मन्त्रेण च ब्रह्मरन्ध्रेण शालग्रामेतरं बाह्यमूर्त्यादावावाहनमुद्रया योजयेत् ।

हस्ताभ्यामञ्जलिं बध्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा ह्यावाहने स्मृता ॥

अनयैव ह्यधोमुख्या स्थापनमुद्रया स्थाप्योच्छ्रिताङ्गुष्ठसंयुक्तमुष्टिद्वयरूपसन्निधापनमुद्रया सन्निधाप्यान्तर्निविष्टाङ्गुष्ठसंयुतमुष्टिद्वयात्मकसन्निरोधनमुद्रया सन्निरुध्योत्तानमुष्टियुगलरूपसन्मुखीकरणमुद्रया सन्मुखं कुर्य्यात् । अथ हेमरूप्याद्यन्यतमधातुमयं दारुमयं वा चतुष्पादमासनं पुरतः स्थाप्य तस्मिन्नुक्तप्रकारेणाधारशक्त्याद्यनुग्रहान्ता देवताः संपूज्य पीठमन्त्रेण पुष्पाञ्जलिं तत्र दद्यात् । तत आ चक्रायेत्यादि

चतुरङ्गन्यासं ज्वालाचक्राय स्वाहा नेत्रत्रयाय वौषडिति नेत्रन्यासमसु- रान्तकाय स्वाहा अस्त्राय फडित्यस्त्रन्यासञ्च मूर्तौ कृत्वा "अतो देवे"ति षड्चं तेष्वेव स्थानेषु विन्यस्योपकल्पितमासनं"पुरुष एवेदं सर्व"मिति मन्त्रेण च कृष्णाय नम इत्यन्तेन भगवते समर्प्य तत्रासीनमूर्तेर्निर्गतमा- वरणगणं स्वस्वस्थान उपवेशयेत्। ततः पीठगताष्टदलकमलस्य पूर्वा- दिदिक्षु ॐमादाय नमः। सुदामाय नमः। वसुदामाय नमः। किंकणये नमः। इति चतस्रो देवताः। एवमग्रे प्रणवादिनमोन्तत्वं हृदयाय शिरसे शिखायै क- वचायेतिकेशरेष्वग्न्यादिकोणेषु नेत्रत्रयायेति पुरतः,अस्त्रायेति पूर्वादिचतु र्दिक्षु इत्यङ्गावरणं; वासुदेवाय सङ्कर्षणाय प्रद्युम्नायानिरुद्धायेतिपूर्वादि- दलचतुष्टये, शान्त्यै श्रियै सरस्वत्यै रत्यै इत्याग्नेयादिदलचतुष्टये, इति- वासुदेवाद्यावरणं, तद्बहिरर्जुनाया निरुद्धायोद्धवाय दारुकाय विष्वक्से- नाय सात्यकये नारदाय पर्वतायेत्यष्टदिक्षु, गरुडायेति पुरतः इति पा- र्थाद्यावरणम्। इन्द्रनिधये नीलनिधये मुकुन्दाय मकराय अनङ्गाय कच्छ- पाय शङ्खनिधये पद्मनिधये, इति पूर्वावरणेभ्यो बहिरष्टदिक्षु इति निध्या- वरणं, तद्बहिरिन्द्राग्नियमवायुवरुणनिर्ऋतिकुबेरेशानान् लोकपालान् विदिक्षु पूर्वेशानदिङ्मध्ये ब्रह्माणं पश्चिमनिर्ऋत्योरन्तः शेषं वज्रशक्तिद- ण्डखड्गपाशध्वजगदात्रिशूलान् क्रमेण दिक्पालसन्निधावुपवेशयेत् इति अष्टमावरणम्। एतान्यावरणानि गोपालतापिन्युक्तानि। अथ सपरिवारा- य भगवते "एतावानस्य"इति मन्त्रेण मूलेन चासादितपाद्यं निवेद्य "त्रि- पादूर्ध्व" इति मन्त्रेण मूलेन चार्घ्यं समर्प्य "तस्माद्विराड्"इति मूलेन च कृष्णाय नमः सुधेत्यन्तेनाचमनीयं दत्वा मधुपर्कञ्च तादृशमूलेनैव समर्प्य पूर्ववत् पुनराचमनीयं दत्वा सुगन्धतैलैरभ्यज्य सुगन्धद्रव्यैरुन्म- र्दनं विधाय पञ्चामृतैरभिषिच्योष्णोदकैः संस्नाप्य शुद्धतीर्थोदकैः शङ्खेन घण्टां वादयानोऽभिषेचयेत्। तत्र मन्त्राः--

श्रीभागवते।

स्वर्णघर्मानुवाकेन महापुरुषविद्यया।
पौरुषेणापि सूक्तेन सामभी राजनादिभिः॥ इति।

[श्रीभा० स्क० ११ अ० २७ श्लो० ३१]

स्वर्णघर्मानुवाकः=सुवर्णं घर्मं परिवेदवेनम्। इन्द्रस्यात्मानं दशधा- चरन्तम्। अन्तःसमुद्रे मनसाचरन्तं। ब्रह्मान्वविन्ददशहोतारमर्णे। अन्तः प्रविष्टः शास्ता जनानाम्। एकः सन् बहुधा विचारः। शतं शुक्रा- णि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भव न्ति। समानसीन आत्मा जनानाम्॥१॥ अन्तः प्रविष्टः शास्ता जनानां

सर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र संपदं गच्छन्ति देवैः । समानलीन आत्मा जनानां । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां । दिव आत्मानं सवितारं बृहस्पतिं । चतुर्होतारं प्रदिशोनुक्लृप्तं । वाचो वीर्यं तपसान्वविन्दत् । अन्तः प्रविष्टं कर्त्तारमेतम् । त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम् ॥२॥ अमृतस्य प्राणं यज्ञमेतं । चतुर्होतृणामात्मानं कवयो निचिक्युः । अन्तः प्रविष्टं कर्त्तारमेतं । देवानां बन्धुं निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतं । चतुर्होतृणामात्मानं कवयो निचिक्युः । शतं नियुतः परिवेदविश्वाविश्ववारः । विश्वमिदं वृणाति । इन्द्रस्यात्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम् ॥३॥ इन्द्रंराजानं सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिं रश्मीनाम्मध्ये तपन्तं । ऋतस्य पदे कवयो निपान्ति । य आण्डकोशे भुवनं बिभर्त्ति । अनिर्भिण्णः सन्नथ लोकान् विचष्टे । यस्याण्डकोशं शुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोमृतेनाहमस्मि । सुवर्णं कोशं रजसा परीवृतं । देवानां वसुधानीं विराजम् ॥४॥ अमृतस्य पूर्णां तामु कलां विचक्षते । पादं षड्ढोतुर्नकिलाविवित्से । येनर्त्तवः पञ्चधोतक्लृप्ताः । उतवाषड्धामनसोतक्लृप्ताः । तं षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति । अन्तः प्रविष्टं कर्त्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानं शतधा चरन्तम् ॥५॥ इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवानां हृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद्ब्रह्मण उज्जभार । अर्कं श्चोतन्तं सरिरस्य मध्ये । आयस्मिन् सप्त पेरवः । मेहन्ति बहुलां श्रियम् । बह्वश्वामिन्द्रगोमतीम ॥६॥ अच्युतां बहुलां श्रियम् । स हरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । बह्वश्वामिन्द्रगोमतीम् । अच्युतां बहुलां श्रियं । मह्यमिन्द्रो नियच्छतु । शतं शता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुभीरश्मिरिन्द्रः । प्रमंहमाणो बहुलां श्रियम् । रश्मिरिन्द्रः सविता मे नियच्छतु ॥७॥ घृतं तेजो मधुमदिन्द्रियम । मय्ययमग्निर्दधातु । हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयोनभसा य एति । स न इन्द्रः कामवरं ददातु । पञ्चारं चक्रं परिवर्त्तते पृथु । हिरण्यज्योतिः सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । सप्त युञ्जन्ति रथमेकचक्रम् ॥८॥ एको अश्वो वहति सप्तनामा । त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपोदीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसन्नमन्तु । श्वेतं रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् ।

इन्द्रं निचिक्युः परमे व्योमन् ॥९॥ रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः । शतं सहस्राणि प्रयुतानि नाव्यानाम् । अयं यः श्वेतो रश्मिः । परि सर्वमिदं जगत् । प्रजां पशून् धनानि । अस्माकं ददातु । श्वेतो रश्मिः परि सर्वं बभूव । सुवन्मह्यं पशून् विश्वरूपान् । पतङ्गमक्तमसुरस्य मायया ॥१०॥ हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वो वदद्गर्भे अन्तः । तां द्योतमानां स्वर्यं मनीषां । ऋतस्य पदे कवयो निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । अग्निस्तां अग्रे प्रमुमोक्तु देवः ॥११॥ प्रजापतिः प्रजया संविदानः । वीतं स्तुके स्तुके । युवमस्मासु नियच्छतं । प्रप्रयज्ञपतिं तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषां सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्या पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः ॥१२॥ वायुस्तां अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायैः सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषामारण्याना(१)मिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥१३॥ इति ।

राजनम्=हुम् ॥ ३ ॥ हो । ३ । ह ऽ । ३ । ओहा । ३ ॥ औहोयि । २ । औहोयि । इन्द्रन्नरो । ने ३ मधि । ताहवन्तायि । इन्द्रं० । ३ ॥ वयो-बृहत् । ३ । विभ्राष्टये । विधर्म्मणे । ३ । यत्पारियाः । युनज । तायधियस्ताः । यत्पा० । ३ । सत्य मोजः । ३ । रजः सुवः । ३ । शूरोनृषाता ३ श्रव । सश्चकामायि । ३ । भद्र ऽ सुधा । २ । भद्र ऽ सुधे । षमूर्जम् । २ । इषमूर्जम् । २ । आ गोमतायि । वर्जभ । जातुवश्राः । ३ । बृहद्यशः । ३ । दिविदधे ३ हस् । २ । दिविदधे ३ । हाउवा । वागीडासुवोबृहद्भा २ ३ ४ ५ : ॥ १ ॥

आदिशब्दोक्तम्=रौहिणम् । हाउ । ३ । आयिही । ३ । आयिहिया । ३ आसाउ । ३ । आयाम् । ३ । नामाः । ३ । किट् । २ । इन्द्रन्नरो नं मधि-

---

(१) सप्तानामिति पाठः ।

ताहवा २ न्तायि। यत्पार्य्यायुनज तेधिया २ स्ताः। शूरो नृषाताश्रव-
सश्च का २ मायि। आगामतिव्रजभजात्वा २ न्नाः। मना २ ३ होयि।
प्राणा २ ३ होयि। चक्षू २ ३ हौयि। श्रोत्रा २ ३ ८ होयि। घोषा २ ३
होयि। व्रता २ ३ ८ हायि। भूता। २ ३ ८ होयि। पाना २ ३ ८ होयि।
चित्ता २ ३ ८ होयि। धीता २ ३ ८ होयि। सुवा २ ३ हौयि। ज्योता २ ३
हों २। वा २ ३ ४ औ होवा। ऊ २ ३ ४ ५ ॥ २ ॥

महापुरुषविद्या तु—

जितं ते पुण्डरीकाक्ष ! नमस्ते विश्वभावन।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुषपूर्वज ॥ इति।

पूर्ववदाचमनीयं समर्प्य वस्त्रेण गात्रमार्जनं कुर्यात्। "तं यज्ञ"मिति मन्त्रेण मूलेन च क्षौमे वाससी परिधाप्यावरणदेवताभ्यो वासांसि दत्त्वा गायत्र्या च मनः समर्प्य "तस्मात् यज्ञात् सर्वहुतः सम्भृतम्" इति मूलेन चोपवीतं समर्प्य मूलेनैवालङ्कारान्निवेद्य वेणुवनमाला-श्रीवत्सकौस्तुभान् समर्प्य तानि च तत्तन्नाम्ना गन्धपुष्पैरभ्यर्च्य पादुके भगवते दत्त्वा सपरिवाराय भगवते "तस्माद्यज्ञात् सर्वहुत" इति ऋचा मूलेन च चन्दनागुरुकर्पूरपलात्मकं गन्धं शङ्खस्थतुलसीदले गृहीत्वा कानिष्ठयाभिनिवेद्य कुङ्कुमाक्षतांस्तदुपरि दत्त्वा "तस्मादश्वा अजायन्ते"ति मूलेन च पुष्पाणि समर्प्य निर्मलकोमलद्वययुतहरिततुलसीमञ्जरीसमर्पणं मूलमन्त्रेण कुर्यात्। तादृशमञ्जर्यभावे कोमलदलैर्यादृशदलैरपि पूजां तनुयात्।

नित्यमर्चयते यो वै तुलस्या हरिमीश्वरम्।
महापापानि नश्यन्ति किं पुनश्चोपपातकम् ॥

इति नृसिंहपरिचर्य्यायां ब्राह्मे नित्यत्वोक्तेः।

योऽर्चयेद्धरिपादाब्जं तुलसीकोमलैर्दलैः।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥

इति बृहन्नारदीये केवलतुलसीदलविधेश्च।

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्य्युषितं पयः।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥

इति तत्रैव पर्युषितानामपि तुलसीपत्राणां ग्रहणोक्तेश्च।

मञ्जरीमहिमानं त्वाह—

हारितः—

तुलसीमञ्जरीभिर्यः कुर्य्यात् हरिहरार्चनम् ।
न स गर्भगृहं याति मुक्तिभागी भवेन्नरः ॥ इति ।

ततो "यत्पुरुष"मिति मन्त्रेण मूलेन च घण्टां वादयानः प्रादक्षिण्येन नासिकामारभ्य पादपर्य्यन्तं धूपं निवेद्य "ब्राह्मणोऽस्ये"ति मूलेन च वादयान एव सन् पादादिनेत्रान्तं दीपं दत्वा हेमादिधातुमये पात्रे शुद्धोत्तमपायसान्नं शर्करानवनीतकदलीफलदधियुतं भगवतः पुरतः संस्थाप्य तस्मिन्मनोरमाणि तुलसीदलानि निक्षिप्य मूलेनाभ्युक्ष्य धेनुमुद्रां तदुपरि कृत्वा तदामृतप्लावितमन्नं विभावयेत् ।

वामाङ्गुलेर्दक्षिणानामङ्गुलीनाञ्च सन्धिषु ।
प्रवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वे प्रयोजयेत् ।
कनिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात् सा धेनुमुद्रिका ॥

ततः "चन्द्रमा मनस" इति मन्त्रेण मूलेन च निवेदयामि भवतोजुषाणेदं हविर्हर इति च भगवते समर्प्यापोशानं दत्वा वामकरे विकचोत्पलसन्निभां ग्रासमुद्रां दर्शयन् प्राणाय स्वाहेत्यादि पञ्चमन्त्रानुच्चारयन् शुद्धाः प्राणादिमुद्रा दर्शयेत् ।

स्पृशेत्कानष्ठोपकानाष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा ।
तथापरा तर्जनमध्यमे स्यादनामिकामध्यमिके च मध्या ॥
अनामिकातर्जनीमध्यमा स्यात् तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात्पञ्चमी तद्वदितिप्रदिष्टा प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥

ततो जवनिकामन्तर्धाय मूलमन्त्रं होमसंख्याद्विगुणसंख्यावर्त्तयन् एवं ध्यायेत् ।

लोकानां परिशिक्षणाय भगवान्निर्वर्त्य नित्यं विधिं
रुक्मिण्या परिवेषणे विरचिते पात्रीषु हैमीष्वथ ।
सिद्धान्नं सुरसं सुधासमधिकं भुङ्क्ते स्म पङ्क्तौ मुदा
देवव्यानकदुन्दुभिप्रभृतिभिर्मान्यैः सहान्यैरपि ॥ इति ।
बिभ्रद्वेणुं जवयरटयोश्शृङ्गवेत्रे च कक्षे ?
वामे पाणौ मसृणकवलं तत्फलान्यङ्गुलीषु ।
तिष्ठन् मध्ये स्वपरिदुहृदो हासयन्नर्मभिः स्वैः
स्वर्गे लोके मिषति बुभुजे यज्ञभुक् बालकेलिः ॥ इति च ।

अथ जवनिकामपसार्य कर्पूरादिसंस्कृतं शीतलजलं शुद्धपात्रेण निवेद्योत्तरापोशनं दत्वा विष्वक्सेनाय किञ्चिदुच्छिष्टमुद्धृत्य गण्डूषा-

घर्थं जलं निवेद्य गायत्र्या पुनराचमनं समर्प्य नैवेद्यं दक्षिणत उद्वास्य करोद्वर्त्तनीयं दत्वा "नाभ्या आसी"दिति मन्त्रेण मूलेन च सकर्पूरं ताम्बूलं समर्पयेत्। "ताम्बूलं शशिसंयुत"मिति गौतमीतन्त्रोक्तेः। ततो नीराजनं मूर्धनि कुर्यात्। यथोक्तं—

बहुवर्त्तिसमायुक्तं ज्वलन्तं केशवाग्रतः।
कुर्यादारार्त्तिकं यस्तु कल्पकोटिदिवं वसेत्॥
नीराजनं च यः पश्येत् देवदेवस्य चक्रिणः।
सप्तजन्म भवेद्विप्रो ह्यन्ते च परमं पदम्॥ इति।
कर्पूरेण च यः कुर्यात् भक्त्या केशवमूर्धनि।
आरार्तिकं मुनिश्रेष्ठ प्रविशेद्विष्णुमव्ययम्॥ इति च।

ततो विष्णुसूक्तैर्मूलमन्त्रेण नमो महद्भ्यो नमो अर्भकेभ्य इत्यृचा च पुष्पाञ्जलिं दद्यात्। ततो वेदस्तुत्या स्तुत्वा दण्डवत् प्रणम्य "सप्तास्या· स"न्निति मूलेन च प्रदक्षिणां कुर्यात्। तन्महिमा चोक्तो गौतमीतन्त्रे।

सप्तद्वीपां धरां दत्वा वेदविद्भ्यो महामुने।
यत्फलं लभते भक्त्या कृत्वा कृष्णप्रदक्षिणाम्॥ इति।

अथादर्शच्छत्रचामरादिसमर्पणगीतनृत्यादिभिर्भगवन्तं [सन्तोष्ये]तः पूर्वं प्राणबुद्धिदेहधर्म्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत् कृतं तत्सर्वं ब्रह्मार्पणम् भवतु स्वाहा मां मदीयं च सकलं हरये सम्यगर्पये ॐ तत्सदिति मन्त्रेण शङ्खोदकेन स्वात्मानं सपरिवारं समर्प्य।

प्रपन्नं पाहि मामीश! भीतं मृत्युग्रहार्णवात्।

इति प्रार्थनमुद्रया प्रार्थयेत्।

प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सम्मुखौ।
कुर्यात् स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका॥

अथ भगवद्दत्तत्वेन ध्याततत्प्रसादमञ्जलिना आदाय मूर्ध्नि निधाय जलपूर्णं शङ्खं भगवति भ्रामयित्वा तज्जलं स्वयं धारयेत्।

शङ्खस्थितं तु यत्तोयं भ्रामितं केशवोपरि।
देहलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति॥

इति वचनात्। ततो भगवत्पादाम्बु पिबेत्। यथाह—ब्रह्माण्डपुराणे ब्रह्मा।

अपेयं च पिबेद्यस्तु भुङ्क्ते यश्चाप्यभोजनम्।
अगम्यागमनं यस्य पापाचाराश्च ये नराः।
तेऽपि पूताः भवन्त्याशु हरेः पादाम्बुसेवनात्॥ इति।

अत्र पादाम्बुशब्दः=पादसम्पर्केत्वेन जले यौगिकोऽङ्गीक्रियते, उत रूढः। नाद्यः, पाद्यस्यापि शालग्रामादावभावप्रसङ्गात्। नान्त्यः, पादयोरर्पणाङ्गीकारे प्रोक्षणीशब्द इव रूढ्ययोगात्, अनङ्गीकारे पादयोर्जलमिति वाक्यशेषात् यौगिकस्य पादाम्बुशब्दस्य पाद्यपरत्वासम्भवात् तस्मात् भगवदधिष्ठानशालग्रामार्चादिसंस्पृष्टं जलं भगवत्पदस्पृष्टत्वेन भावितं पादाम्बु न तु पाद्यम्। एवञ्च "विष्णुपादोदकात् पूर्वं विप्रपादोदकं पिबेत्" इति गौतमीतन्त्रे शपः प्रयोगोऽपि युज्यते न हि स्नानान्ते विप्रपाद्यपानं विधेयं तत्पूजायाः, अकृतत्वात् इति।

पादाम्बु पीत्वा नाचमनं कार्य्यम्।

विष्णोः पादोदकं पीत्वा पश्चादशुचिशङ्कया।
आचामयति यो मोहात् ब्रह्महा स निगद्यते॥

इति नृसिंहपरिचर्य्यायां स्कान्दोक्तेः। ततः पूर्वोदितनैवेद्यद्रव्यत्वेन भावितैर्जलैरष्टाविंशतिवारं श्रीकृष्णं सन्तर्पयेत्।

अथ जपः।

उक्तविधयासनं दिग्बन्धं च विधाय गुर्वादीन्नमस्कृत्य प्राणानायम्य पूर्ववत् ऋष्यादि सङ्कीर्त्य जपं सङ्कल्प्य चक्राद्यङ्गपञ्चकन्यासौ दक्षिणाङ्गुष्ठादिवामकनिष्ठान्तासु अङ्गुलिषु दशाक्षरन्यासं नाभिकटिजानुपादमूर्ध्नाक्षिश्रोत्रनासावक्त्रहृत्सु च दशाक्षरन्यासं विधाय भगवन्तं ध्यायेत्।

अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित् कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम्।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गललितं ध्यायेज्जगन्मोहनम्॥ इति।

ततो रुद्राक्षपद्माक्षादिमालाभिरसंस्पृष्टाङ्गुलिपर्वभिर्वा गणयन् मन्त्रार्थं च स्मरन् अष्टोत्तरसहस्रं मन्त्रजपं मानसं कुर्यात्। मानसासम्भवे उपांशु वाचिकमस्पष्टोच्चारणरूपं, अस्याप्यसम्भवे स्पष्टमुच्चारयेत्। अथ प्राणानायम्य चक्राद्यङ्गपञ्चकं विन्यस्य जपसाङ्गतासिद्ध्यै विष्णुनाम यथाशक्ति जप्त्वा,

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्सुरेश्वर॥

इति मन्त्रेण देवे जपं निवेद्य।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥

इति प्रार्थ्योपसंहारमुद्रयावरणानि देवे लीनानि ध्यायेत् ।

अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्त्वाङ्गुलीरङ्गुलीभिः संयोज्य परिवर्त्तयेत् ।
एषा संहारमुद्रा स्यात् विसर्जनविधौ मता ॥

ततः कृतार्चनं भगवत्यर्पयेत् । इति प्रातः पूजा ।

एवमेव माध्याह्निकी । महानीलेत्यादिध्यानकाले तु ।
पीताम्बरं रुचिरनूपुरहारकाञ्चीकेयूरकोर्मिकटकादिभिरुज्वलाङ्गम् ।
दिव्यानुलेपनपिशङ्गितमंसराजदम्लानचित्रवनमालमनङ्गदीप्तम् ॥

वेणुं धमन्तं हरिं ध्यायेत्, अपूपादिपक्वमन्नं नैवेद्यं पायसभावितैर्जलैस्तर्पणम् । तिसृषु पूजासु आवरणदेवताविशेषानाह क्रमदीपिकाकारः ।

तापिन्यां तु अङ्गवासुदेवादिरुक्मिण्यादिस्वशक्ति नन्दादिवसुदेवादिपार्थादिनिध्यादिवीतं यजेत् । सन्ध्यासु प्रतिपत्तिभिरुपचारैस्तेनास्याखिलं भवतीति साम्येनावरणदेवता विहिता इति नेह विशेषा उच्यन्ते । मध्याह्नपूजायां जपान्ते नित्यहोमं कुर्य्यात् । स इत्थं प्राणान्तयस्यासनदिग्बन्धौ विधाय पञ्चाङ्गन्यासौ कृत्वा शुद्धमृन्मयचतुरस्रकुण्डं मूलेन वीक्ष्यास्त्रेण परिस्तीर्य कवचेनाभ्युक्ष्य त्रिकोणं विलिख्य रमित्यग्निं प्रतिष्ठाप्य परिसमूहनपरिस्तरणान्वाधानादिसिद्धहविरासादनान्तं स्वगृह्योक्तविधिना विधायाग्नौ पूर्वोक्तपीठं, अभ्यर्च्य पीठदेवताभ्य आज्याहुतीः पीठमन्त्रान्ते हुत्वा देवमावाह्य ध्यायेत् ।

तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥
स्फुरत्किरीटकटककटिसूत्राम्बराङ्गदम् ।
श्रीवत्सवक्षसम्भ्राजत्कौस्तुभं वनमालिनम् ॥

इत्युक्तं भागवते । अथाज्यभागान्तं कृत्वाष्टाविंशतिवारं मूलमन्त्रेण पुरुषसूक्तेन च प्रत्यृचमाज्यप्लुतेन सिद्धान्नेन हुत्वा आवरणदेवताभ्योऽप्येकैकमवदानं दत्वाचमनताम्बूलादिसमर्प्यनत्वा साङ्गं देवमुद्वास्य पञ्चाङ्गानिन्यस्त्वा मूलेन भस्म धृत्वा देवे कर्म निवेदयेत् ॥ इति मध्याह्नपूजा ॥*॥

॥ अथ रात्रिपूजा ॥

तत्र ध्यानम्—

रात्रौचेन्मन्मथाक्रान्तचेतसं देवकीसुतम् ।
यजेत् रासपरिश्रान्त गोपीमण्डलमध्यगम् ॥
इतरेतरबद्धकरप्रमदागणकल्पितरासविहारविधौ ।
मणिशङ्कुगमप्यमुना वपुषा बहुधाविहितस्वकदिव्यतनुम् ॥

तरुणीकुचयुक्परिरम्भमिलद्घुसृणारुणवक्षगतिम् ।
शिववेणुसमीरितगानपरं स्मरविह्वलितं भुवनैकगुरुम् ॥

इति । रजतपात्रेषु शृतं सशर्करं पयो नैवेद्यम् । शेषं पूर्ववत् । सायाह्ने तृतीयपूजापक्षे द्वारकायां ध्यानम् ।

सायाह्ने द्वारवत्यां तु चित्रोद्यानोपशोभिते ।
अष्टसाहस्रसंख्याकैर्भवनैरभिसंवृतः ॥

इत्यादिक्रमदीपिकोक्तेः । पायसं=नैवेद्यं । शर्करामिश्रितक्षीरभावितैर्जलैस्तर्पणम् । इति श्रीकृष्णपूजा ॥

अथैमामनुतिष्ठतोऽनुष्ठेयपुरश्चरणसंक्षेपो लिख्यते ।

वैशम्पायनसंहितायाम् ।

अस्नातस्य फलं नास्ति नचातर्पयतः पितॄन् ।
नासत्यमभिभाषेत नेन्द्रियाणि प्रबोधयेत् ॥
शयनं दर्भशय्यायां शुचिः प्रयतमानसः ।
नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलो न च ॥
उपर्यधोबहिर्वस्त्रे पुरश्चरणकृत् त्यजेत् ।
स्त्रीशूद्राभ्यां न भाषेत रात्रौ जपपरो भवेत् ॥ इति ।

मन्त्रप्रकाशिकायां दशाक्षरं प्रकृत्य अस्य चतुर्लक्षजपात्पुरश्चरणं पायसेन दशांशो होम इति ।

गौतमीये तु—

दशाक्षरं मनुवरं सिद्ध्यै दशलक्षकम् ।
जप्त्वा तदन्ते होमादि विधिना कर्म्म चाचरेत् इति ।

नारदीये—

जपस्य तु दशांशेन होमः कार्यो दिने दिने ।
अथवा लक्षसम्पूर्तौ होमः कार्य्यो विपश्चिता ॥ इति ।

जपान्ते वा कार्य्यः । किं वा यस्य जपो यावत् तत्पूर्त्तौ होममाचरेदिति चन्द्रिकोक्तेः ।

प्रातरारभ्य जप्तव्यं कालं मध्यन्दिनावधि ।
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।

होमासम्भवे ब्राह्मणेन तत्संख्याद्विगुणः चतुर्गुणो वा जपः कार्य्यः ।

गौतमीतन्त्रे—

ततो होमदशांशेन तर्पयेत्पुरुषोत्तमम् ।
आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ॥
तर्पयाम्यहमित्युक्त्वा नमोऽन्तस्तर्पणे मनुः ।
तर्पणस्य दशांशेन ह्यभिषेकं समाचरेत् ॥

कृष्णात्मानं स्वमात्मानं ध्यात्वा रश्मिसमन्वितम् ।
कुसुमं तोयमेकं च सुगन्धिपरिमिश्रितम् ।
जलाञ्जलिं समादाय मूलमुच्चार्य साधकः ॥
श्रीकृष्णमभिषिञ्चामि नम इत्यभिषेचयेत् ।
अभिषेकदशांशेन ब्राह्मणान् परितर्पयेत् ॥
विप्रभोजनमात्रेण व्यङ्गं साङ्गं भवेद् ध्रुवम् ।
यत्र भुङ्क्ते द्विजश्रेष्ठस्तत्र भुङ्क्ते हरिः स्वयम् ।
यत्र भुङ्क्ते श्रियःकान्तस्तत्र भुङ्क्ते जगत्त्रयम् ॥

इति क्रतुः ।

भक्ष्यनियमोऽपि तत्रैव ।

विष्णोर्निवेदितान्नं यत् रात्रावद्यादकुत्सयन् ॥ इति ।

नारदीयेऽपि—

मृदु सोष्णं सुपक्वञ्च कुर्य्याद्वै लघुभोजनम् ।
नेन्द्रियाणां यथा तृप्तिस्तथा भुञ्जीत साधकः ॥ इति ।

पुरश्चरणं च करिष्यन्नयुतचतुष्कं जपेत् इति क्रमदीपिकाकृतः । तत्र गोभ्यो ग्रासदानं स्नानकाले द्वादशवारमन्त्रोक्त्या मूर्द्ध्न्यभिषेकः, चतुर्विंशतिवाराभिमन्त्रितजलेनाऽऽचमनं तथैवाभिमन्त्रितान्नभोजनं सप्तवाराभिमन्त्रितगन्धपुष्पादिधारणं ब्रह्मचर्यं रात्रिभोजित्वञ्चेति धर्म्माः । अयञ्च जपो मानसपूजान्ते कार्य्यः, पुरश्चरणजपस्तु बाह्यपूजान्त इति भादीकाकृतः । अष्टादशाक्षरस्य तु पूर्वजपः अयुतद्वयं लक्षपञ्चकञ्चोत्तरः, इति विशेषः । पूजायां त्वयं विशेषणय अमुष्यच्छन्दः? । क्लीमिति बीजं पूर्ववत् ऋष्यादिन्यासान्तं कृत्वा दशतत्वन्यासं च कृत्वा पञ्चपदैर्हृदयादिपञ्चाङ्गमन्त्रान्तैः करदशाङ्गुलीहृदयादिषु च पञ्चाङ्गन्यासं च कृत्वा मूलेन सकलशरीरे व्यापकन्यासं त्रिर्विधाय प्रथमं शिरो भालभ्रूमध्यकर्णद्वयवदनग्रीवाहृन्नाभिकाटिद्वयगुह्यजानुपत्सु मन्त्राक्षराणि न्यस्त्वा नेत्रमुखहृदयगुह्यपत्सु पञ्चपदानि न्यसेत् । ततः पञ्चाङ्गन्यासमृष्यादिन्यासं च कृत्वा मूर्तिपञ्जरन्यासादि पूर्ववत् कुर्य्यात् । पञ्चाङ्गन्यासोऽनन्तरोक्तो ज्ञेयः । जपे तु ऋष्यादिन्यासान्ते कराङ्गुलीषु हृदयादिषु च पञ्चाङ्गन्यासं कृत्वा—

शिरोललाटदृग्द्वन्द्वश्रोत्रगण्डोष्ठजानुषु ।
कण्ठबाहुषु हृत्कुक्षिकटिगुह्योरुजानुषु ॥
जङ्घाचरणयोर्वर्णान् विन्यसेच्च यथाक्रमम् ।

अथ ध्यायेत् ।

अव्यान्मीलत्कलापद्युतिरहिरिपुपिच्छोल्लसत्केशजालो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगोवृन्दवीतः ॥
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥ इति ।

ततो जपं कुर्यात् । शेषं पूर्ववत् । इति मन्त्रप्रकाशिकोक्तो जपः ।

॥ इति श्रीकृष्णपूजनम् ॥

अथ संक्षेपेण रामपूजाविधिः ॥

ब्राह्मे मुहूर्ते, उत्थाय—

प्रातः स्मरामि दिननायकवंशभूषं
वेदान्तवेद्यमभयङ्करराजवेषम् ।
वैदेहीलक्ष्मणयुतं स्वजनाभिरामं
संसारसर्पगरलोपशमाय रामम् ॥

इत्यादिरामस्तोत्रं पठित्वा वैदिकतान्त्रिके स्नानसन्ध्ये विधाय भूतशुद्धिप्राणप्रतिष्ठामातृकान्यासादिपीठन्यासान्तं कुर्य्यात् । प्राणायामो राममिति बीजेन, इतरत्रापि राम मां पावयेत्येवमूहः कार्य्यः । अथ श्रीषडक्षरं प्रणवपुटितं करतलादौ व्याप्य अस्य ब्रह्माऋषिर्गायत्रीच्छन्दः श्रीरामो देवता राममितिबीजं नम इति शक्तिः, इत्युच्चार्य ऋष्यादि न्यसेत् । पूर्ववत् दक्षवामस्तनयोर्वा बीजशक्ती न्यसेत्, "दक्षवामयोस्तनयोः" इति रामतापनियोक्तेः । ततः करन्यासाङ्गन्यासौ तनुयात् । ताचित्थम् । रां हृदयाय नमः, अङ्गुष्ठयोः, रीं शिरसे स्वाहा तर्जन्योः, रूं शिखायै वषट् मध्यमयोः, रैं कवचाय हुं, अनामिकयोः, रौं नेत्रत्रयाय वौषट् कनिष्ठिकयोः, रः अस्त्राय फट् करतलकरपृष्ठयोः, इति विन्यस्यैतैरेव मन्त्रैर्हृदादिषु न्यसेत् रामित्यादिषु न्यसेत् रामित्यादि षट्रेफाद्यां स्थाने व्यस्तानि मूलमन्त्राक्षराणि वाच्यानि ।

यथोक्तं रामपूजाकल्पे ।

अथ मूलमन्त्रस्य वर्णैर्व्यस्तैः षडङ्गकमिति ।

अथ शिरोभ्रूमध्यहृदयनाभिगुह्यपत्सु प्रणवपुटितान् नमोन्तान् षड्वर्णान् विन्यस्य त्रीणि पदानि शिरोनाभिपत्सु विन्यस्त्वा पुनः षडङ्गर्ष्यादिन्यासौ कृत्वा शङ्खादिमुद्रासप्तकं प्रदर्श्य धनुर्बाणकपिमुद्रा दर्शयेत् ।

मध्यमाग्रेण संपीड्य तर्जन्यग्रं तु वामतः (१) ।
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।

---

(१) वामस्य मध्यमाग्रे तु तर्जन्यग्रेण योजयेत् । इतियामलतन्त्रे, पाठः ।

दर्शयेत् स्वभुजे वामे मुद्रेयं धनुषो मता ।
तिर्यक्प्रसारितो दक्षः समुष्टिर्ऋजुतर्जनिः ।
बाणमुद्रेति कथिता रामसन्तोषवर्द्धिनी ॥
कनिष्ठानामिकामध्याः करयोरूर्ध्वयोजिताः ।
मिलिताङ्गुष्ठमूलस्थे तर्जन्यौ मारुती मता ॥

अथास्त्रमुद्रयास्त्रमन्त्रेण दिग्बन्धः कार्यः, इति क्रमं केचिदाहुः ।

रामार्चनचन्द्रिकाकृतस्तु—

तनुन्यासानन्तरं मूर्तिपञ्जरन्यासं किरीटन्यासमिन्द्रियन्यासं च कृत्वा ऋष्यादि विन्यस्य मन्त्राक्षराणि मन्त्राक्षरपदानि च सबीजानि न्यस्त्वा पीठन्यासं किरीटन्यासं इन्द्रियन्यासं व्यापकन्यासं च कृत्वा दिग्बन्धं कुर्यादित्याहुः ।

ॐ किरीटहारकेयूरमकरकुण्डलशङ्खचक्रगदाम्भोजहस्तपीताम्बरधरश्रीवत्साङ्कितवक्षस्थलश्रीभूमिसहितस्वात्मज्योतिर्ज्योतिर्मयदीप्तिकराय सहस्रादित्यतेजसे नम इति मन्त्रं मूर्ध्नि न्यस्त्वा ध्यायेत् ।

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम् ।
कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभो-
द्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥इति किरीटन्यासः॥

अथेन्द्रियन्यासः ।

ॐ दिग्भ्यो नमः, इति श्रोत्रयोः, वायवे, आदित्याय, वरुणाय, अश्विभ्याम्, अग्नये, इन्द्राय, विष्णवे, मित्राय, प्रजापतये, चन्द्रमसे, ब्रह्मणे, रुद्राय, क्षेत्रज्ञायेति क्रमेण त्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थमनोबुद्ध्यहङ्कारचित्तेषु, ईश्वराय इति सकलवपुषि । इतीन्द्रियन्यासः ।

दिग्बन्धान्ते—

अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे ।
ध्यायेत् कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥
तन्मध्येऽष्टदलं पद्मं नानारत्नप्रतिष्ठितम् ।
तत्र श्रीरामचन्द्राख्यं ध्यायेत्तेजः परात्परम् ॥
प्रकृत्या सीतया श्यामं स्थित्युत्पत्तिलयाश्रयं(वहम्) ।
देवासुरमुनीन्द्रैश्च योगिवृन्दैश्च सेवितम् ॥
चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
किरीटहारकेयूररत्नकुण्डलशोभितम् ॥

देवतागुरुमन्त्राणां भावयेदैक्यमात्मना ।

इति ध्यात्वा मानसपूजाबाह्यपूजे कुर्यात् । "ध्यानं पूजा जपश्चेति सर्वमन्त्रेष्वयं क्रमः" इति रामपूजाकल्पोक्तेः । पात्रप्रक्षालनादिनिर्माल्यापसरणान्तं पूर्ववत् विधाय चतुरस्रषड्कोणत्रिकोणानि स्वरतः कृत्वा मूलेन गन्धादिभिः सम्पूज्य तेषु त्रिपादिकां सपुष्पामासाद्यात्र प्रक्षालितशङ्खं तत्र संस्थाप्य गन्धपुष्पाक्षतं तत्र हृन्मन्त्रेण निक्षिप्य सानुस्वारप्रतिलोमस्वाहान्तमातृकावर्णैः शुद्धोदकेनापूर्य दशकलात्मने वह्निमण्डलाय नमः, इति त्रिपादीं प्रपूज्य, अष्टादशकलात्मने सूर्यमण्डलाय नमः, इति शङ्खं सम्पूज्य, ॐ षोडशकलात्मने सोममण्डलाय नमः, इति तोयं सम्पूज्य—

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ॥

इति रविमण्डलात्तीर्थानि जलमावाह्यावाहनादिमुद्राः प्रदर्श्य स्वहृत्कमलात् श्रीहरिमावाह्य पुनस्ताः प्रदर्श्य शिखामन्त्रेण गालिनीं मुद्रां दर्शयेत् ।

कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ।
तर्जनी मध्यमानामाः संहता भुग्नवर्जिताः ।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ॥

जलं नेत्रमन्त्रेण प्रोक्ष्य वर्ममन्त्रेणावगुण्ठ्य षडङ्गानि तत्र विन्यस्यास्त्रेण परितो दिग्बन्धं कृत्वा गन्धादि दत्वा श्रीरामरूपत्वेन ध्यात्वा अष्टवारं षडक्षरं जपन् कूर्चेनाभिमृश्य कलशे किंचिज्जलं क्षिप्त्वा तज्जलेन स्वात्मानं सकृन्मूलमन्त्रेण प्रोक्ष्य त्रिर्गन्धादि चाभ्युक्ष्य शङ्खपार्श्वयोः पाद्यार्घ्यपात्रे प्राक् पश्चाच्चाचमनीयमधुपर्कपात्रे संस्थाप्याद्यत्रिषु कलशजलं गन्धादिभिः प्रपूज्य पाद्ये श्यामाकदूर्वाब्जविष्णुक्रान्तानि निक्षिप्यार्घ्ये कुशाग्रतिलयवदूर्वासर्षपान्, आचमनीये जातिफललवङ्गकङ्कोलानि, मधुपर्के दधिमधुघृतानि क्षिप्त्वा सर्वत्र धेनुमुद्राः प्रदर्श्य पुनः स्वहृदि रामचन्द्रं मानसैरुपचारैः सम्पूज्य पूर्ववद् बहिः पीठं प्रकल्पयेत् । पीठगतप्रतिमादौ पूर्ववत् राघवमावाह्यावाहनादिमुद्राः शङ्खादिमुद्राश्च प्रदर्श्य मूलेन "दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात्" इति रामगायत्र्या च पुष्पाञ्जलिं दत्वोक्तविधयासनादिपुष्पोपचारान्तं कृत्वा पुष्पाञ्जल्यष्टकं समर्पयेत् । वामदेशे श्रीसीतायै नमः, इति जानकीं सम्पूज्य, लं लक्ष्मणाय नमः, इति दक्षिणकोणाग्रिमभागे लक्ष्मणमभ्यर्च्य, दक्षिणवामपार्श्वयोः शरान् शा-

ॐ धनुश्च शं शार्ङ्गाय नमः, शं शरेभ्यो नमः, इति सम्पूजयेदिति रामार्च-नचन्द्रिकाकृतः । रामपूजाकल्पे तु हृदादिपूजानन्तरं सीतापूजनमुक्तम् ।

अथावरणपूजा ।

पूर्ववत् षडङ्गानि । प्रथमावरणं पुनः हनुमते नमः । सुग्रीवाय, भरताय, विभीषणाय, लक्ष्मणाय, अङ्गदाय, शत्रुघ्नाय, जाम्बवत इति आग्नेयादिशेषदिक्षु इति द्वितीयम् । सृष्टये, जयन्ताय, विजयाय, सुराष्ट्राय, राष्ट्रवर्द्धनाय, अकोपाय, धर्मपालाय, सुमन्तायेति तद्बहिरष्टदिक्षु इति तृतीयम् । इन्द्रादिदिक्पालान् सायुधान् तद्बहिः पूर्ववदभ्यर्चयेत् इति चतुर्थम् । वसिष्ठाय, वामदेवाय, जाबालाय, गौतमाय, भरद्वाजाय; विश्वामित्राय, वाल्मीकये, नारदाय, सनकाय, सनन्दनाय, सनातनाय, सनत्कुमारायेति तद्बहिः इति पञ्चमम् । अनलाय, नीलाय, सुषेणाय, मैन्दाय, सरभाय, द्विविदाय, चन्दनाय, गवाक्षायेति वानरराजास्तद्बहिः, इति षष्ठम् । एतानि रामपूजाकल्पोक्तानि आवरणानि, प्रत्यावरणं च करप्रक्षालनं देवाय गन्धदानम् ।

दयाब्धे ! त्राहि संसारसर्पान्मां शरणार्थिनम् ।
भक्त्या समर्पये त्वाहमाद्यमावरणार्चनम् ॥

इति पुष्पाञ्जलिसमर्पणं च कार्य्यम् । द्वितीयावरणार्चनमित्येवमुत्तरत्रोहः । दीपदाने--

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासोवसानं नवकमलदलस्पर्द्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं
नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामभद्रम् ॥ इति ।

ततस्तान्त्रिकहोमं निर्वर्त्य जपदशांशसङ्ख्यया तर्पणं तद्दशांशेन प्रोक्षणीजलेन स्वात्मनोऽभिषेचनं च कृत्वा नैवेद्यविसर्जनगण्डूषदानादिस्वात्मसमर्पणान्तं निर्वर्त्य—

श्रीरामचन्द्र रघुपुङ्गव राजवर्य्य
राजेन्द्र राम रघुनायक राघवेश ।
राजाधिराज रघुनन्दन रामभद्र
दासोऽहमद्य भवतः शरणागतोऽस्मि ॥

इति प्रार्थ्य शङ्खोदकपादोदकधारणपाने विधायागस्त्यर्षिकं गायत्रीच्छन्दस्कं लमितिबीजमन्तंनमःशक्तिकं लक्ष्मणमन्त्रं पूर्वोक्तमष्टोत्तरशतवारं जप्त्वा राममन्त्रस्य षट्सहस्रं जपं कुर्य्यात् ।

"एवं ध्यात्वा जपेन्मन्त्रं षट्सहस्रं हि तद्दिने" इति रामपूजाक-

त्पोक्तेः। ततो देवे कर्म समर्प्य महायज्ञादि नित्यकर्म कुर्यात्। सायं सन्ध्यान्ते श्रीराममभ्यर्च्य-

बलीयसा पदा स्वामिन्पदवीमवधारयन्।
आगच्छ शयनागारं सीतया सह राघव॥

इति प्रार्थ्य—

पर्य्यङ्केऽकिलके प्रशस्तफलके भोगीन्द्रचित्राङ्कके
स्वच्छप्रच्छदभावुके मृदुचितस्थानोपधानादिके।
उन्मीलत्कुलशीलया दयितया श्रीसीतया संस्कृते
शेते नित्यमगण्यपुण्यफलदः श्रीकोशलेन्द्रो नृपः॥

इति भावयेदिति। षडक्षरमन्त्रस्य च षड्लक्षं जपस्तद्दशांशेन मधुरत्रययुतपायसेन बिल्वफलैश्च होमः, शेषं पूर्ववत्, इति पुरश्चरणम्, इति रामपूजाविधिः।

## अथ श्रीनृसिंहपूजनम्॥

ब्राह्मे मुहूर्ते, उत्थाय—

प्रातः स्मरामि नृहरिं रमयासमेतं
सच्चक्रकार्मुकवराभयहस्तमीशम्।
ब्रह्माजशम्भुशशिसूर्य्यगणेशदुर्गा-
वस्वादिदेवसहितं निजकर्णिकायाम्॥

इत्यादिस्तोत्रं पठित्वा वैदिकतान्त्रिकस्नानादि पीठन्यासान्तं विदध्यात्। प्राणयामो"ह"मितिबीजेन। अन्यत्रापि नृसिंहतापिन्यां पावयेत्यूहः। अथास्य श्रीनृसिंहानुष्टुभमन्त्रराजस्य विधिः। ब्रह्मा प्रजापतिर्ऋषिः अनुष्टुप् छन्दः श्रीनृसिंहो देवता हामिति बीजं ईमितिशक्तिरित्युच्चार्यर्ष्यादिन्यासं कृत्वा षडङ्गन्यासं कुर्य्यात्। स इत्थं, ह्रामादयश्चत्वार आद्या वर्णा हृन्मन्त्रः। तदग्रिमाश्चत्वारो ह्रीमादयः शिरोमन्त्रः। ह्रूमादयोऽष्टौ शिखायाम्, ह्रैमादयः षट् कवचे, ह्रौमादयस्तावन्तो नेत्रे, ह्रः इत्यादयश्चत्वारोऽस्त्रे। अथवा ह्रां ह्रीं ह्रूं ह्रैं इत्यादय आनन्दात्मने-मायात्मन इति वरचतुष्टयान्ताश्चत्वारः पादाः हृच्छिरःशिखाकवच-मन्त्राः। ह्रौमादिज्वालात्मन इत्यन्तं प्रथमार्द्धं नेत्रमन्त्रः। ह्रआदिः सकलो ज्ञानात्मन इत्यन्तोऽस्त्रमन्त्रः, सर्वत्रान्ते नमः शब्द इति मन्त्रप्रकाशिकाकृतः। नृसिंहतापनीये तु।

चत्वारः पादाश्चत्वार्यङ्गानि भवन्ति सप्रणवं सर्वं पञ्चमं भवतीत्युक्तम्। अथ करयोरङ्गुष्ठादिदशाङ्गुलीनां त्रिषु त्रिषु पर्वसु त्रिंशदक्ष-

राणि विन्यस्य शिष्टद्वयं करतलयोर्न्यसेत् । सर्वत्र प्रणवपुटितत्वं नमोन्तत्वं च, ततः शिरोललाटदृङ्मुखकरपदसन्धिषु साग्रेषु उदरहृद्गलपार्श्वे-ष्वपरे ककुदि क्रमात्, न्यसेत् वर्णान् । अपरे अपराङ्के । अथ पादगुल्फ-जानुकटिनाभिहृद्बाहुकण्ठचिबुकोष्ठगण्डकर्णास्यनासापुटनेत्रमूर्द्धसु द्वे द्वे अक्षरे विन्यस्य मुखमूर्द्धनासाचक्षुःश्रोत्रास्यहृन्नाभिकाटिजानुपत्सु पदानि न्यस्त्वा नासाग्रनेत्रश्रोत्रनाभिहृदयमूर्द्धबाहुपत्सु चत्वारि च-त्वारि अक्षराणि विन्यस्य चतुरः पादान् शिरोहृन्नाभिषु सर्वं च न्य-सेत् । ततो मूर्द्धादिहृत्पर्यन्तं पूर्वार्द्धं न्यस्त्वा पादादिहृत्पर्यन्तमुत्तरार्द्धं न्यसेत् । अथ मुखे, शिरोनासयोः नेत्रयोः श्रोत्रयोः केशरस्थाने हृदा दिनाभौ कट्यादिपर्य्यन्तं उग्रमुग्रं नमाम्यहमित्येवं नवपदानि विन्यस्योग्रं वीरं नमाम्यहम् वीरं वीरं नमाम्यहमित्येवं पुनः एष्वेव स्थानेषु न्यस्त्वोग्रं नृसिंहं नमाम्यहमित्येवं पुनरेष्वेव स्थानेषु न्यसेत् । तत आद्यवर्णं मूलाधारे न्यसेत् । तदादिनाभिपर्य्यन्तं वर्णत्रयं तदादि हृत्प-र्य्यन्तं वर्णषट्कं वर्णत्रयं नेत्रत्रये द्वे शिरसि दश कराङ्गुलीषु द्वे चर-णयोः अन्त्यं सकलवपुषि । अस्य न्यासस्य हरिन्यास इति संज्ञा । एतन्माहिम्नो हरिणैव वक्तुं शक्यत्वादिति मन्त्रप्रकाशिकाकृतः । अथ पुनः षडङ्गर्ष्यादिन्यासौ कृत्वा शङ्खादिमुद्राः प्रदर्श्यात्र वक्त्रदंष्ट्राकर्णकेसरनार-सिंहमुद्रा दर्शयेत् ।

हस्तावधोमुखौ कृत्वा नाभिदेशे प्रसार्य च ।
तर्जन्यौ हस्तयोरूर्ध्वमानीयावास्यमुद्रिका ॥
हस्तावूर्ध्वमुखौ योतद्वेसंयोज्य मध्यमे ।
वामायां नासिकायां तु दक्षिणायां विनिक्षिपेत् ॥
तर्जन्यौ पृष्ठतो लग्ने त्वङ्गुष्ठौ तर्जनीश्रितौ ।
वक्त्रमुद्रा भवेदेषा हरिसान्निध्यकारिका ॥
वक्त्रमुद्रां तथा कृत्वा तर्जनीभ्यां तु मध्यमे ।
पीडयेद्दंष्ट्रमुद्रैषा सर्वपापप्रणाशिनी ॥
हस्ताभ्यां प्रसृतिं कृत्वा कर्णमूले निधाय तु ।
प्राङ्मुखे च तथैवो कर्णमुद्रा प्रकीर्तिता ॥
मुष्टिं बध्वा तु हस्ताभ्यां तर्जन्यौ द्वौ प्रसार्य च ।
कर्णदेशे समारभ्य चालयेदूर्ध्वतस्तथा ॥
मुद्रा केशरसंज्ञैषा सर्वसम्पत्प्रदायिनी ।
जानुमध्ये करौ कृत्वा चुबुकोष्ठौ समावृतौ ॥
हस्तौ तु भुवि संलग्नौ कम्पमानः पुनः पुनः ।

मुखं विवृतकं कुर्य्याज्जिह्वा स्याच्च सुलेलिहा ॥
एषा मुद्रा नारसिंही प्रधानेति प्रकीर्तिता(१) ।

ततोऽस्त्रेण दिग्बन्धं विधाय श्रीनृसिंहं ध्यायेत् ।

तत्र शान्तध्यानम्—

जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद्बाहुसंस्पृष्टकेश-
श्चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ।
ज्वालामालापरीतं रविशशिदहनत्रीक्षणं सप्तजिह्वं
दंष्ट्रोग्रं धूमकेशं वदनममिवहत्पातु मां नारसिंहः ॥ इति ।

अथोऽग्रध्यानम्—

उद्यद्भास्वत्सहस्रप्रभमशनिनिभं त्रीक्षणैर्निष्किरन्तं
वह्नीनह्नाय विद्युत्ततिविततसटाभीषणं भूषणैश्च ।
दीव्यद्दादीप्तदेहैर्मिशितनखलसद्बाहुदण्डैरनेकैः
सम्भिन्नं भिन्नदैत्येश्वरतनुमतनुं नारसिंहं नमामि ॥

इति ध्यात्वा "भद्रं कर्णेभिः शृणुयाम देवाः" । "स्वस्ति नऽइन्द्रो वृद्धश्रवाः" इत्येतद्द्वयमुच्चार्य्य शान्तिरिति त्रिः पठित्वा शङ्खपूजादिपुष्पदानान्तं विधाय देववामाङ्के रमां समभ्यर्च्यावरणदेवताः पूजयेत् । हृदादिभिराद्यावरणम् । गरुडाय नम इति पुरतः । शर्वाय, अनन्ताय-कमलासनायेति शेषदिक्षु । श्रियै ह्रियै तुष्ट्यै इति विदिक्षु इति द्वितीयम् । स्तम्भनकारिणे नृसिंहाय, वश्यकारिणे नृसिंहाय, मोहनकारिणे नृसिंहाय, विद्वेषकारिणे नृसिंहाय, उच्चाटनकारिणे नृसिंहाय, आकर्षण-कारिणे नृसिंहाय, पुष्टिप्रदाय नृसिंहाय, निधिप्रदाय नृसिंहाय, विद्याप्रदाय नृसिंहाय, इति दिक्षु,

अत्र च गुणविशेषाः ।

चक्रिणं नखिनं स्वर्णवर्णं श्यामलवाससम् ।
नृसिंहं स्तम्भितारातिं दले प्राचि प्रपूजयेत् ॥
धृताम्बुजगदाशङ्खचक्रं वश्यक्रियाक्षमम् ।
सिन्दूरारुणमाग्नेये पूजयेदथ दक्षिणे ॥
आन्त्रमाले शङ्खचक्रे गदाखड्गौ च बिभ्रतम् ।
भिन्नदैत्योरसं कृष्णं त्रिनेत्रं मारणे क्षमम् ॥
विद्वेषोच्चाटनकरं नीलोत्पलसमान्वितम् ।
शङ्खचक्रगदालोहदाण्डिनं नैर्ऋते दले ॥
प्रतीच्यां शङ्खचक्रासिपाशान्वितचतुर्भुजम् ।

( १ ) नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्धिनी ॥ इत्यन्यत्र पाठः ।

शक्तियुक्तं जपापुष्पसममाकर्षणक्षमम् ॥
वायवीये तु शबलं शङ्खचक्रगदाभये ।
बिभ्राणं पुष्टिदं नेत्रत्रितयालङ्कृताननम् ॥
उदीचीने नरहरिं पाञ्चजन्यसुदर्शने ।
गदानिधी च बिभ्राणं लक्ष्म्या युक्तं निधिप्रदम् ॥
विद्यामूर्तिमुदक्पूर्वे क्षीराभं पीतवाससम् ।
पाशाङ्कुशधरोद्बाहुशङ्खचक्रगदाधरम् ॥
हृत्सरोरुहमध्यस्थं चन्द्रपुञ्जसुनिर्मलम् ।
लक्ष्म्या युक्तं नारसिंहं चिन्तयेत्साधकस्तथा ॥ इति ।

उग्रं नृसिंहं नमाम्यहं स्तम्भनकारिणं नृसिंहं नमाम्यहमित्येवं पूजनमिति तृतीयम् । चक्राय खड्गाय पद्माय मुसलायेति देवदक्षिणे, शङ्खाय खेटाय गदायै शार्ङ्गायेति देववामे, इति चतुर्थम् । दक्षिणे लक्ष्म्यै श्रीवत्साय, वामे तुष्ट्यै कौस्तुभाय, मध्ये वनमालायै पीताम्बराय, ब्रह्मसूत्रायेति नाभौ, किरीटादीनि भूषणानि पुरोभाग इति पञ्चमम् । श्रद्धायै, मेधायै, भीमायै, पापायै, भयानकायै, आर्द्रायै, दीक्षायै इति, प्रागादिदिक्षु इति षष्ठम् । इन्द्रादिभिर्वज्रादिभिश्च सप्तमाष्टमे पूर्ववत् । एतानि मन्त्रप्रकाशिकोक्तानि, आवरणानि । अथ नृसिंहाष्टकपरिवृतं मध्यनृसिंहव्यूहनृसिंहशब्दाभिधेयं सपरिवारं स्तुत्यादिभिः प्रदक्षिणान्तैरुपचारैरभ्यर्च्य यथाशक्ति मूलमन्त्रं नारसिंहमुद्राप्रदर्शनपूर्वकं जपेत् । "इमां मुद्रां जपादौ च पूजान्ते चैव दर्शये"दिति नृसिंहाराधनरत्नमालोक्तेः । तान्त्रिकहोमं कृत्वा मूलेन पञ्चवारं सपरिवारनृसिंहतर्पणं विधाय नृसिंहसामभी रथन्तरादिभिस्तुत्वा गीतनृत्यादिभिर्देवं सन्तोष्य कर्म समर्पयेदिति । अनुष्टुभो नृसिंहमन्त्रस्य च पुरश्चरणात्पूर्वं जपो द्वात्रिंशत्सहस्रसंख्यः, द्वात्रिंशदयुतसंख्यः पुरश्चरणम्, तद्दशांशेन पायसहोमः । शेषं पूर्ववत् । अमुष्य द्वात्रिंशल्लक्षजपात्तु भगवान् नृसिंहः प्रत्यक्षो भवति । इति नृसिंहपूजनम् ॥

अथ शिवपूजा ॥

ब्राह्मे मुहूर्ते उत्थाय—

प्रातः स्मरामि वृषवाहनमद्रिजेशं
भस्मानुलिप्ततनुमर्द्धशशाङ्कमालम् ।
नागेन्द्रवेष्टितजटायुनर्दीं दधानं
रुद्राक्षबिल्वदलनिर्मितभूरिमालम् ॥

इत्यादिस्तोत्रं पठित्वा वैदिकतान्त्रिकस्नानान्ते त्रिपुण्ड्रधारणं कुर्या-

त् । यथोक्तं—

बृहन्नारदीये—

शिवप्रियाः शिवासक्ताः शिवपादार्चने रताः ।
त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः ॥ इति ।

कौर्मेऽपि—

सुपीतवसनाः सर्वे श्रीवत्साङ्कितवक्षसः ।

इति वैष्णवान्निर्दिश्योक्तं—

अन्ये महेश्वरपरास्त्रिपुण्ड्राङ्कितमस्तकाः ॥ इति ।

ब्रह्माण्डेऽपि—

मध्यमानामिकाङ्गुष्ठैर्ललाटे यत्त्रिपुण्ड्रकम् ।
तत्त्रिपुण्ड्रं भवेत् शस्तं महापातकनाशनम् ॥
सितेन भस्मना तिर्यक् त्रिपुण्ड्रस्य च धारणम् ।
शैवागमेषु निष्ठानां तत्तन्मन्त्रेषु शस्यते ॥ इति ।

कालाग्निरुद्रोपनिषद्यपि त्रिपुण्ड्रधारणां प्रकृत्य व्रतमेतच्छाम्भवमिति । इदं चोर्ध्वपुण्ड्रं कृत्वा विधेयम्, अदृष्टार्थयोरनयोर्नारिष्टहोमोपहोमवत्समुच्चयस्यैव युक्तत्वात्, [पू.मी.अ. १० पा. ४ अ० १ सू. १-२] उदाहृतमदनपारिजातवचनेनोर्ध्वपुण्ड्रस्यावश्यकत्वोक्तेश्च । आह च—

जाबालिः—

उर्ध्वपुण्ड्रं विना मोहात् यदि कुर्यात् त्रिपुण्ड्रकम् ।
न तस्य फलमाप्नोति दानस्याश्रोत्रिये यथा ॥ इति ।

नचोर्ध्वपुण्ड्रे त्रिपुण्ड्रकरणे ललाटे यत्त्रिपुण्ड्रकमिति निर्देशस्य गौणत्वप्रसङ्गः । "तदभावो नाडीषु तच्छ्रुतेरात्मनि च"-[ उ० मी० अ० ३ पा० २ अधि० २ सू० ७ ] इति न्यायेनाभयोरपि मुख्याधिकरणत्वोपपत्तेः । यथा हि नाडीषु शेते पुरीतति शेते इति, य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सति सम्पद्यत्यनेकेषामपि अधिकरणानां समुच्चयः, एवमनयोरपि । किञ्चोर्ध्वपुण्ड्रोपरि क्रियमाणस्यापि त्रिपुण्ड्रस्यास्तिभालैकदेशसम्बन्धः, ऊर्ध्वपुण्ड्रस्य भालाव्यापित्वात्, तावता च ललाटाधिकरणत्वव्यवहारः सङ्गच्छते । सूर्याचन्द्रमसोः सहवासस्य तिथ्यन्तक्षणसम्बन्धेनैव तिथ्यधिकरणत्वव्यवहारः, अमावास्येयं तिथिरिति उक्तं च तन्त्ररत्ने पञ्चमे । व्यक्तं चैतत् यदेकदेशे वर्त्तते कतिपयतदेकदेशिन्यपि यथा द्विपदे स्थितोऽपवरको ग्रामे जनपदेऽवस्थितो भवति, यदि च भालस्य त्रिपुण्ड्रेऽस्य विहितः स्यात् तर्हि औदुम्बरीस्पर्शेन तद्वे(१)···क्षिणा मूर्त्ति [ यदि च भाल

---

( १ ) अत्रादर्शपुस्तके पाठस्त्रुटितः, अस्माभिः कल्पितपाठस्तु [ ] एतच्चिह्नमध्ये सन्निवेशितः ।

स्थोर्ध्वपुण्ड्रेन त्रिपुण्ड्रस्य विहतिः स्यात् तर्हि औदुम्बरीस्पर्शेन तद्वेष्टनमपि विहन्येतेति । अथ श्रीकण्ठादिन्यासं कुर्यात् । स यथा—अस्य श्रीदक्षिणामूर्तिमन्त्रस्य ब्रह्मा] ऋषिः गायत्रीछन्दः दक्षिणामूर्तिर्देवता पुरुषार्थचतुष्टये विनियोगः, इत्युच्चार्य्य ऋष्यादिन्यासं विधाय ऐं ह्रीं श्रीं अं कं खं ङं [गं घं] आं अङ्गुष्ठाभ्यां नमः । इत्येवं बीजत्रयपूर्वकाङ्गुलिन्यासं विधाय षडङ्गन्यासं कृत्वा—

सिन्दूरकाञ्चनसमोभयभागमर्धनारीश्वरं गिरिसुताहरभूषचिह्नम् ।
पाशाभयाक्षवलयेष्टदहस्तमीशं स्मृत्वा न्यसेत्सकलवाञ्छितवस्तुसिद्ध्यै॥

मुखादिकेशवादिस्थानेषु ऐं ह्रीं श्रीं अं श्रीकण्ठशपूर्णोदरीभ्यां नमः। एवमुत्तरत्रापि बीजत्रयसानुस्वारमातृकार्णनमःशब्दोक्तिः। अनन्तेशविरजाभ्यां, सूक्ष्मेशशाल्मलीभ्यां, त्रिमूर्तीशलोलाक्षीभ्याम् ,अमरेशवर्त्तुलाक्षीभ्यां, उर्वीशदीर्घघोणाभ्यां, भारभूतीशदीर्घमुखीभ्यां, अतिथीशगोमुखीभ्यां, स्थाण्वीशदीर्घजिह्वाभ्यां, हरेशकुण्डोदरीभ्यां, भौतिकेशविकृतमुखीभ्यां, सद्योजातेशज्वालामुखीभ्यां,(१)इति स्वराणाम्। क्रोधेशमहाकालीभ्यां, चण्डेशसरस्वतीभ्यां,पञ्चान्तकेशगौरीभ्यां,शिवोत्तमेशत्रैलोक्यविद्याभ्याम्, एकरुद्रेशमन्त्रशक्तीभ्याम्, कूर्मेशात्मशक्तिभ्याम् । एकाननेशभूतमातृकाभ्याम् , चतुराननेशलम्बोदरीभ्याम , भूतेशद्राविणीभ्याम्, सर्वेशनागरीभ्याम्, सोमेशखेचरीभ्याम्, लाङ्गुलीशमञ्जरीभ्याम्, दारुकेशरूपिणीभ्याम्, अर्धनारीश्वरवीरिणीभ्याम्, उमाकान्तेशवृकोदरीभ्याम्, आषाढीशपूतनाभ्याम्, दण्डीशभद्रकालीभ्याम्, अत्रीशयोगिनीभ्याम्, मीनेशशङ्खिनीभ्याम्, मेषेशगर्जनीभ्याम्, लोहितेशकालरात्रीभ्याम, शिखीशकुण्डलिनीभ्याम, छगलण्डेशकपर्दिनीभ्याम्, द्विरण्डेशवज्राभ्याम्, महाकालेशजयाभ्याम्, इति पञ्चवर्गाणाम् । त्वगात्मभ्यां वालीशसुमुखेश्वरीभ्यां, असृगात्मभ्यां भुजङ्गेशरेवतीभ्याम्, मांसात्मभ्यां पिनाकीशमाधवीभ्याम्, मेदात्मभ्यां खड्गीशवारुणीभ्याम्, अस्थ्यात्मभ्यां केशवायवीयाभ्याम्, मज्जात्मभ्यां श्वेतेशरक्षोपचारिणीभ्यां, शुक्रात्मभ्यां भृग्वीशसहजाभ्यां, प्राणात्मभ्यां नकुलीशमहालक्ष्मीभ्याम्, क्रियाशक्तीभ्यां शिवेशव्यापिनीभ्याम्, इति यादीनां लान्तानाम् । क्षं परमात्मभ्यां संवर्तकेशमहामायाभ्यामिति व्यापकन्यासं कुर्य्यात् । इति श्रीकण्ठादिन्यासः ।

---

(१) अनुग्रहेशोल्कामुखीभ्याम्, अक्रूरेशश्रीमुखीभ्याम्, महासेनेशविद्यामुखीभ्याम् , इत्यधिकमन्यत्र ।

अथ तत्वन्यासं प्रणवान्तनादेन प्राणायामं च कृत्वा पीठन्यासं कुर्यात। विमलादिदेवतास्थानेषु वामायै, ज्येष्ठायै, गौर्यै, रौद्र्यै, काल्यै, कलविकरिण्यै, बलविकारिण्यै, बलप्रमथिन्यै, सर्वभूतदमन्यै, मनोन्मन्यै, इति देवताः पूजयेत्। ततः श्रीदक्षिणामूर्तिमन्त्रस्य ब्रह्मा ऋषिर्गायत्री-च्छन्दः श्रीदक्षिणामूर्तिर्देवताप्रणवान्तो नादो बीजं स्वाहाशक्तिरित्यु-च्चार्य्य, ऋष्यादि विन्यस्य आं ईं ऊँ पें ओं अः इत्येतैर्वर्णैः प्रणवस-म्पुटितैः षडङ्गमन्त्रैरङ्गुलिन्यासहृन्न्यासौ विधाय मूर्ध्नि भाले चक्षुषोः श्रोत्रयोर्नासयोः पृष्ठे गण्डयोर्दन्तपङ्क्त्योः जिह्वाग्रे नासाग्रे श्रोत्रयोः कण्ठ बाह्वोर्हृदि नाभौ गुह्ये गुदे ऊर्वोर्जान्वोर्जङ्घयोः पार्ष्ण्योः पदोर्मन्त्राक्षराणि२२ न्यस्त्वा सर्वाङ्गेषु व्यापकन्यासं कृत्वा पार्ष्ण्यादिन्यासाङ्गन्यासौ पुनर्विधाय हृत्कमले श्रीसदाशिवं ध्यायेत्।

व्याख्यामुद्राक्षमाले कमलसुलिखिते बाहुभिर्वामपादं
बिभ्राणो जानुमूर्ध्नापदजलनिहितापस्मृतिर्द्रुदुमाद्यः।
सौवर्णे योगपीठे लिपिमयकमले सूपविष्टस्त्रिनेत्रः
क्षीराभश्चन्द्रमौलिर्वितरतु विपुलां शुद्धबुद्धिं शिवो नः॥ इति।

ततो मानसपूजां कृत्वोक्तविधया शङ्खादिपूजां कृत्वा प्रतिमादौ देवमावाहयेत्। "सहस्रशीर्षा" "सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः। भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः। सावित्र्या मूलमन्त्रेण च व्यस्तसमस्तव्याहृतीभिर्महादेवमावाहयामीत्यन्ताभिरावाहनम्। एवमुत्तरत्रापि पुरुषसूक्तगततत्तन्मत्रसावित्रीमूलोच्चारणम्।

आवाहनादिमुद्राः प्रदर्श्य। वामदेवाय नमः। ज्येष्ठाय नमः। श्रेष्ठाय नमः। रुद्राय नमः। कालाय नमः। कलविकरणाय नमः। बलविकरणाय नमः। बलप्रमथनाय नमः। सर्वभूतदमनाय नमः। मनोन्मनाय नमः। इत्यासनम्।

ततो देवाग्रतो ब्रह्मणे विष्णवे, दक्षिणतः स्कन्दाय विनायकाय, पश्चिमतः शूलाय महाकालाय, उत्तरतः उमायै नन्दिकेश्वरायासनं कल्पयामीत्यासनमेषां कल्पयित्वा, "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्" इति सपरिवारं सन्निधाप्य, अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्य इति सन्निरुध्य ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपत्तिर्ब्रह्मणोऽधिपतिर्ब्रह्म शिवो मे अस्तु सदा शिवोमिति देवं पञ्चोपचारैरभ्यर्च्य षडङ्गान्यस्मिन् न्यस्त्वा यो रुद्रो अग्नौ यो अप्सु य ओषधिषु यो रुद्रो विश्वा भुवनानि आविवेश। तस्मै रुद्राय नमो अस्तु इति

पाद्यं समर्पयेत्। सावित्र्याचमनं अर्घ्यदानं पूर्ववत्।

अथ स्नानं हेमाद्रौ महापूजाप्रकरणे।

शिवधर्मे—

पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात्।
ईशादिमन्त्रैः संस्नाप्य शिवलोकमवाप्नुयात॥
यः पुमांस्तिलतैलेन करयन्त्रोद्भवेन च।
शिवाभिषेकं कुरुते स शैवपदमाप्नुयात्॥
स्नानं पलशतं ज्ञेयमभ्यङ्गः पलविंशतिः(१)।
पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम्॥

तत्रैव पुराणान्तरे।

पञ्चविंशत्पलेनैव अभ्यङ्गं कारयेदथ।
शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन वै।
पलानां द्विसहस्रेण महास्नानं विधीयते।
तावता मधुना चैव दध्ना चैव ततः पुनः।
तावतैव हि क्षीरेण गव्येनैव भवेत्ततः॥
भूयः सार्धसहस्रेण पलानामैक्षवेण तु।
रसेन कारयेत् स्नानं भक्त्या चोष्णाम्बुना ततः॥
पुनः शीताम्बुना दत्वा वस्त्रपूतेन मन्त्रवित्।
स्नापयेद्भक्तितो भूपो गन्धपात्रस्थितेन तु॥

त्रयाणां वर्णानां रुद्रसूक्तेन स्नपनं चतुर्थस्य तु महिम्नस्तोत्रादिना स्नापयेत्। ततो भवं देवं तर्पयामि शर्वं देवं तर्पयामि ईशानं देवं, पशुपतिं देवं, रुद्रं देवम्, उग्रं देवं, महान्तं देवमिति तर्पयित्वा आचमनवस्त्रोपवीताभरणानि पुरोवन्निवेद्य "नमस्ते रुद्रमन्यव उतोत इषवे नमः। नमस्त अस्तुधन्वने बाहुभ्यामुत ते नम इति गन्धं दत्वा "भुवनामधिश्रियम्। स्तोम्य उरुकृतसुवीरम्। हविर्जुषाणसपत्या अभिः। भूरसि जहि शत्रुं म्यमृधो उस्व" इति अक्षताः समर्प्य सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्। तेषां सहस्रयोजने वधन्वा नितन्मासि। इति पुष्पाणि निवेद्य तदुपरि निश्छिद्रकोमलसंयुतबिल्वदलत्रयं दद्यात्। यथोक्तम्—

बिल्वपत्रैरखण्डैस्तु यो लिङ्गं पूजयेत्सकृत्।
सर्वपापविनिर्मुक्तः सूर्य्यलोके महीयते॥ इति।

---

(१) तैलशोधनार्थं स्नानीयजलपरिमाणमेतदिति स्मृतिकौस्तुभे।

करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते ॥ इति च ।

अत्र विशेषो हेमाद्रौ—

विधिना स्नाप्य चानेन गोरोचनयालिम्पेत् ।
कृष्णाकुङ्कुमकर्पूरचन्दनागुरुयुक्तया ।
कृष्णा=कस्तूरी ।
लेपयित्वा ततो लिङ्गमापीडेन घनं शुभम् ॥
नीलोत्पलसहस्रेण मालां बध्वा प्रपूजयेत् ।
अलाभेतु सहस्राणामर्धार्धेनैव पूजयेत् ।
उत्पलानामलाभे तु पत्रैश्च श्रीतरोर्यजेत् ।

अनुलेपनपरिमाणं च लैङ्गे

अनुलिम्पेच्च तत्सर्वं पञ्चविंशत्पलेन वा ॥ इति ।

तत आवरणपूजा ।

हृदादिभिः षडङ्गैः प्रथमावरणम् । अ आं नम इत्येवमष्टभिः स्वरयुग्मैर्द्वितीयम् । कादिपञ्चवर्गैरन्तस्थाभिरूष्माभिर्लक्षाभ्यां च तृतीयम् । सरस्वत्यै ब्रह्मणे सनकाय सनन्दनाय सनातनाय सनत्कुमाराय शुकाय वेदव्यासाय गणेश्वराय इति चतुर्थम् । पार्वत्यै सुभगायै भद्रायै क्रीडायै, शान्त्यै, रौद्र्यै, काल्यै विजृम्भायै, इति पञ्चमम् । लोकपालैः षष्ठम् । एतान्यावरणानि उक्तानि मन्त्रप्रकाशिकायाम् । ततो धूपदीपनैवेद्योपचारान् समर्पयेत् ।

नैवेद्यपरिमाणम्--

हेमाद्रौ—

दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा ।
शतद्रोणसमं पुण्यमाढकेन विधीयते ।
वित्तहीनस्य मर्त्यस्य नात्र कार्य्या विचारणा ॥ इति ।

कुडवं प्रस्थमाढकं द्रोणं च खारिका चेति पूर्वपूर्वाच्चतुर्गुणम् ।

वाणरावणचण्डीशनन्दिभृङ्गिरिटादयः ।
सदाशिवप्रसादोऽयं सर्वे गृह्णन्तु शाम्भवाः ॥

इति चण्डभागं दत्वा करोद्वर्त्तनं समर्प्याग्नौ शेषान्नेन भवाद्युक्तशब्दैर्देवशब्दयुतैश्चतुर्थ्यन्तैरष्टाहुतीस्तन्त्रोक्तविधया हुत्वा आवरणदेवताभ्यामपि सकृत् हुत्वा इदं फलमिति फलं समर्प्य नीराज्य होममन्त्रैस्तत्समसंख्यपुष्पाञ्जलीर्दत्वा ताम्बूलमुखवासौ दद्यात् । तल्लक्षणं हेमाद्रौ रत्नकोशे—

महापिप्पलपत्राणि क्रमुकस्य फलानि च ।
शुक्तिक्षारेण संयुक्तं ताम्बूलमिति संज्ञितम् ॥

श्वेतपत्रं च चूर्णं च क्रमुकस्य फलानि च।
नारिकेलफलोपेतं मातुलिङ्गसमायुतम्॥
एलाकङ्कोलकर्पूरैर्मुखवासं प्रचक्षते।
एतेषामप्यलाभे तु तत्तद् द्रव्यं स्मरेद् बुधः॥ ततः।
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च।
त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम्।

इति पुनर्नीराजयेत्। तत्र विशेषो हेमाद्रौ।

शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः।
ततो नीराजनं दीपैः षड्विंशत्या तु कारयेत्॥
सर्षपैर्दधियुक्तैश्च दूर्वागोरोचनाक्षतैः।
शातकुम्भं ततः पद्ममष्टपत्रं सकर्णिकम्॥
ध्यात्वा निवेदयेन्मूर्ध्नि लिङ्गस्य कुसुमैः सह।
सूक्ष्मवस्त्रयुगं पीतं श्वेतं वा पद्मसन्निभम्॥
चामरं दर्पणं चैव दीपवर्त्तिं प्रदापयेत्।
वितानकध्वजौ दद्यात्किङ्किणीस्तवकान्वितौ॥
अथाष्टभिः क्षितिः पीड्या अङ्गैर्भक्त्या तु दण्डवत्।
तत उच्चैः पठेत्स्तोत्रं शाङ्करं च शिवाप्रियम्॥
प्रदक्षिणं ततो गच्छेच्छनैर्निर्माल्यवर्जितः॥ इति।

ऋतं सत्यमिति नत्वा तिस्रः प्रदक्षिणाः कुर्य्यात्। अथ गीताभिः सन्तोष्य "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति आत्मानं समर्प्य प्रार्थ्य निर्माल्यं प्रसादत्वेन शिरसा गृह्णीयात्॥

निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः।
राजसूयस्य यज्ञस्य फलं प्राप्नोति निश्चितम्॥

इत्यादित्यपुराणे वचनात्।

यत्तु—

शिवनिर्माल्यभोक्तारः शिवनिर्माल्यलङ्घकाः।
शिवनिर्माल्यदातारः स्पर्शस्तेषां हि पुण्यहा॥

इति स्कान्दवचनं तदशैवविषयम्।

शालग्रामयुतं शिवनिर्माल्यं तु सर्वैर्ग्राह्यं—

शिवनिर्माल्यसंयुक्तं पत्रं पुष्पं फलं जलम्।
शालग्रामस्य संसर्गात् सर्वं याति पवित्रताम्॥

इति स्कान्दोक्तेः।

अत्र निर्माल्यशब्दस्य पत्रादिषु प्रयोगात् "निर्माल्यं धारयेत्" इत्येनन सर्वेषामेषां प्रतिप्रसवो गम्यते तत् शैवैः शिवतीर्थमपि ग्राह्यमिति । ततो दक्षिणामूर्तिमन्त्रं अष्टोत्तरशतम् अष्टोत्तरसहस्रम् वा रुद्राक्षमालया जपेत्-

व्याहरन्ति तु नामानि ये शम्भोः परमात्मनः ।
रुद्राक्षालङ्कृताः सन्तस्ते वै भागवतोत्तमाः ॥

इति बृहन्नारदीयोक्तेः । ततः-

साधु वासाधु वा कर्म्म यद्यदाचरितं मया ।
तत्सर्वं भगवन् शम्भो गृहाणाराधनं परम् ॥

इति प्रार्थ्योपसंहारमुद्रां प्रदर्श्य भगवति कर्म्म निवेदयेत् ।

इति शिवपूजा ।

यथोक्तविष्णुपूजाशिवपूजयोरसम्भवे भक्त्या पत्रैः पुष्पैः फलैरद्भिर्वा पूजनं कार्य्यम् । यथोक्तं गीतासु भगवता ।

पत्र पुष्प फल तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ इति ।

श्रीभागवतेऽपि—

अण्वप्युपहृतं प्रेष्ठं भक्तेन मम वार्यपि ।
भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ इति ।

बृहन्नारदीये वेदमालिजानन्ति संवादे ।

पत्रैः पुष्पैः फलैर्वापि दूर्वाभिः पल्लवैरथ ।
पूजयस्व जगन्नाथं नारायणमकामतः ॥
कन्दमूलफलैर्वापि सदा पूजय माधवम् ।
प्रदक्षिणानमस्कारैः स्तोत्राणां पठनैरपि ॥ इति ।

कौर्मेऽपि—

आराधयेन्महादेवं भावपूतो महेश्वरम् ।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥
ईशानेनाथवा रुद्रैस्त्र्यम्बकेन समाहितः ।
पुष्पैः पत्रैरथाद्भिश्च चन्दनाद्यैर्महेश्वरम् ॥ इति ।

उक्तञ्च तातचरणैः—

नानोपचारैः समयानुसारैर्गङ्गाजलैर्वा तुलसीदलैर्वा ।
तमेव देवं परिपूजयामः संसारमेनं सहसा जयामः ॥ इति ।

(१) हरिं वा हरं वाहरं वार्चयध्वं कुरुध्वं स्वयध्वं समार्य ? मुपाधिसाङ्कार्यवश दोषाय । त्रिविधं वा तत्प्रवृत्तिनिमित्तमिति अक्षादिशब्दवखानार्थेताति केचित् ।

त्रिविधायाः मोक्षफलत्वं श्रीभागवते ।

तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ।। इति ।।

( श्री भा० स्कन्ध० १० अ० १४ श्लो० ८ )

विदधन् जीवेतेति निर्देशादनुवृत्त्या नतिर्मुक्तिहेतुरिति सूचितम् । तद्धेतुत्वं न साक्षात् किन्तु प्राणाडिकमिति सूचयितुमनुकम्पासु समीक्षमाण इत्युक्तम् । अनेन तेषामेवानुकम्पार्थमित्युक्तं ज्ञानं मुक्तौ द्वारमुक्तं भवति । सालोक्यहेतुत्वं–

बृहन्नारदीये ।

अर्चितं शङ्करं दृष्ट्वा विष्णुं वापि नमेत्तु यः ।
स विष्णुभवनं प्राप्य वसेदष्टशतं नृप ।। इति ।

पापक्षयहेतुत्वं–

श्रीभागवते—

पतितः स्खलितो वार्तः क्षुत्वा वा विवशो गृणन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ।

( श्रीभा० स्क० १२ अ० १२ श्लो० ४६ )

गारुडेऽपि—

शाठ्येनापि नमस्कारः प्रयुक्तश्चक्रपाणये ।
संसारस्थूलबन्धानामुद्वेजनप्रदो हि सः ।।

स्थूलबन्धाः=पापानि । उद्वेजनं=निवृत्तिमात्रम् । सवासनपापक्षयस्तु श्रद्धापूर्वकानुवृत्त्या । अत एव तत्राग्रे–

आसीनो वा शयानो वा तिष्ठन् वा यत्र तत्र वा ।
नमो नारायणायेति मन्त्रैकशरणो भवेत् ।। इति ।

तथा—

नम इत्येव यो ब्रूयात्तद्भक्तः श्रद्धयान्वितः ।
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि शौनक ।। इति ।

नानापापवासनावान् श्वपाक इति तद्ग्रहणेन सवासनपापक्षयः सूचितः । लोकनं लोकः स्वप्रकाशं चैतन्यम् । अक्षयो लोकः परमात्मा

---

( १ ) अत्र—हरिं वा हरं वादरेणार्चयध्वं स्तुवीध्वं कुरुध्वं भवध्वंसमार्याः ! अत्रोपधेयसाङ्कर्यं—इति पाठ उचितुं युक्त इति ।

ततोऽन्यस्य "अतोऽन्यदार्त्तम्" इति अमित्यस्यावश्रवणात्। तन्नकशब्दे तत्पदं नमनानुरागपरम्। नतिरूपसाधनभक्तेर्विधानादेव सिद्धेरन्य- साधनभक्तेरेवकारव्यावृत्तेः। अतश्च भक्त्या नतिरूपप्रधानभक्त्यैकश रणस्य सवासनपापक्षयजन्यो यो भगवदनुरागस्तत्स्फूर्तिश्च भवतीत्युक्तं भवति। एवं च पूजाप्रयोगे यद्यपि नतिरुक्ता-

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग उच्यते॥
भूमौ निपत्य यः कुर्य्यात् कृष्णेऽष्टाङ्गनतिं सुधीः।
सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात्॥

इति गौतमीतन्त्रे पूजाप्रकरणे।

निपत्य=दण्डवद् भूमौ निपत्य,

तथा गारुडे--

प्रणम्य दण्डवद् भूमौ नमस्कारेण योऽर्चयेत्।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि॥

श्रीभागवते—( स्क० ११ अ० २७ श्लो० ४६-४७ )

शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्॥
इति शेषां मया दत्तां शिरसाधाय सादरम्॥ इति।

तथापि भिन्नप्रयोगमपि क्रियमाणा मुक्तिहेतुः "नम इत्येव यो ब्रूया" दित्यवधारणाश्रुतेः। किञ्च "अर्चनं वन्दनं दास्य"मित्यर्चनातिरेकेण वन्दनग्रहणं भिन्नप्रयोगतां गमयति। अन्यथा गन्धादिदानवत् पृथक् कीर्तनं न स्यात्।

शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम्।
नृणां संवतामन्तर्हृदि भास्यमलात्मनाम्॥

इति च भिन्नप्रयोगश्रवणाद्विप्रायपाठाच्च भिन्नप्रयोगत्वमवसी- यते। आग्नेयादिप्रधानप्रायपाठ इवोपांशुयाजप्राधान्यम्। यथाहुः, अ- ग्रयप्राये लिखितं दृष्ट्वा वदन्त्ययमग्रय इति। ततश्च राजसूयान्तर्गताया अवेष्टेरिव वन्दनस्यापि प्रयोगद्वैविध्यमिति सिद्धम्।

नमन्तु देवकीसुतं हृदा शरीरतो गिरा।
त्यजन्तु संसृतिं जना भजन्तु मोक्षसम्पदम्॥ १॥
त्रिधा निरूपिता नतिर्हरेर्जगत्त्रयेशितुः।
तदर्पणं निरूपणं भवेददोऽखिलं कृतम्॥२॥ इति वन्दननिर्णयः।

अथ दास्यनिर्णयः॥

तत्र दास्यं सर्वकर्म्मणां भगवत्यर्पणं क्रियाद्वैतापरपर्य्यायम्। यथोक्तं-श्रीभागवते।

यद् ब्रह्मणि परे साक्षात्सर्वकामसमर्पणम्।
मनोवाक्तनुभिः पार्थ! क्रियाद्वैतं तदुच्यते॥ इति।

[ स्क० ७ अ० १५ श्लो० ६४ ]

तस्य विधिरपि तत्रैव-

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वानुसृतस्वभावात्।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तत्॥ इति।

[ श्रीभा० स्कन्ध० ११ अ० २ श्लो० ३६ ]

तत्रैव गृहस्थधर्म्मेषु।

गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्॥ इति

[ श्री० भा० स्क० ७ अ० १४ श्लो० २ ]

भगवद्गीतायामुक्तं—

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्।
यत्तपस्यासि कौन्तेय तत् कुरुष्व मदर्पणम्॥ इति।

[ अ० ९ श्लोक० २७ ]

उक्तविधदास्यस्य भगवत्सन्तोषद्वारा परमपदप्राप्तिहेतुत्वं--
बृहन्नारदीये,

वेदोदितानि कर्म्माणि कुर्य्यादीश्वरतुष्टये।
यथाश्रमं त्यक्तकामः प्राप्नोति परमं पदम्॥ इति।

पद्यते ज्ञायत इति पदम्। असङ्कुचितवृत्तिः परमपदशब्दः, अनावृत पूर्णानन्दस्वरूपपरः, अत एव मुक्तिहेतुत्वं--
ब्रह्मवैवर्त्ते,

काम्यं विषयभोगार्थमिहामुत्र प्रयुज्यते।
मोक्षाय सुकृतं तद्धि ब्रह्मार्पणधिया कृतम्॥ इति।

कर्म्मकुशलानां भगवदर्पणबुध्या तदनुरूपतदाराधनं श्रेयोमार्गो नान्य इत्युक्तम्।

गारुड़े, नृसिंहपरिचर्य्यायाम्, विष्णुपुराणे च।

वर्णाश्रमाचारवता पुरुषेण परः पुमान्।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम्॥ इति।

श्रीभागवतेऽपि—

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विन्दन्ति यदर्पणं विना तस्मै सुभद्रश्रवसे नमो नमः ॥ इति ।

[ स्क० २ अ० ४ श्लो० १७ ]

एवमाराधनवतां तद्दासानां कृतार्थता—

श्रीभागवते—

यन्नामस्मृतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते(१) ॥

दास्यमाचरतां हि सन्तुष्टो भगवान् तदधीनो भवतीत्युक्तं तत्रैव ।

किञ्चित्रमच्युत ! तवैतदशेषबन्धो !
दासेष्वनन्यशरणेषु यदात्मसात्त्वम् ॥ इति ।

[ श्री० भा० स्क० ११ अ० २९ श्लो० ४ ]

एवञ्च "यमेवैष वृणुते स तेन लभ्य" इति श्रुतेर्दासानां भगवत्प्राप्तिः सुकरेत्युक्तं भवति । अत एव, "न कर्मणा न प्रजया धनेन" । "नास्त्यकृतः कृतेन" । "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिवाक्यैर्न विरोधः । दास्यबुध्याऽननुष्ठितकर्मविषयत्वात्तेषाम् । ज्ञानाभावे हि न मोक्षः । दास्यबुध्या च केवलमनुष्ठितकर्मभिः प्रसन्नो भगवान् काशीमरणन्यायेन ज्ञानं ददातीति नानुपपत्तिः । अत एव ।

गीतागारुड्योः-

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवाः ॥ इति ।

भगवद्गीतासु—

असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ।

इत्युक्त्वा—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।

इत्युक्तम् । अत्र ते अयुक्तः सर्वसंन्यासः कर्मणां मदर्पणं स एव योगस्तव युक्त इत्युक्तं श्रीधरस्वामिभिः । न चात्राध्यात्मविचारस्य श्रवणकीर्त्तनादेश्चोपसंहार इति वाच्यम् । कर्मणैवेत्यवधारणाश्रुतिविरोधात् । अतश्च यो भगवदर्पणबुध्या कर्म्मानुतिष्ठति न तदेकनिष्ठः स तदनुष्ठानाच्छुद्धसत्वः श्रवणसङ्कीर्त्तनादौ, अध्यात्मविचारे वा प्रवर्त्तत इति तादृशानुष्ठानस्यान्तःकरणशोधकत्वमुक्तं साम्प्रदायिकैरिति न विरोधः ।

(१) स्क ९ अ० ५ श्लो० १६ ।

ननु तथापि—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥
[ गी० अ० १८ श्लो० ६६ ]

इति कर्मत्यागाभिधानेन विरोध इति चेत्। नेदं सर्वथा कर्मत्यागाभिप्रायम्। यत्करोषीत्याद्यनेकवचनाविरोधात्। किन्तु कर्मत्यागाभिधानेन भगवदेकशरणता विधीयते।

तदेकशरणत्वं नाम सामस्त्येनैकैकश्येन वा नवविधभक्तिनिष्ठत्वं तदेकप्रवणताविधावर्थादितरानिष्ठतानिवृत्तिः सिद्ध्यति आतिथ्याया इडान्तताविधाविवानुयाजादिनिवृत्तिः। एवञ्च पुत्रकलत्रादिविषयनिष्ठताया इव विहितत्वात् केवलमवश्यमनुष्ठेयानि कर्माणीति कर्मनिष्ठतया निवृत्तिः सिद्ध्यति तस्या अपि नश्वरपितृलोकपर्य्यवसायित्वात्। सानूद्यते "सर्वधर्मान्परित्यज्य" इति। "कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः" इत्यनेनार्जुनकर्मनिष्ठताया भगवतावगतत्वात्। न तु दास्यरूपभक्त्यनुष्ठानेन नित्याधिकारविरोधः, काम्यज्योतिष्टोमाद्यनुष्ठान इव तन्त्रेणोभयसिद्धेः। तत्तत्कर्मकाले दैवाद् भक्त्यैकनिष्ठत्वेन भगवत्कथाश्रवणादौ व्यासक्तत्वे तु कर्मानुष्ठानात् प्रत्यवायः स्यादिति शङ्कां व्यावर्त्तयितुम्। "अहं त्वा सर्वपापेभ्य" इत्युक्तम्। तदुक्तं श्रीधरस्वामिभिः। भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्य्यं त्यक्त्वा मदेकशरणो भव, एवं वर्त्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं मा कार्षीः, यतः त्वां मदेकशरणं सर्वपापेभ्योऽहं मोचयिष्यामीति। अत्र विधिकैङ्कर्य्यशब्देन विधिविहितत्वेन कर्मनिष्ठतोच्यत इति। अतो भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपदास्यस्य भक्तिरूपत्वेन न तन्निष्ठत्वे विरोधः। किञ्च "तस्मात् युद्ध्यस्व भारत" इति युद्धरूपधर्मे प्रेरणात् "सर्वधर्मान् परित्यज्य" इति न सर्वधर्मत्यागाभिप्रायम्, मोक्षनिष्ठताप्रतिपादनात्तु पितृलोकपर्य्यवसायिकर्मनिष्ठता व्यावर्त्यते।

आचार्य्यैस्तु भगवदेकप्रवणतायाः पूर्वमेव सपरिकरप्रतिपादनेनोपसंहारात्तत्त्वज्ञानप्रतिपादनपरमेतदित्युक्तम्। "सर्वधर्मान् परित्यज्य" इति नैष्कर्म्यमभिधीयते "मामेकं शरणं व्रज" इति मदतिरिक्तं सर्वं तुच्छं जानीहीति तत्त्वज्ञानमभिधीयते। "अहं त्वा सर्वपापेभ्यः", इति सकलकर्मबन्धननिवृत्तिस्तत्त्वज्ञानादभिप्रेतेत्युक्तं तदा न कश्चिद्विरोधः। भगवदेकशरणताप्रतिपादनावसरे पूर्वकर्मत्यागानभिधानादिति।

श्रीभागवतेऽपि "कायेन वाचा" इत्यादिना तत्र तत्र भगवदर्पणबुद्ध्या कर्म्मानुष्ठानप्रतिपादनाद् "धर्म्मान् सन्त्यज्य यः सर्वान् मां भजेत स सत्तमः"। इत्यत्र विहिता इत्येवं केवलं क्रियमाणानाम्, अत एव नश्वरपितृलोकपर्य्यवसायिनां त्यागोऽभिप्रेतः। अत एव एतद्व्याख्यानावसरे ध्यानविक्षेपकत्वं त्यागहेतुत्वेनोक्तम्। दास्यरूपा तु भक्तिर्भगवदनुग्रहहेतुरिति न तस्या विक्षेपकत्वम्। सत्त्वशुद्धिपर्यवसायिकर्मत्यागो वाभिप्रेतः, सत्वशुद्धिं विना भक्तिदार्ढ्यायोगेन तस्मिन् सति तदनुपयोगात्। अत एव तदा स्वल्पः कर्म्माधिकार इत्युक्तं "तावत्कर्म्माणि कुर्वीते"त्येतद्व्याख्यानावसरे। दास्यं तु भक्तिरेवेति न तत् त्यागो युक्तः। विद्धैकादशीकृष्णैकादश्योरुपवासानुपवासौ, अनिवेद्य श्राद्धादयो (१)ये भक्तिविरुद्धा धर्म्मास्तत्त्यागो वेत्युक्तं श्रीधरस्वामिभिः। तत् सिद्धं दास्यरूपा भक्तिर्भगवदनुग्रहफलत्वादवश्यमनुष्ठेयेति।

यस्य हासावलोकेन रासाह्वयक्रीडतो दासवर्गोपपत्न्योऽभवन्।
यस्य भासाऽखिलम्भासतेऽदो जगत्तस्य दासा भवामो वयं सर्वदा॥
अकारि दास्यचिन्तनं बकारिपादपद्मयोः।
सुखप्रकारि जायतामदोऽविकारिणीश्वरे॥ इति दास्यनिर्णयः।

अथ सख्यनिर्णयः।

सख्यं नाम,

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥
[ गी० अ० ९ श्लो० २२ ]

यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनी।
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
विष्णुर्भक्तकुटुम्बीति वदन्ति विबुधाः सदा।
तदेव पालयिष्यामि सज्जनो नानृतं वदेत्॥

इत्यादिभगवद्वचनविश्वासादीत्युक्तं साम्प्रदायिकैः। लोके सख्युः सख्यन्तरवचासि भवति विश्वासः। आर्तौ सङ्कटप्राप्तौ च तन्निवेदनम्। सङ्कटनिवारणसमर्थश्चेत् तदेकशरणतया तदाश्रयणात् तत्र प्रीतिः।

(१) विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पते॥
इत्यादि वचनाद् भगवन्निवेदनपूर्वकश्राद्धादीनां भक्त्यविरुद्धत्वादनिवेद्येति।

तदिदमादिशब्दार्थः । अत एवंरूपेणावस्थानरूपं भगवत्सख्यं, "सख्यमात्मनिवेदनम्" इत्यनेन विधीयते । एवंरूपेणावस्थितस्य वाञ्छितासिद्धिरुक्तवाक्यैरेव निर्णीयत इत्यनन्तरं वक्ष्यामः ।

तथा—

(१)वनौकसस्तात ! नित्यं वनशैलनिवासिनः ।
तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः ॥

इत्येवं भगवद्वचसि विश्वस्तैर्नन्दादिभिस्तथैव कृते कुपितेन्द्रकृतमहावृष्टिसङ्कटप्राप्तौ ।

(२)कृष्ण ! कृष्ण ! महाभाग ! त्वन्नाथं गोकुलं विभो ।
त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल ! ॥

इति निवेदने कृते भगवत्कृतगोवर्द्धनोद्धारणेन निर्णीयते । एवं कुर्वतां नन्दादीनां च—

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥

[ श्री० भा० स्क० १० अ० १४ श्लो० ३२ ]

इति ब्रह्मकृतस्तुतितोऽपि विधिराश्रीयते ।

तथा—

अथाब्रवीद् वृत्रमिन्द्रो हनिष्यन् सखे विष्णो वितरं विक्रमस्वेति वृत्रोपद्रुतेन्द्रेण सङ्कटप्राप्तौ सखिशब्देन भगवत्सम्बोधनं सख्यस्य फलवत्त्वं गमयति । एवं प्रार्थितभगवता सामर्थ्ये दत्त इन्द्रो वृत्रं हतवान् इति गम्यते । एवं--

प्रीतिरूपसख्यस्य सर्वानर्थनिवर्तकत्वं श्रीभागवते,

एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ इति ।

अस्य तात्पर्यं साम्प्रदायिकैरुक्तं मयि=मय्येव । वासुदेवे=सर्वाश्रये । यावत् न प्रीतिः=सख्यं तावद्देहयोगेन न मुच्यते अर्थात्सख्येनैव सर्वानर्थनिवृत्तिरिति मया सख्यं कुर्यादेवेति भाव इति ।

तदेकशरणतदाश्रयणरूपसख्यस्य फलम्—

रामायणे,

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ इति ।

---

( १ ) श्री० भा० स्क० १० अ० २४ श्लो० २३—२४ ।

( २ ) श्री० भा० स्क० १० अ० २५ श्लो० १३ ।

भयम्=संसारः। द्वितीयाद्वै भयं भवतीति श्रुतेः। तदभावो मोक्षः।
श्रीभागवते।

किं दुरापादनं तेषां पुंसामुद्दामचेतसाम्।
यैराश्रितस्तीर्थपदश्चरणो व्यसनापहः।

तथा।

शारीरा मानसा दिव्या वैयासे ये न मानुषाः।
भौतिकाश्च कथं क्लेशाः बाधन्ते हरिसंश्रयम्॥

तथा—

(१)देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्।
सर्वात्मना यः शरणं शरण्यं गते मुकुन्दं परिहृत्य कर्तम्।

तथा—

(२)कः पण्डितस्त्वदपरं शरणं समीया-
द्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात्।
सर्वान् ददाति सुहृदो भजतोऽभिकामा-
नात्मानमप्युपचयापचयौ न यस्य॥ इति।

तथा—

तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश!।
पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात्॥ इति।

तदिदं सख्यं भक्त्यन्तरेण सह समुच्चीयते।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।

इति भगवद्वचसि विश्वासमवलम्ब्य दास्यध्यानादिकुर्वतां संसारतरणं सर्वसाध्यम्। तत्र सख्यस्य तद्व्यतिरेकेण फलानुपलम्भात्। "श्रद्धाना मत्परमा भक्तास्तेऽतीव मे प्रियाः" इति श्रद्धानत्वापरपर्यायसख्यस्य तस्मिन्नेवाध्याये तुल्यवन्निर्देशात्। ननु "ये तु सर्वाणि कर्माणि"इत्यत्र दास्यध्यानयोः श्रवणात् समुच्चयो युक्तः, न सख्येनाश्रवणादिति चेत् न। प्रकृतवाक्यैकवाक्यतापन्नप्रधानविधिवशात् प्रकृतानां समुच्चयावगमेऽपि वाक्यान्तरवशेनाश्वदाभ्यप्रवर्ग्यादीनामनारभ्याधीतानां समुच्चयवत् स्वातन्त्र्येण सख्याविधायकवाक्यवशात् समुच्चयोपपत्तेरिति।

---

(१) श्री भा० स्क० ११ अ० ५ श्लो० ४१।
(२) श्री० भा० स्क० १० अ० ४८ श्लो० २६।

चेतः कुरु हरिसख्यं कृतमपि सकलं निवेदयामुष्मिन्।
सम्प्रति मा भव मित्रं पुत्रकलत्रादिविषयाणाम् ॥ इति सख्यनिर्णयः ॥

अथात्मनिवेदनानिर्णयः ॥

आत्मा देहः, तस्य निवेदनं भगवति समर्पणम्। यद्वा आत्मनः आत्मीयस्य देहदारादेः। अत एवोक्तम्।

श्रीभागवते,

दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदनम्।

प्राणानिति देहोपलक्षणम् ॥

गारुडे च--

असन्त्यज्य च गार्हस्थ्यमसंक्लेश्य महत्तपः।
छिनत्ति वैष्णवीं मायां केशवार्पितमानसः ॥

मनोग्रहणं देहादेरुपलक्षणम्। दारादीनां समर्पणञ्च सेवकतया। अर्पणं च मां मदीयं च सकलं हरये सम्यगर्पये ॐ तत्सदिति मन्त्रेणेत्युक्तं क्रमदीपिकाद्यागमग्रन्थेषु। एवं चान्यस्मै दत्तस्य गवाश्वादेर्भरणपालनादिचिन्ता यथा न क्रियते तथा देहदारादेरपि। यथोक्तम्।

यदुवरचरणसरोजे सम्प्रति सर्वात्मनार्पितो देहः।
सोऽयं विलसतु पुष्टो भवतु क्लिष्टोऽथवा विषयैः ॥ इति।

समर्पणस्य फलं श्रीभागते उक्तम्।

तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूताय च कल्पते वै ॥

मर्त्यो यदा त्यक्तसमस्तकर्म्मा निवेदितात्मा विचिकीर्षितो मे।

[श्री० भा० स्क० ११ अ० २९ श्लो० ३४]

यत एवं त्यक्तसमस्तकर्मा सन् मे निवेदितात्मा भवति अत एवासौ मे मम विचिकीर्षितः=विशिष्ठ उत्कृष्टश्चिकीर्षितो यदा तदेत्यन्वयः। मया सहेत्यध्याहारः। निवेदितात्मनः--अत एव भरणपालनादिचिन्तामकुर्वतः सांसारिकमुत्कृष्टत्वमपि मत्तो भवतीति विचिकीर्षितपदेनोक्तम्। नन्वात्मनिवेदनं दास्यादि वा तावत् क्रियाविशेषः क्रियायाश्च क्षणिकत्वात् साक्षात्कालान्तरभाविफलहेतुत्वं न सम्भवतीति अपूर्वस्य द्वारत्वं "चोदना पुनरारम्भ" इत्यत्रोक्तम्। न चापूर्वस्य मोक्षहेतुत्वं युक्तं "नास्त्यकृतः कृतकेन"इत्यादिश्रुतिविरोधात्। देवतायाः प्राधान्यं फलदातृत्वं च नवमे निराकृतम्। तत् कथं भक्तेः प्राधान्यम्। उच्यते। तत्तद्विधिषु फलभावनाकरणत्वेनेष्टसाधनत्वेन वान्वयिनो यागादेरिव भक्तेरपि प्राधान्यं सङ्गच्छते। तत्र स्वरूपेण क्षणिकायाः

किंद्वारा फलकरणत्वमित्यपेक्षायां तत्र भगवदनुग्रहद्वारा ज्ञानप्राप्तिः श्रूयमाणा द्वारत्वेनाश्रीयते, अत्यन्ताश्रुतानेकापूर्वाणां द्वारताकल्पनातः श्रूयमाणानां द्वारत्वकल्पनाया उचितत्वात्। अपूर्वाणां हि उपस्थिति-द्वारत्वं चेत्युभयं कल्प्यम्। तत्तद्वाक्यसिद्धानां तु द्वारत्वमात्रकल्पने लाघवम्। अत एव रात्रिसत्रादौ विश्वजिन्न्यायेन न स्वर्गफलत्वं आर्थवादिकप्रतिष्ठादेरेव तु फलत्वं अनुपस्थितस्योपस्थितिं कृत्वा फलत्वकल्पनात उपस्थितस्य फलत्वमात्रकल्पने लाघवात्। अस्य न्यायस्य द्वारकल्पनायामपि तुल्यत्वात्। तदुक्तं महर्षिणा "फलमत उपपत्तेः" इति।

किञ्च—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इत्येवमादीनां सिद्धार्थानामपि वाक्यानां विध्यपेक्षितफलविशेषप्रतिपादकत्वेन प्रामाण्यमाश्रीयते न तु निरालम्बनत्वं दृष्टार्थाध्ययनविध्यधीतस्य सति सम्भवे तदयोगात्। एवं "भक्तिर्विरक्तिर्भगवत्प्रबोध" इत्यादीनामपि विध्यपेक्षितद्वारविशेषप्रतिपादकत्वे सति न निरालम्बनत्वं वक्तुं युक्तम्। "चत्वारो वर्णाः शृणुयुः" इति दृष्टार्थविध्युपात्तत्वेन तदयोगात। क्षणिकक्रियाया द्वारं विना कालान्तरभाविफलसाधनत्वेन विधानायोगाद् द्वारविशेषोऽपि फलविशेषवद्विध्यपेक्षितः। न चैवं वायव्यादिकर्मस्वपि तत्तदर्थकवाक्यैर्देवतानुग्रहावगमाद्देवतायाः प्राधान्यापत्तेरङ्गत्वं न स्यादिति वाच्यम्। पुरुषवदुपपत्तेः। अधिकारित्वेन प्रधानस्यापि सतः कर्तृत्वेन गुणत्वाश्रयणात् तद्वद्देवताया अपि क्रियानिर्वर्त्तकत्वेनाङ्गत्वोपपत्तेः। ताद्धितश्रुत्या शब्दतो गुणत्वेनैवावगतिः। अनुग्रहाश्रयतया प्राधान्यं त्वार्थिकं अतो न वैरूप्यं दोषाय। देवतायाः कर्मसमवायनियमश्च नाश्रीयते, अतो न कर्माणि विरोधः। न च येषु कर्मसु वायव्यादिवाक्यवत् अनुग्रहो न ते तत्र किं द्वारमिति वाच्यम्।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान् मयैव विहितान् हितान्॥

इत्यादिवाक्येषु सर्वकर्मसाधारण्येन तच्छ्रवणात्।

इत्यात्मसंनिवेदननिर्णयः॥

अथोक्तभक्तीनामवान्तरभेदनिर्णयः ॥

श्रवणादिनवविधभक्तिष्वैकैका त्रिविधा, तामसी राजसी सात्त्विकी चेति । तामसी त्रिविधा, हिंसार्था दम्भार्था मात्सर्यनिमित्ता च । राजसी त्रिविधा । विषयार्था, यशोऽर्था, ऐश्वर्यार्था च । सात्त्विकी त्रिधा उपक्षयार्था, परमेश्वरप्रीत्यर्था, सिद्ध्यर्था चेति । यदाह—

कपिलः ।

(१)अभिसन्धाय यद्धिंसां दम्भं मात्सर्यमेव च ।
संरम्भी भिन्नदृग् भावं मयि कुर्यात् स तामसः ।
विषयानभिसंधाय यश ऐश्वर्यमेव वा ।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥
कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ इति ।

अर्चादावित्यस्य मध्यश्लोकपठितस्य पूर्वोत्तरश्लोकयोरनुषङ्गः । संरम्भी=क्रोधी । भिन्नदृक्=भेददर्शी सन् हिंसामभिसन्धाय परो म्रियतामित्युद्दिश्येत्यर्थः । दम्भं परवञ्चनामभिसन्धाय मनसि कृत्वेति यावत् । मात्सर्यमभिसन्धाय मनस्युत्पन्नमत्सरेणेति यावत् । भावं श्रवणादिरूपां भक्तिम् । विशेष्यतया पुंप्रतीतिं जनयन्तोऽपि तामसादिशब्दा भक्तिभेदप्रतिपादनपराः । भक्तिभेदे देवहूत्या पृष्टे "भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते" इत्युपक्रम्यैतदाम्नानात् ।

अत एव "अर्चयेत्" इत्यर्चनग्रहणमितरभक्त्युपलक्षणार्थम् ,

सामान्यतो भक्तिभेदानामेव वक्तव्यत्वेन प्रक्रमात् ।

अत एवोक्तं श्रीधरस्वामिभिः ।

एवञ्च श्रवणकीर्त्तनादयो नवापि प्रत्येकं नव नव भेदा इति ।

श्रवणादीनां विहितत्वेन भगवत्सम्बन्धित्वेन च स्वरूपेण तामसत्वाभावेऽपि तत्करणकभावनाया वैरिमरणोद्देश्यत्वात्रिच्छेदनश्येनभावनावन्निषेधविषयत्वात् दम्भमत्सरयोश्च निषिद्धत्वेन तन्निमित्तानुष्ठेयत्वेन तस्य निषिद्धत्वान्निषेधातिक्रमस्य च तमःकार्यप्रमादरूपत्वात् नाशव्यापारमिश्रत्वेन तामसत्वम् । एतावांस्तु श्येनाद् हिंसादिप्रयुक्तज्योतिष्टोमादेश्च श्रवणादौ विशेषः, साङ्केत्यादिन्यायेन भगवत्सम्बन्धित्वमुष्मिन्ननुष्ठिते आनुषङ्गिकोऽघक्षयोऽपि भवतीति ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥

---

(१) भा. स्क. ३,अ. २९ श्लो. ८–१० ।

इति स्मृतेः। विषयानिति विषयशब्दो गोबलीवर्दन्यायेन यशऐश्वर्यव्यतिरिक्तविषयपरः। पृथग्भावो=भेददृक्। श्रवणादेराजसत्वमपि तद्भावनाया रजोगुणकार्य्यफलविशेषाभिसन्धिमिश्रत्वात्। आनुषङ्गिकाघक्षयहेतुत्वेनेतरकाम्यकर्म्मवैलक्षण्यं प्राग्वत्। कर्म्मनिर्हारम्=पापक्षयमन्तःकरणशुद्धिमिति यावत्। परस्मिन्=परमेश्वरे। अर्पणं तत्प्रीतिमुद्दिश्येति यावत्। यजेदित्यपि पूर्ववदितरभक्त्युपलक्षणार्थम्। यष्टव्यमिति विधिसिद्धिमुद्दिश्य, न वयं फलविशेषसिद्धिं विद्मः पूर्वैः कृतत्वात्परं कुर्मः इति बुद्ध्यानुष्ठानमिति यावत्। अस्य चानुष्ठानस्य पापक्षयोद्देश्यकत्वाभावेऽपि तत्फलकत्वं पूर्ववत्। अत्र तु फलाभिसन्धेरपि सत्त्वकार्य्यतत्त्वज्ञानोपयोगित्वेन सत्त्वकार्य्यत्वं, तन्मिश्रिततयाऽपि भगवद्भक्तेः सात्त्विकत्वमित्याशयेन तदुक्तिः। ननु नवविधभक्तीनां प्रत्येकं नव नव भेदा इत्याचार्य्यैरुक्तम्। तन्न सङ्गच्छते। भगवति कर्म्मार्पणरूपदास्यस्य परस्मिन् वा तदर्पणमित्येवं सात्त्विकैकरूपत्वप्रतीतेरिति चेन्न। गुणकार्य्यत्वव्यपदेशस्तावत् फलाभिसन्धिनिमित्तः। तद्विशेषकार्य्यत्वोक्तिरपि फलविशेषोद्देशकृता। हिंसादिफलविशेषात्। तत्र श्रवणादिरूपा दास्यातिरिक्ता भक्तिर्यथा हिंसादिफलोद्देशेनानुष्ठीयमाना तामसादिव्यपदेशं लभते। एवं हिंसाद्यर्था परमेश्वरप्रीतिमुद्दिश्य कर्म्मानुष्ठानरूपं दास्यमपि तामसत्वादिभिर्व्यपदिश्यते। नन्वेवमपि दास्यस्याष्टावेव भेदाः स्युः। सात्त्विकीद्वितीयभेदासम्भवात्। न हि हिंसादिवत् परमेश्वरप्रीतिं प्रति परमेश्वरप्रीतेरुद्देश्यत्वं सम्भवति। उच्यते। द्विविधं तावत्परमेश्वरप्रीतेरुद्देश्यत्वम्। फलान्तराद्यर्थतया स्वरूपेण च, तत्र द्वितीयपक्षावलम्बने "परस्मिन् वा तदर्पणम्" इत्युक्तमिति सिद्धा दास्यस्यापि नव भेदाः। न च परमेश्वरप्रीतेः सुखदुःखाभावान्यतरत्वाभावेनापुरुषार्थत्वात् स्वरूपेणानुद्देश्यत्वम्। "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने"। इति पुरुषार्थपर्य्यवसायितयावगताया अस्या आध्यानइवाग्नीनां स्वरूपेणोद्देश्यत्वसम्भवात्। यदा तु फलाभिसन्धिर्नैकोऽपि हृदि समुल्लसति परमेश्वरेऽनुरागादेव तु श्रवणादौ प्रवृत्तिः, तदानुष्ठीयमानश्रवणादीनि निर्गुणभक्तितया व्यवह्रियन्ते। यदाह—

कपिलः—

(१)मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥

(१) श्री. भा. स्क. ३ अ. २९ श्लो. ११-१२।

• लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ इति।

मद्गुणा=अनावृतपूर्णानन्दरूपत्वादयः। मात्रपदव्यावर्त्यमाह। अहैतुकी=फलाभिसन्धिरहिता। पूर्वभक्तिष्विव न निर्गुणभक्त्या भगवन्मूर्तिस्फूर्त्यतिरिक्तसमीहितदर्शनमस्तीत्याशयः। सर्वगुहाशये=सर्वान्तर्यामिणीति यावत्। अविच्छिन्ना=सन्तता। विषयतिरस्कारेण मद्गुणमात्रश्रवणोत्थकेवलभगवदनुरागान्मनसो गतिर्भगवद्विषयश्रवणाद्येकनिष्ठतया श्रवणाद्यनुष्ठानमिति या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमिति वाक्यार्थः। गुणकार्यफलाभिसन्धानाभावान्निर्गुणत्वमित्याशयः। अत एवाग्रे कपिल उदाजहार।

(१)सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥ इति।

अनेन कैमुत्यन्यायेन सकलफलाभिसन्ध्यभावो द्योतितः। अत एवोक्तं—

तथापि तत्परा राजन्न हि वाञ्छन्ति किञ्चन। इति।

फलाभिसन्ध्यभावेऽपि श्रवणाद्यनुतिष्ठतां यथा मोक्षसिद्धिस्तथोपपादितमधस्तादिति नेह तन्यते। तत्सिद्धमेतत्फलाभिसन्धिना क्रियमाणा सगुणा भगवदनुरागेणानुष्ठीयमाना तु निर्गुणेति। अत एवोत्तमभक्तस्याप्राकृताविकारिनिरूपणं सङ्गच्छते। कथम्?

(२)न कामकर्म्मबीजानां यस्य चेतसि सम्भवः।
वासुदेवैकनिलयः स वै भागवतोत्तमः॥
(३)त्रिभुवनविभवहेतवेऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दात्
क्षणनिमिषार्धमपि स वैष्णवाग्र्यः॥ इति।

अस्यार्थश्च प्राग् व्याख्यातः, भगवदपेक्षया सर्वस्य तुच्छत्वं स्मरन् यो न चलतीत्यर्थ इति चोक्तं श्रीधरस्वामिभिः। न चैवंविधस्य फलाभि-

(१) श्री. भा. स्क. ३ अ. २९ श्लो. १३।
(२) श्री. भा. स्क. ११ अ. २ श्लो. ५०।
(३) श्री. भा. स्क. ११ अ. २ श्लो. ५३।

साधना भगवद्भक्त्यनुष्ठानं युज्यते। तस्मादस्य निर्गुणभक्तावेवाधिकारः।

(१)अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥ इति ।

अस्य तु सगुणभक्तिषु तिसृष्वपि अधिकारः। तत्र सात्त्विकभक्तिमभ्यस्यतोऽमुष्य कालेनोत्तमावस्थाप्राप्तिर्भवतीत्याशयेन प्राकृतोक्तिः। तदुक्तं श्रीधरस्वामिभिः।

प्राकृतः अधुनैव प्रारब्धभक्तिर्भवतीत्याशयेन शनैः शनैरुत्तमो भविष्यतीत्यर्थ इति।

(२)ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥ इति ।

अत्र यथाक्रमं ईश्वरादीनां प्रेमादिभिरन्वयः। अस्य तु तामस इत्यादिवत्सत्यपि पुंविशेष्यत्वनिर्देशे भक्तिभेदप्रतिपादकत्वेन नाधिकारिप्रतिपादकत्वमिति वाच्यम्। "अथ भागवतं ब्रूत" इत्यधिकारिनिरूपणस्यैव प्रक्रमात्। तामसादिवाक्येषु "भक्तियोगो बहुविध" इत्युपक्रमवदत्र भक्तिभेदप्रतिपादनोपक्रमाभावात्। तदेवमधिकारिभेदाम्नानात् तामसादिनिर्देशभेदाच्च भक्तेरनेकप्रकारत्वे सिद्धे यद्भक्तेर्ज्ञानद्वारा मुक्तिहेतुत्वेन वेदान्तविचारेण सह विकल्पाभिधानं तत्सात्त्विकभक्तिनिर्गुणभक्त्यभिप्रायम्। राजसतामसभक्त्योः फलान्तरार्थत्वेन मुक्त्यनुपयोगात्। न च सात्त्विकनिर्गुणभक्त्योर्मुक्त्यर्थतया विकल्पप्रसङ्गः, अनुष्ठितसात्त्विकभक्तेः पुंसो भगवदनुरागविषयविरागसमुत्पत्तिसमनन्तरमेव निर्गुणभक्त्यनुष्ठानसम्भवात्। तथाहि।

(३)तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ इति ।

भगवता च प्रीतिपूर्वकं सततभक्त्यनुष्ठानं मुक्त्युपयोगितया निर्दिष्टम्, एवंविधं च भक्त्यनुष्ठानं निर्गुणमिति कपिलेनोक्तमुक्तश्लोके। भगवत्प्रीतिश्च।

(४)इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः।

(१) श्री. भा. स्क. ११ अ. २ श्लो. ४७।
(२) श्री. भा. स्क. ११ अ. २ श्लो. ४६।
(३) श्री. गी. अ. १० श्लो. १०।
(४) श्री. भा. स्क. ११ अ. २ श्लो. ४३।

भवन्ति वै भागवतस्य—

इति सात्त्विकभक्तिजन्यतयाऽवगतेति सात्त्विकभक्त्युत्तरकालमेव निर्गुणभक्त्यनुष्ठानसम्भवान्नानयोर्विकल्पः । वह्न्याधानोत्तरकालानुष्ठेयाः पवमानेष्टयः सत्यप्यैकार्थ्येऽग्न्याधेये न विकल्प्यन्ते । न च "भक्तिर्विरक्तिर्भगवत्प्रबोध" इति फलभक्त्यनन्तरं भगवत्साक्षात्कारसिद्धौ निर्गुणभक्त्यनुष्ठानं व्यर्थमिति शङ्क्यम् । यथा "अश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम्" । इति तरतमभावेन प्रीत्युत्पादावगमात् । निरतिशयप्रीतेः प्राङ्निर्गुणभक्त्यनुष्ठानसम्भवात्, निरतिशयप्रीतिसमनन्तरं च भगवत्साक्षात्कारोदयात्, तत् सिद्धमेतत्सात्त्विकनिर्गुणभक्त्योर्मुक्त्युपयोगितेति । नन्वयुक्तमेतत् ।

> कामाद् द्वेषाद्भयात् स्नेहात् यथा भक्त्येश्वरे मनः ।
> आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ।
> गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
> सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥

इति भक्त्येकत्वस्य विवक्षितत्वादिति चेत् । न । स्वामिसप्तदशाः कर्म्मसामान्यात् । [ पू० मी० अ० ३ पा० ७ अधि० १८ ] इति सत्यपि सप्तदशकर्त्तव्यत्वे मुख्यकर्त्रभिप्रायेण यजेतेत्येकवचनोपपादनवत्सत्यपि भक्तिद्वयसमुच्चये साक्षात्साधननिर्गुणभक्त्यभिप्रायेणैकवचनोपपत्तेः । सात्त्विकभक्तेर्भगवद्विषयानुरागजनकत्वेन व्यवधानात् । अत्र च कामादयो यद्यपि भक्तिवन्न विहिता प्रत्युत "यस्तु नारायणं द्वेष्टि"इत्यादिना भगवति द्वेषो निषिद्धः, कामोऽपि परपुरुषविषयो निषिद्धः, तथापि भगवद्विषया एते सन्ततमनुवर्त्तमाना मुक्त्युपयोगि सन्ततं भगवन्मूर्त्तेः स्फूर्त्यपरपर्य्यायध्यानं जनयन्तीति भक्तिसमकक्षतयोपदिश्यन्ते । उक्तनिषेधातिक्रमाज्जातमपि दुरितं भगवत्स्फूर्त्यैव विनश्यतीत्याशयेन तदघं हित्वेत्युक्तं श्रीधरस्वामिभिः । राजसतामसभक्त्योस्तु सत्यपि भगवद्विषयत्वे सकृत्प्रयोगादेव हिंसादिफलसिद्धेरनुवृत्त्या भगवत्स्फूर्तिहेतुत्वाभावान्न मुक्त्युपयोगितेत्यलमतिविस्तरेण ।

> प्रह्लादोक्तनवप्रकारभजनप्रत्येकभेदान् बहून्
> मात्रे श्रीकपिलोऽब्रवीदखिलनॄनुद्धर्तुकामो भवात् ।
> तेषां निर्णय एष वारिधिसुतानाथे कृपावारिधौ
> तोषं सम्प्रति सन्तनोतु सजलाम्भोरुप्रभायुक्तनौ ॥ १ ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरण-
कमलश्रीमन्महाराजप्रतापरुद्रतनुजश्रीमन्महाराजमधुकरसाहसूनु-
चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीम-
न्महाराजाधिराजश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डिता
त्मजपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधु-
रीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनि-
बन्धे भक्तिप्रकाशे नवविधभक्तीनामवा-
न्तरभेदनिर्णयः ।

अथ भजनीयनिर्णयः ।

नवविधभक्त्येश्वरो भजनीय इत्युक्तं तत्र कोऽसौ–ईश्वरः। उच्यते। "यः सर्वज्ञः स सर्वविद्" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै"। "सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्ति"। एको दधार भुवनानि विश्वा" "अनश्नन्नन्योऽभिचाकशीति" इत्यादिवाक्येषु पुरुषसूक्ते विष्णुसूक्ते रुद्रसूक्तेष्वन्तर्यामिब्राह्मणादौ अष्टादशपुराणादिषु यो निरूप्यते यश्च शैवपुराणेषु शिवशब्देन व्यह्रियते वैष्णवेषु विष्णुशब्देन। तथा हि। श्रीसदाशिवस्य तावत् पशूनां पतये वृक्षाणां पतये मरुतां पतय इति विश्वाधिको रुद्र इति रुद्राध्याये सर्वाधिकत्वमुक्तम्। तथा श्वेताश्वतरोपनिषदि "एक एव रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशनीभिः" इति। तथा तत्रैव "तमीश्वराणां परमं महेश्वरं तं देवानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्"। न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति। "विश्वस्मादिन्द्र इति। विश्वस्मादिन्द्र उत्तर इत्येवमादीनां तु कर्माङ्गस्मारकाणां (करणाच) स्वार्थे तात्पर्याभावाद्देवताधिकरणन्यायेनार्थसिद्धिर्वाच्या। न च सा युज्यते, अनन्यपरोक्तवेदान्तविरोधात् इन्द्रस्य कर्मजन्यत्वश्रुतेश्च। एवञ्च कृतकत्वलिङ्गकानित्यत्वानुगृहीतया "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति जन्यत्वश्रुतेश्च। एवञ्च कृतकत्वलिङ्गकानित्यत्वानुमानानुगृहीतया "तद्यथेह कर्म्माजित" इति श्रुत्या विरोधाद् "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति श्रुतिर्यथा यावत्प्रलयं सुकृतास्तित्वप्रतिपादनपराऽऽश्रीयते तथो-

कश्रुतिविरोधात् "विश्वस्मा" इत्यादिश्रुतिः सङ्कुचितैश्वर्यं प्रतिपादयति। न तु निरङ्कुशम्।

ब्रह्मादयोऽपि लोकानां सर्गस्थित्यन्तहेतवः।
निग्रहानुग्रहं प्राप्ताः शिवस्य वशवर्त्तिनः॥
शिवः पुनर्न कस्यापि निग्रहानुग्रहास्पदम्।

तथा—

ईशानः सर्वविद्यानां स एवादिगुरुर्बुधाः।

इति पुराणवाक्यैरपि सदाशिवस्य सर्वेश्वरत्वं निर्णीयते।

लिङ्गपुराणेऽपि शिववाक्यम्—

त्रिधा भिन्नोऽस्म्यहं विष्णो! ब्रह्मविष्णुभवाख्यया।
सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः॥ इति।

कौर्मे—

ईश्वरगीतास्वीश्वरः।

अहं वै सर्वसंसारान्मोचको योगिनामिह।
संसारहेतुरेवाहं सर्वसंसारवर्जितः॥
अहमेव हि संसर्त्ता स्रष्टाहं परिपालकः।
मायावी मामिका शक्तिर्माया लोकविमोहिनी॥ इति।

जगज्जन्मादिकारणत्वरूपं ब्रह्मलक्षणं श्रीशङ्करस्योक्तम्। शतशः शिवस्य परमेश्वरत्वप्रतिपादकानि वाक्यान्युपनिषत्सु तदुपबृंहणपुराणेषु च दृश्यन्ते। न चैषां मोहशास्त्रत्वं युक्तमाश्रयितुम्। अध्ययनविध्युपात्तापौरुषेयोपनिषत्सु तदेकार्थत्वेन तन्मूलेषु "श्रावयेच्चतुरो वर्णान्" इति विध्युपात्तेषु शिष्टजनपरिगृहीतेषु पुराणेषु च तदयोगात्।

एषमोऽहं सृजाम्याशु यो जनान्मोहयिष्यति।
त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय॥
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु॥

इत्यादीनि वाक्यानि नोपनिषद्विषयाणि। अपौरुषेयत्वेन तासां करणायोगात्। तदेकार्थानां च पुराणानां तन्मूलत्वेन तथ्यादिरूपत्वायोगात् न तद्विषयाणि, किं तर्ह्यसज्जनपरिगृहीतकापालिकपाशुपताद्यसच्छास्त्रविषयाणीति। न च तत्र तत्र शिवादिशब्दैः श्रीनारायण एवोच्यते विष्णुसहस्रनामस्तोत्रान्तर्गतानां तेषां तत्प्रतिपादकत्वदर्शनादिति वाच्यम्। उपक्रमोक्तं "अव्यक्तात्पुरुषः परः" इत्यत्र परत्वेन यः श्रीनारायणः प्रतिपादितः, अस्याञ्चोपनिषदि तत्त्वं नारायणः पर

इत्युक्तः। तमेव तस्य प्रकृतिलीनस्य यः परः स महेश्वर इति परत्वे-नानूद्य महेश्वराभेदः प्रतिपाद्यते शिवमच्युतमिति शिवाभेदेन नारायणोपासनां विधातुमिति युक्तम्। यथा "विश्वं नारायणम्" इति सकलविश्वाभेदेन नारायणोपासनं विधातुं विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवतीत्युक्तम्। नह्यत्र विश्वशब्देन प्रत्यक्षवस्तुमात्रनिर्देशः। इदमित्यविशेषोपादानात्। यच्च किञ्चिज्जगत्सर्वमिति वाक्यशेषाच्च। यो वै वा ब लोके एतेषां पुरुषाणां कर्त्ता यस्य वै तत्कर्मेत्यत्र कर्मशब्दवत्। सत्यपि श्रीसदाशिवस्यापि शास्त्रान्तरैस्तुरीयत्वप्रतिपादनेऽत्र नारायणस्यैव पुनः पुनरभ्यासात् तस्यैव तुरीयत्वेन प्रतिपादनमाश्रित्योपासनं विधीयत इति युक्तम्। एवं यत् किञ्चिज्जगदित्यादिना सर्वात्मत्वेन प्रतिपादयिष्यमाण एव, अणोरणीयान्महतो महीयानात्मेति सर्वात्मत्वेनोक्तस्य तमिति सर्वनामनिर्देशपूर्वकमीशाभेदः प्रतिपाद्यते। सामानाधिकरण्यात् अभेदोपासनं विधातुम्। ईशामित्यस्य सत्यपि द्वितीयान्तत्वेऽव्यवहितपश्यतिनान्वयेन व्यवहितोपासनयाऽनन्वयात्। पश्यतेश्च ज्ञानमर्थो नोपासनम्। अतोऽयं मन्त्रो विधास्यमानोपासनायाः सद्वारकफलनिर्देशः। एवं "यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः" इतिमन्त्रे रुद्रशब्दो रुद्रवैदिकशब्दस्तत्प्रतिपाद्य इत्येवं तावत् पूर्वाचार्यैर्व्याख्यात। रुद्रार्थग्रहणेऽपि प्रथमान्तत्वेन न कल्पयिष्यमाणभावनयान्वेति कारकाणां क्रियान्वयात् "स नो देवः शुभया स्मृत्या संयुनक्तु इति संनिहितेनान्वयाच्च। महर्षिशब्दस्य च पुराणेषु "धर्मस्य दक्षदुहितुर्यजनिष्ट मूर्त्यां नारायणो नर ऋषिप्रवरः प्रशान्तः" इत्येवं श्रीनारायण एव प्रसिद्धः सामानाधिकरण्येनाभेद एव प्रतिपाद्यते, इत्यपि वक्तुं शक्यं पूर्ववत्, न च पुनः पुनरभेदाभिधानवैयर्थ्यम्। तत्त्वमसीति नव कृत्वःपाठवद्भेदपाखण्डनिरासकत्वात्। एवं चोपक्रमोपसंहारलिङ्गैरुदाहृतवाक्यानामुमापतिप्रतिपादकत्वदर्शनात्। न हि तत्र रमापतिप्रतिपादने किञ्चिल्लिङ्गमस्ति। स्तोत्रान्तर्गतानामेव तादृशशब्दानां तत्प्रतिपादकत्वं न सर्वत्र। अत एव विश्वादिशब्दानां स्तोत्रान्तर्गतानां तत्प्रतिपादकत्वेऽपि विष्ण्वादिशब्दवत्पापक्षयोद्देशेन सर्वदा न तत्प्रयोगः शिष्टानां दृश्यते। तत् सिद्धं श्रीसदाशिवः परमेश्वर इति तत्र श्रूयत इति। तथा श्रीनारायणस्यापि परमेश्वरत्वं तत्र तत्रोपनिषत्सु मन्त्रार्थवादेषु पुराणेषु चोमापतेरिव श्रूयते-

तथाहि।

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्।
विश्वं नारायणं देवमक्षरं परमं प्रभुम्॥
विश्वतः (१)परमं नित्यं विश्वं नारायणं हरिम्।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति॥
पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्।
नारायणं महाज्ञेयं विश्वात्मानं परायणम्॥
नारायणपरो ज्योतिरात्मा नारायणः परः॥
नारायणपरं ब्रह्म तत्त्वं नारायणः परः।
नारायणपरो ध्याता ध्यानं नारायणः परः॥
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥
अनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवम्।
पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्॥
अधोनिष्ठ्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति।
हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्॥
सन्ततं शिराभिस्तु लम्बत्याकोशसन्निभम्।
तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्॥
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः।
सोऽग्रभुग्विभजन् तिष्ठन्नाहारमजरः कविः॥
तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य संतताः।
सन्तापयति स्वं देहमापादतलमस्तकम्।
तस्य मध्ये वह्निशिखाणीयोर्ध्वा व्यवस्थिता॥
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।
नीवारशूकवत्तन्वी पीताभा स्यात्तनूपमा॥
तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्॥ इति।

अत्र सहस्रशीर्षं देवमित्यादीनामनन्तमव्ययं कविं समुद्रेऽन्तं विश्वशम्भुवमित्यन्तानां द्वितीयान्तपदानामन्तर्यामिपरमात्मविशेषणता बृहदारण्यके श्रीमद्भाष्यकारादिभिरुक्ता। य ईश ईश्वरः नारायणाख्य इति भाष्यम्।

एतमेव समुद्दिश्य मन्त्रो नारायणात्मकः।
वेदविद्भिर्महाप्राज्ञैः पुरुषैर्विनियुज्यते॥

(१) परमान्नित्यमिति मुद्रितोपनिषदि पाठः।

इति वार्तिकम् । अत्रानन्दगिरीयम् सहस्रशीर्षं देवं विश्वशम्भुव-मित्यादिमन्त्रो वेदार्थविद्भिरन्तर्यामिणमुद्दिश्य विनियुक्तोऽतः स वैदिक इत्यर्थ इति । अस्मिश्च प्रकरणे "अणोरणीयान्महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्" इति मन्त्र गुहायां निहित=इत्यन्तर्यामिनिर्देशः, ईशमिति परमात्मोच्यते । एवञ्च सहस्रशीर्षत्वादिगुणविशिष्टोऽन्तर्यामी ज्ञेयत्वेनैषु प्रतिपाद्यते इत्युक्तं भवति । ज्ञानस्य च ध्यानमन्तरेणासम्भवाद्ध्येयवस्तुध्यानम्, "दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् तत्रापि दहरं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इति मन्त्रेणोक्तम् । दहर गगनमिति शब्दो (१)दहराधिकरणन्यायेन "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुत्युक्तमायाशबलेश्वरं प्रतिपादयतः । अतएवानन्तरश्रुतिः ।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ इति ।

स्वरः=प्रणवः । एवं सति मायाशबलमेव चैतन्यं सत्त्वोपाधिना रमापतिशब्दाभिधेयं ज्ञेयत्वेन ध्येयत्वेन चास्यामुपनिषदि (२)निर्दिश्यते । अत एव विद्यारण्यैः सहस्रशीर्षमिति पूर्वार्द्धे उक्तावराट्रूपदेहावस्थितमहेश्वरस्य निजस्वरूपम्, उत्तरार्द्धेन विश्वं नारायणमित्यनेनोच्यत इत्युक्त्वान्ते तस्याः शाखाया मध्ये, इत्यत्र सहस्रशीर्षमित्यादिवाक्यप्रतिपाद्यं तत्त्वं "पद्मकोशप्रतीकाश"मित्यादिप्रकारेणोपासीतेति तात्पर्य्यार्थ इत्युक्तम् । नचाभिधानकोशलोकप्रसिद्धिभ्यां महेश्वरत्वस्य शिवासाधारणत्वादुमापतेरेवात्रोपासनं विधीयते न रमापतेरिति वाच्यम् । शिवासाधारणत्वासिद्धेः । आनुशासनिके हि गिरिजापतिरीरितवान्मुनीन् प्रति । "परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः" । इति

किञ्च । महेश्वरशब्दस्य प्रोक्षणीशब्दवद्योगेनैव प्रवृत्त्युपपत्तौ रूढिकल्पने प्रमाणाभावः । अभिधानकोशलोकप्रसिद्ध्योः पङ्कजशब्दवत्प्रयोगबाहुल्यादप्युपपत्तेः । यौगिकस्यापि पङ्कजशब्दस्य प्रयोगबाहुल्यात् पद्मवाचित्वप्रसिद्धिरित्याहुः विवरणाचार्य्याः । पद्मत्वस्येवोमापतित्वस्य लक्षणयोपस्थित्युपपत्तौ रूढिकल्पने गौरवात्, अनन्यलभ्यः शब्दार्थ इति न्यायात् । अत एव गीताभाष्ये वैष्णव्यां मायायां प्रमाणत्वेन "मायां

(१) उ० मी० अ० १ पा० ३ अधि० ५ सू० १४
(२) नारायणोपनिषदीत्यर्थः

तु प्रकृतिं विद्यात्" इति श्रुतिरुदाहृता। महेश्वरशब्दस्योमापतौ रूढत्वे रौद्र्यामेव मायायामस्य वाक्यस्य प्रामाण्यम् न तु वैष्णव्यामिति नेदमुदाह्रियेत। किञ्च अस्यां श्रुतौ विद्यादित्यस्यानुषङ्गान्मायोपहितस्य महेश्वरशब्दव्यवहार्य्यत्वं ज्ञेयत्वेन प्रतिपाद्यते। मायोपहितत्वञ्च हरिहरयोरविशिष्टं श्वेताश्वतरोपनिषदि "य एको जालवानीश" इत्यत्र मायिवाचकजालवच्छब्देनोमापतेरन्तर्यामित्वस्य प्रतिपादनात्। नृसिंहतापनीये च "माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति" इति मायायाः वैष्णवीत्वोक्तेः। "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इति गीतोक्तेश्च। "अहो विचित्रा महती शिवस्य विष्णोः परा मोहकर्त्री तु माया" इति ब्रह्मवैवर्त्ते उभयसम्बन्धित्वव्यपदेशाच्च। न च रमोमारमणयोर्द्वे माये स्तः। एकां गां दक्षिणां दद्यादितिवत् "अजामेकाम्" इत्यत्राजानुवादेनैकत्वविधानात्। तस्मान्महेश्वरशब्दप्रवृत्तिनिमित्तस्य मायित्वस्योभयोरविशेषात्सिद्धमुभयोर्महेश्वरत्वम्। एवञ्च "महेश्वरस्त्र्यम्बक एव नापर" इति लोकप्रसिद्ध्यादिवशात् महेश्वरशब्दस्य लोके नीलकण्ठे रूढत्वेऽपि त्रिवृदादिशब्दवच्छ्रुतौ परमात्ममात्रपरत्वम्। यदि चात्र महेश्वरशब्दबलात् त्रिलोचनोपासनाविधिराश्रियेत तदा तस्य लोकप्रसिद्धित एव शिवात्मत्वसिद्धेः "स शिवः" इति व्यर्थं स्यात्। कैवल्योपनिषदि तु उमासहायपरमेश्वरध्यानफलभूतब्रह्माविभिसमस्तसाक्षि तमसः परस्तादिति निर्दिश्य पठितम्। "स ब्रह्मा स शिवः" इत्यादि। तत्र तमसः परं सर्वसाक्षिचिन्मात्रं तच्छब्देनोद्दिश्य सर्वात्मत्वप्रतिपादनं युक्तम्। "तमसः परस्तात्" इत्येतद्धि पूर्वाचार्यैर्व्याख्यातम्, आवरणविक्षेपशक्तिरूपाया अविद्याया परस्तात् अविद्याशून्यमित्यर्थ इति। युक्तञ्चैतत्। ध्यानस्य परममुक्तिसाधनत्वे महाफलत्वात्। यदि च प्राणशरीर इतिवद् भूतयोनिपदं बहुव्रीह्याश्रयणेन यौगिकं स्यात् तर्हि सन्निहितमुमापतिमाश्रयेत्, नचैवं, षष्ठीतत्पुरुषत्वात्। दृष्टञ्च "यत्तदद्रेश्यमग्राह्यम्" इत्युपक्रम्य पठितस्य भूतयोनिपदस्य निर्विशेषब्रह्मपरत्वम् "अदृश्यत्वादिगुणको धर्म्मोक्तेः" इति न्यायात(१)। दहरविद्यात्वेनार्चिरादिमार्गोपसंहारवत् निर्विशेषब्रह्मप्राप्तेरवाक् तादृशविग्रहवद्ब्रह्मप्राप्त्युपसंहाराच्च ध्येयप्राप्यभेदकृतः कश्चिद्विरोधः। न च "स ब्रह्मा स शिवः" इत्यादिश्रुतिसाम्यात् कैवल्योपनिषद्वदियमप्युपनिषदुमापत्युपासनं विधत्ते इति शङ्क्यम्। सत्यपि किञ्चित्साम्ये "सहस्र-

(१) ब्र० मी० अ० १ पा० २ अधि० ६ सू० २१

शीर्षम् "उमासहायम्" इत्युपक्रमभेदादभ्युदितेष्टिन्यायेन विद्याभेदस्यैव युक्तत्वात्। उमापत्युपासनविधिपरत्वे सहस्रशीर्षमित्याद्यनेकद्वितीयान्तशब्दवैयर्थ्याच्च। अथोपासनक्रियान्वयाभावेऽपि "तद्विश्वमुपजीवति" इति विश्वकर्तृकोपजीवनाक्रियान्वयान्न वैयर्थ्यमिति चेत्। न। उपास्यसमर्पकत्वेन विधित्वे सम्भवति उपजीवतिक्रियान्वयाश्रयणेनार्थवादत्वाश्रयणस्यान्याय्यत्वात्। किञ्च परमत्वादेरर्थस्य पुनरुक्तिर्व्यर्थत्वान्न दोषायेत्युक्तं पूर्वाचार्यैः। तद्विश्वमुपजीवतीति क्रियासम्बन्धे तु पुनरुक्तिर्व्यर्था स्यात्। किञ्च पुरुषस्तद्विश्वमुपजीवतीतिकर्त्रा पुरुषेणाव्यवहितेन विश्वेन कर्म्मणोपजीवतिक्रियासम्बन्धेन व्यवहितकर्म्मसम्बन्धो न्याय्यः, अत एव पूर्वाचार्य्यैर्यदिदं विश्वमिदानीमज्ञानदशायां दृश्यते, तत्सर्वं वस्तुतः परमात्मैव, स च परमात्मा विश्वमुपजीवति, स्वस्य व्यवहारार्थमुपजीवतीत्युक्तम्। युक्तं चैतत्। विश्वं नारायणमिति सामानाधिकरण्येन जडरूपताप्रसक्तौ तन्निराकरणस्य न्याय्यत्वात्। सर्वद्वितीयान्तानामुपजीवतिक्रियासम्बन्धे प्रथमचरममन्त्रपरित्यागेन मध्ये, उपजीवतिक्रियापाठस्य निस्तात्पर्य्यत्वात्। तस्माद् द्वितीयान्तानामुपास्यदेवतासमर्पकत्वमेव युक्तम्। न चैवमपि द्वितीयान्तपदमध्ये प्रथमान्तपदयुक्तयोर्नारायणपरं ब्रह्मेत्यादिमन्त्रयोः पाठो व्यर्थ इति वाच्यम्। उपासनाया विषययाथार्थ्यनियमाभावेन विषयासिद्धिशङ्कायां तत्सिद्ध्यै प्रथमान्तपाठात्। मध्योक्तिस्त्वर्थवादत्वभ्रमनिवृत्त्यर्था, अन्ते हि पाठेऽर्थवादत्वबुद्धिः स्यात, अज्ञातोपास्यसमर्पणावसरपाठितयोस्तु तत्साहचर्य्यात् प्रयाजान्प्रत्यभिक्रमणस्याङ्गत्वमिवाज्ञातार्थपरत्वं सिध्यतीति तत्र पाठः। नन्वेवमपि "तदुपासितव्यम्" इत्यनेन विहितमुपासनमनूद्य सहस्रशीर्षत्वाद्यनेकगुणविधाने वाक्यभेदः स्यादिति चेत्। "विष्णवे शिपिविष्टाय" इतिवत्सामानाधिकरण्येन विशिष्टैककारकविधानात्। तस्मिन्नुपास्यस्य दहरं विपापमिति मन्त्रे गगनशब्देनानुवादः, उपासनामात्रं तु विधीयते। अत एव महेश्वरशब्दोदितोमापतेरुपास्यस्योत्पत्तिशिष्टत्वेन सहस्रशीर्षैत्यादिनोपास्यसमर्पणं न सम्भवतीति, अपास्तम्। पशुत्वस्य सत्यप्युत्पत्तिशिष्टत्वेऽजत्वादिविशेषाश्रयण इव गगनशब्दोक्तमायाशबलस्य नारायणरूपविशेषरूपेणोपासने बाधकाभावाच्च। महेश्वरशब्दस्य मन्त्रान्तरे पाठाच्च। तद्यौगिकत्वादेरुक्तत्वाच्च। वस्तुतस्तु "य एवं विद्वानमावास्यां यजते" "य एवं विद्वान् पूर्णमासीं यजते" इति सत्यपि प्रत्यक्षयजिश्रवणे 'यदाग्नेयोऽष्टाकपाल" इत्यत्रा

नेकगुणश्रवणाद् द्रव्यदेवतासम्बन्धकल्पितविशिष्टयागविधानमाश्रित्य यथा तस्यानुवादत्वमाश्रीयते । एवं "सहस्रशीर्षमित्यादिअनन्तमव्ययं कविं समुद्रेन्तं विश्वशम्भुवमित्यन्तानां" पद्मकोशप्रतीकाशमित्यादिना समभिव्याहारात् तस्याः शिखाया मध्ये परमात्माव्यवस्थितः । स ब्रह्मा स शिव इत्यादेरन्ते श्रवणाद् द्रव्यदेवतावच्चोपास्यहृदययोरुपासनारूपक्रियासंबन्धित्वात् तत्सम्बन्धकल्पितमनेकगुणविशिष्टमुपासनमत्र विधीयत इत्यवश्यं वक्तव्यम् । शिखामध्यस्थत्वस्य ब्रह्मादिविभूतिमत्त्वस्य प्राप्तत्वेन "दहरं विपापम्" इति मन्त्रसिद्धोपासनानुवादेन विधाने वाक्यभेदस्य वज्रलेपायितत्वात् । अत एव दीपिकायां तस्याः शिखाया इति मन्त्रे उक्तप्रकारेण ध्यायेदिति तात्पर्यार्थ इत्युक्तम्। "दहरं विपापम्" इतिमन्त्रे च उपासनमुच्यत इत्येवोक्तं न तु विधीयत इति। उचितं चैतत् । आधाराग्निहोत्राधिकरणादिन्यायेन भावनाया विधिसम्बन्धस्य स्थितत्वात् । धात्वर्थादीनां तद्द्वारेण तत्सम्बन्धात् । कृदन्तेषु भावनानभिधानात् ।

यथाहुः—

धात्वर्थकारकैरेव गुणभूतोऽवगम्यते ।
भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते ॥ इति ।

श्रेयःसाधनाविधिपक्षेऽपि कटस्त्वया कर्त्तव्यो ग्रामो गन्तव्य इत्यादिषु कर्मपरेषु न विधिराश्रयेन सम्भवतीत्युक्तं द्वितीयवर्णके । अन्योपसर्जनस्यान्येनानन्वयात् । "स्वाध्यायोऽध्येतव्य" इत्यादौ तु अपूर्वत्वेनागत्या तदाश्रयणम् । तस्मान्नारायणीयसमाख्योपनिषद्यस्यां सहस्रशीर्षमित्यादिनाऽनेकगुणविशिष्टनारायणकर्मिका,निहितोऽस्य जन्तोरिति षष्ठ्यन्तजन्तुशब्दोपस्थितजन्तुसम्बन्धिहृदयपद्मकोशाधिकरणिकोपासना विधीयत इति सिद्धं तस्यैवोत्पत्तिशिष्टत्वम् । एवं सति सर्वे शब्दा आञ्जस्येनोपपद्यन्ते । इतरथा ध्यायेदिति कल्पितक्रियान्वयासिध्यर्थं प्रथमान्तौ महेश्वररुद्रशब्दौ द्वितीयान्तत्वेन विपरिणमयितव्यौ स्याताम् । यच्चऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलमितिवचनं तस्यानुवाकान्तरे श्रवणान्नमस्काराख्यक्रियान्तरान्वयात्पद्मकोशेत्यादिनाऽसमभिव्याहाराच्च नोपासनाश्रय इति न तेनापि विरोधः । शिवपदस्य सत्यपि द्वितीयान्तत्वे तदनुवाकपाठे च नारायणपदस्यासकृच्छ्रुतत्वेनाभ्यासे भूयस्त्वमर्थस्य भवतीति न्यायेन प्राधान्यात् नारायणस्यैव शिवाभेदेनोपासनं सामानाधिकरण्यात् । एवञ्च महेश्वरेशरुद्रशब्दानां रूढत्वाङ्गीकारेऽपि न बाधकम् । तथा हि ।

विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः।
ईशस्य यत्त्रिभिर्हीनं तुरीयं तत्पदं विदुः।
नारायणे तुरीयाख्ये भगवच्छब्दशब्दिते।
नारायणः परो व्यक्तात्—

इत्याद्युपबृंहणात्सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद-मित्युपक्रमाच्च महतः परमव्यक्तमित्युपसंहरणार्थत्वात्। तस्माद्विश्वमेवेदं पुरुष इत्यत्र विश्वाभेदोक्तिवत् महेश्वरादिशब्दयुतवाक्येषु विष्णुशिवयोरभेदः प्रतिपाद्यते। अयं तु विश्वाभेदाच्छिवाभेदस्य विशेषः। विश्वं कल्पितं तस्य वास्तवं स्वरूपं नारायणः, अधिष्ठानत्वात्। भुजङ्गस्येव रज्जुः। सोऽयं विश्वाभेदः। नैवं शिवाभेदः, किन्तु जीवेश्वरयोरिव, यथैव ह्येकस्यैवात्मन उपाधिभेदाद्, जीवेश्वरभेदः। एवमेकस्यैव मायाशबलस्य परमात्मनस्तत्तद्गुणोपाधिकः शिवविष्णुभेद इति न तयोरीश्वरत्वे कश्चिद्विशेषः। तथा च मैत्रायणीयोपनिषच्छ्रुतिः। "अथ यो ह खलु वाव अस्य तामसोंऽशः,असौ च ब्रह्मचारिणो योऽयं रुद्रः, अथ यो ह खलु वावास्य राजसोंऽशः, असौ च ब्रह्मचारिणो योऽयं ब्रह्मा, अथ यो ह खलु वावास्य सात्त्विकोंऽशः असौ च ब्रह्मचारिणो योऽयं विष्णुः, स वा एष एकः त्रिधाभूत" इति। अत एवोपबृंहणमपि उभयोः सर्वोत्कर्षमविशेषेण वर्णयति। शिवोत्कर्षस्तावद् ब्रह्मादयो हि लोकानां सर्गे त्यादिरुक्तमधस्तात्। श्रीनारायणोत्कर्षोऽपि महाभारते मोक्षधर्मेषु।

सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः महर्षिभिः।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम्॥ इति॥
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च।
आनुशासनिके श्रीशङ्करवचनम्।
अहञ्चैव नमस्यामि नित्यमेव जगत्पतिम्॥ इति।

नारायणीयेपि न हि विष्णुः पुरा नमतीति। तथा किमेकं दैवतं लोके इतिप्रश्ने—

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम्॥ इति।
हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः।

इत्याद्या लोकप्रसिद्धिश्चाविशिष्टा।

नह्यनीश्वरस्य पुरुषोत्तमत्वं पुरुषेष्वनुत्तमस्य च महेश्वरत्वम् तथा एक एव रुद्रो न द्वितीयोऽवतस्थ इति वत् "एको दधार भुवनानि विश्वा" इति वैदिकी प्रसिद्धिः। न चैवं परस्परविरोधः।

त्रिधाभिन्नोऽस्म्यहं विष्णो! ब्रह्मविष्णुभवाख्यया।

एकमेव विजानीध्वं ततो यास्यथ निर्वृतिम् ॥
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम।
रुद्रो नारायणश्चेति सत्त्वमेकं द्विधा कृतम्।

इत्येवं क्रमेण लिङ्गपुराणकूर्मपुराणहरिवंशमोक्षधर्मादिपर्यालोचनयाऽभेदस्यैव वस्तुतोऽभिप्रेतत्वात्। सत्त्वमेकमित्यत्र सत्त्वशब्देन स्वाश्रयव्यामोहकमायाभिप्रेता। द्विधाकृतमिति गुणकृतो भेदोऽभिप्रेतः। तथा—

वाराहेऽपि,

या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः।
एवं सर्वेषु शास्त्रेषु पुराणेषु च शस्यते ॥
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मा सोऽहमेव च।
वेदत्रयेऽपि यज्ञेऽस्मिन् पण्डितेष्वेष निर्णयः ॥
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे।
तत्राहमपि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥ इति।

बृहन्नारदीयेऽपि—

ये शिवे परमेशाने विष्णौ च परमात्मनि।
समबुद्ध्या प्रवर्त्तन्ते ते वै भागवतोत्तमाः ॥
हरिं हरं विधातारं यः पश्येदेकरूपिणम्।
स याति परमानन्दं शास्त्राणामेष निर्णयः ॥
रुद्रो वै विष्णुरूपेण पालयत्यखिलं जगत्।
ब्रह्मरूपेण सृजति तदस्येव स्वयं हरिः ॥ इति।

स्कन्दपुराणेऽपि—

यथा शिवस्तथा विष्णुर्यथाविष्णुस्तथा उमा।
उमा यथा तथा गङ्गा चतूरूपेण भिद्यते ॥ इति।

ईश्वरगीतासु पार्वतीं प्रति वचनम्।

ये त्विमं विष्णुमव्यक्तं मां वा देवं महेश्वरम् ॥
एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः।
तस्मादनादिनिधनं विष्णुमात्मानमव्ययम्।
मामेव सम्प्रपश्यध्वं पूजयध्वं तथैव हि ॥ इति।

वनपर्वणि—

शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे ॥ इति

आनुशासनिकस्थसहस्रनामभाष्ये श्रीमद्भाष्यकारैरुदाहृतं पौराणवचनम्।

सृष्टिस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥ इति ।

श्रीभागवतेऽपि— [ स्क० ४ अ० १ श्लो० २८ ]

एको मयेह भगवान् विविधप्रधानै
श्चित्तीकृतः प्रजननाय कथं नु यूयम् ॥
अत्रागतास्तनुभृतां मनसोऽपि दूरा
ब्रूत प्रसीदत महानिह विस्मयो मे ॥

इत्यत्रिणोक्ते— [ स्क० ४ अ० १ श्लो० ३० ]

यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा ।
सत्संकल्पस्य ते ब्रह्मन् यद्वै ध्यायसि ते वयम् ॥

इति ब्रह्मविष्णुशिवानां वचनं त्रयाणामभेदं स्फुटं दर्शयति । हरिहरयोर्विषमदृष्टीनां जनितस्वगतबहुतरदुरितसृष्टीनां मन्दानां निन्दा चावादि तत्र तत्र ।

वाराहे तावत्—

विष्णुं रुद्रात्मकं ब्रूयाच्छ्रीर्गौरीति निगद्यते ।
एतयोरन्तरं यश्च ब्रूयात् सोऽधम उच्यते ॥
तं नास्तिकं विजानीयात् सर्वधर्मबहिष्कृतम् ।
यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तम ! ॥
स पापकारी दुष्टात्मा दुर्गतिं समवाप्नुयात् ॥ इति ।

बृहन्नारदीयेऽपि ।

हरिरूपधरं लिङ्गं लिङ्गरूपधरो हरिः ।
ईषदप्यन्तरं नास्ति भेदकृत् पापमश्नुते ।
अनादिनिधने देवे हरिशङ्करसंज्ञिते ॥
अज्ञानसागरे ग्रामं ते कुर्वन्ति हि पापिनः ।
हरिशङ्करयोर्मध्ये ब्रह्मणश्चापि यो नरः ॥
भेदको नरकं भुङ्क्ते यावदाचन्द्रतारकम् ॥ इति ।

स्कान्देऽपि ।

विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं तथा ।
गङ्गागौर्यन्तरं यच्च यो ब्रूते मूढधीस्तु सः ॥
रौरवादिषु घोरेषु नरकेषु पतत्यधः । इति ।

ईश्वरगीतास्वपि ।

ममैषा परमा मूर्तिर्नारायणसमाह्वया ।
सर्वभूतात्मभूता सा शान्ता चाक्षरसंज्ञिता ॥

ये त्वन्यथा प्रपश्यन्ति लोके भेददृशो जनाः।
न ते मां सम्प्रपश्यन्ति जायन्ते च पुनः पुनः॥
ये त्वन्यथा प्रपश्यन्ति मत्वैवं देवतान्तरम्।
ते यान्ति नरकान् घोरान् नाहं तेषु व्यवस्थितः॥ इति।

यत्र—

अहमेव परं ब्रह्मपरत्वं हि पितामह।
अहमेव परं ज्योतिः परमात्मा त्वहं विभुः॥

इति विष्णुना ब्रह्माणं प्रति उक्तं शिवस्य "संमोहं त्यज विष्णो! त्वम्" इति लैङ्गं वचनं, न तेन कश्चिद् विष्णोरपकर्षः सिध्यति।

यत्पादसेवोर्जितयात्मविद्यया
हित्वा अनाद्यात्मविपर्ययग्रहम्॥
लभन्त आत्मीयमनन्तमैश्वरं
कुतो नु मोहः परमस्य सद्गतेः।

इति श्रीभागवतोक्त्या "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा"दितिन्यायावतारात्। लिङ्गपुराणे च मायाशबलस्यैव गुणविशेषोपाधिभिर्विष्ण्वादिरूपत्वं बहुधोक्तम्।

हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम्।
सत्त्वेन सर्वगो विष्णुः सर्वात्मा तु महेश्वरः॥ इति।

अत्र रजसोपहिते हिरण्यगर्भशब्द उपचरितः। हिरण्यगर्भस्यैश्वराद्भिन्नत्वेनाचार्यैः प्रतिपादनात्। अत एव—

कूर्मपुराणे।

प्रजापतेः परा मूर्तिरितीयं वैदिकी श्रुतिः।
ब्रह्माण्डमेतत्सकलं सप्तलोकतलान्वितम्॥

इति विराजमुक्त्वा—

द्वितीयं तस्य देवस्य शरीरं परमेष्ठिनः।
हिरण्यगर्भो भगवान ब्रह्मा वै कनकाण्डजः॥

इति हिरण्यगर्भं निर्दिश्य—

तृतीयं भगवद्रूपं प्राहुर्वेदार्थचिन्तकाः॥
रजोगुणमयं यद्वै रूपं तस्यैव धीमतः।
चतुर्मुखोऽसौ भगवान् जगत्सृष्टौ प्रवर्त्तते॥ इति उक्तम्।

अत एव हिरण्यगर्भस्य स्रष्टृत्वेऽपि न जगत्स्रष्टृत्वं भूतजन्यत्वेन तदस्रष्टृत्वात्।

सृष्ट्यन्ते पाति सकलं विश्वं वै विश्वतोमुखः।

सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम् ॥
अन्तकाले स्वयं देवः सर्वात्मा परमेश्वरः ।
तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥

इत्युक्त्वा गुणोपाधिकानां तत्पदार्थत्वं न प्रजापतिहिरण्यगर्भयोरित्याशयेनोक्तम्—

एकोऽपि सन्महादेवस्त्रिधासौ समवस्थितः ।
सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः ॥ इति ।

सर्वात्मत्वे महेश्वर इति लिङ्गे महेश्वरशब्देन "मायिनं तु महेश्वरम्" इति श्रुतिसिद्धं मायोपहितमुच्यते। एवं च मायोपहितस्यैव त्रिरूपत्वान्मायायाश्च स्वाश्रयाव्यामोहकत्वाच्च किञ्चिद्गुणकृतं वैषम्यं मन्तव्यमित्यर्थः। एवञ्च संमोहशब्देन संमुह्यतेऽनेनेति व्युत्पत्त्या अहमेव परं तत्त्वमिति पूर्वश्लोकस्यैव काराभिहितमवधारणं निर्दिश्य निराक्रियते त्रयोऽपीश्वराः, न त्वेक एवेति। कथमन्यथा भगवान् बादरायणो विष्णुर्विश्वेश्वरः स्वयं सर्वात्मा परमेश्वरो रुद्र इति वदेत्, तस्मादभेद एवानयोर्युक्तः। तथा च नृसिंहतापनीयश्रुतिः। "ॐ तत्सत् ऋतं सत्यं परब्रह्म पुरुषं [नृकेसरिविग्रहं कृष्णपिङ्गलम्। ऊर्ध्वं रेतं विरूपाक्षं शङ्करं नीललोहितम्" इति। अत्र प्रह्लादाह्लादभक्ताह्लादकरश्रीनृसिंहविग्रहं नारायणवाचकनृकेसरिशब्दस्य गिरिशपरकृष्णपिङ्गलादिशब्दानाञ्च सामानाधिकरण्यं मायाशबलत्वेन द्वयोरभेदं ज्ञापयति। तदुपपादनाय च परब्रह्मशब्देन परब्रह्मत्वं नारायणस्योच्यते। एवञ्च "नारायणपरब्रह्मेति प्रकृतोपनिषद्वाक्यनारायणश्चासौ परब्रह्मेति कर्मधारय एवाश्रयणीयः, न तु नारायणात् परब्रह्मेति तत्पुरुषः, श्रुत्यन्तरेण स्पष्टं नारायणस्य परब्रह्मत्वोक्तेः। निषादस्थपतिन्यायेन (पू० मी० अ० ६ पा० १ अधि० १३ सू० ५१-५२) कर्मधारये सम्भवति तत्पुरुषस्यान्याय्यत्वाच्च। पितृयज्ञाधिकरणन्यायेन च सामानाधिकरण्यस्यैव पदेषु युक्तत्वात्। उक्तानेकवचनेभ्य उभयोः साम्याच्च। वेदभाष्यकारैश्चैतद्व्याख्यानावसरे दीपिकायामुक्तम्, पुराणेषु नारायणशब्देन व्यवह्रियमाणो यः परमेश्वरः स एव परमुत्कृष्टं सत्यज्ञानादि वाक्यप्रतिपाद्यस्य ब्रह्मणस्तत्त्वम्, अतो नारायणः पर एवात्मा नत्वपरो मूर्तिविशेष इति। अतएव महाज्ञेयमित्यत्रापि महांश्चासौ ज्ञेयश्चेत्येव विग्रहः, न तु भवादिनामाष्टकान्तर्गतमहच्छब्दस्य शम्भुपरत्वदर्शनान्महाच्छम्भुर्ज्ञेयो यस्येत्येवं विग्रहः, अन्यपदार्थोपस्थितिसापेक्षबहुव्रीहितस्तन्निरपेक्षसमानाधिकरणसमासस्यैवोचितत्वात्। "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते

वासुदेवः सर्वम्" इति बहुजन्मार्जितपुण्यपुञ्जविशुद्धान्तःकरणस्य पुंसो ज्ञेयत्वेनोक्तस्य वासुदेवस्य ज्ञेयान्तरासम्भवाच्च। सत्यपि महच्छब्दस्य पार्वतीशपरत्वे शिवशब्दस्य सदाशिवेऽत्यन्तं प्रसिद्धत्वात् भीमो भीमसेन इतिवच्च नामैकदेशे नामग्रहणमित्यपि सम्भवाच्छिवमच्युतमिति सामानाधिकरण्येनाभेदावगतौ सत्यां "वेदो वा प्रायदर्शनात् (पू० मी० अ० ३ पा० ३ अधि० १ सू० २) इति न्यायेन ऋगादिशब्दवन्महाज्ञेयमित्यत्राप्यभेदसमासो युक्तः पदावधारणे समभिव्याहाररूपवाक्यस्य प्रामाण्यात्।

यथाहुः—

पदावधारणोपायान् बहूनिच्छन्ति सूरयः।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः॥ इति।

एवं चाश्वो गच्छतीत्यत्र गच्छतिसमभिव्याहाराद् यथाश्व इति सुबन्तमेव न तु तिङन्तम्। तथाभेदसमभिव्याहारादभेदसमास एव युक्तः। किञ्च। भवादिनामाष्टकान्तर्गतस्यैव महच्छब्दस्य भवपरत्वं न सर्वत्र, महाब्राह्मण इत्यादौ महत्त्वमात्रप्रतिपादनात्। विश्वादिशब्देषु विष्णुसहस्रनामान्तर्गतेषु तथा दर्शनाच्च। अन्यथा रुद्रादिशब्दानां विष्णुसहस्रनामसु पाठाद् रुद्राध्यायादीनां विष्णुपरत्वापातः। व्याख्यातञ्च महाज्ञेयपदं पूर्वाचार्य्यैः' तत्त्वेषु प्रौढत्वान्महाज्ञेय इति। एवं "नारायणपरो ज्योति"रित्यत्रापि अभेदसमासो युक्तः। नारायणपदसामानाधिकरण्येन परशब्दे पुल्लिङ्गनिर्द्देशसम्भवाच्च। पञ्चमीसमासाश्रयणे ज्योतिःपदसामानाधिकरण्येन नपुंसकोक्तिप्रसङ्गात्। सति सम्भवे छान्दसत्वस्यायुक्तत्वाच्च। उक्तञ्च पूर्वाचार्य्यैः। परो ज्योतिर्यदेतदुत्कृष्टं ज्योतिः, छन्दोगैः परं ज्योतिरुपसम्पद्येत्याम्नातम्, तदपि नारायण एव। तस्मान्नारायणः परमात्मेति। अस्माच्च ग्रन्थात् "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते" इति छन्दोगश्रुतिरपि परज्योतिःशब्देन नारायणं वदतीत्याचार्य्याभिप्रायो गम्यते। युक्तश्चैषः, स उत्तमः पुरुष इत्यादिवाक्यशेषात्। श्रीमद्भाष्यकृद्भिश्चैतद्व्याख्यानावसरे छान्दोग्यभाष्य उक्तं कृतनिर्वचनो गीतास्विति। तत्र चानन्दगिरीयम्। यथोक्तोत्तमपुरुषे भगवत्सम्मतिं करोति। कृतेति।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।

यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।
[ गी० अ० १५ श्लो० १६-१८ ] ।

इति स भगवान् ऊचिवानिति । "उत्तमः पुरुष" इत्यत्र श्लोके गीताभाष्यम् । उत्तमः=उत्कृष्टतमः पुरुषस्तु अन्यः=अत्यन्तविलक्षणः, आभ्याम् । परमात्मेति=परश्चासौ देहाद्यविद्याकृतात्मभ्य आत्मा च सर्वभूतानां प्रत्यक् चेतनपरमात्मेत्युदाहृत उक्तो वेदान्तेषु । ईश्वरः सर्वज्ञो नारायणाख्यः, ईशनशील इति तस्मात्पूर्वाचार्यव्याख्यानपर्य्यालोचनया गीतास्वारस्येन नारायणे प्रसिद्धतरोत्तमपुरुषशब्देन च नारायण एव परं ज्योतिः, मुक्तप्राप्यत्वेन अस्मिन् वाक्ये व्यपदिश्यते तथा च गीतासु तं प्राप्तानामनावृत्तिरुक्ता ।

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ इति ।
[ अ० ८ श्लो० १५ ]

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ इति ।
[ अ० ८ श्लो० १६ ]

आनुशासनिकेऽप्युमामहेश्वरसंवादे—

सायुज्यानां विशिष्टे द्वे मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्त्तन्ते विष्णुं वा शुभलोचने ॥ इति ।

स्यादेतत् । "अमरत्वं शिवत्वं च तपसा प्राप्नुयान्नरः," इत्यानुशासनिके, एव प्रकृतग्रन्थमुक्त्यर्थेन शिवत्वमितिशब्देन मुक्तेः शिवसायुज्यरूपतया निष्कृष्टत्वादुक्तवचनं विष्णुप्रतीकशिवोपासनया प्रथमं विष्णुसायुज्यं प्राप्तानां क्रमेण शिवपदप्राप्त्या स्वरूपाविर्भावे सत्यनावृत्तिपरमिति । नैवम् । तत्रैवोमामहेश्वरसंवादसमनन्तरं महेश्वरेण स्वीयान् प्रति स्वजनकत्वेन स्वनमस्यत्वेन सर्वोत्कृष्टतया प्रतिपादितस्य श्रीनारायणस्य "ब्रह्मदृष्टिरुत्कर्षात् । [ उ० मी० अ० ४ पा० १ अधि ४ सू० ५ ] इति न्यायेन प्रतीकत्वायोगात् ।

तथा हि—

पितामहादपि परः शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासा व्यभ्रे सूर्य इवोदितः ॥
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ।

ब्रह्मा तस्योदरभवस्तस्याहं च शिरोद्भवः ।
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ॥
साक्षाद्देवनाथः परन्तपः ?
सर्वसंश्लिष्टः सर्वगः सर्वतो मुखः । ?
परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः ।
न तस्मात्परमं भूतं त्रिषु लोकेषु विद्यते ॥
सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
सुरकार्यार्थमुत्पन्नो मानुषं वपुराश्रितः ॥
ब्रह्मा वसति गर्भस्थं शरीरे सुखसंश्रितः ।
शर्वः सुखं संश्रितश्च शरीरे सुखसंस्थितः ॥
सर्वाः सुखं संश्रिताश्च शरीरे तस्य देवताः ।
योगमायः सहस्राक्षो निरपायो महामनाः ॥
आशयेनानुरूपेण युज्यन्ते तमनुव्रताः ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ॥
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ॥
स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ।
कर्मणा मनसा वाचा स नमस्यो द्विजैः सदा ॥
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ।
तं दृष्ट्वा सर्वशोदेवं दृष्टाः स्युः सुरसत्तमाः ।
महावराहं तं देवं सर्वलोकपितामहम् ।
अहञ्चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ इति ।

न मेऽत्रास्ति विचारणेति च निर्णीतत्वोक्तिपुरःसरम् । "न बिभेति कुतश्चन" "अभयं वै जनक प्राप्तोसि" इत्यादिषु उक्तमोक्षरूपाभयेन तमनुव्रता युज्यन्त इत्युक्तं तद्धेतुज्ञानविषयतयोक्तस्य सर्वसंश्लिष्ट इत्यादिना च सर्वोपादानत्वोक्तेः । "तस्मिन् दृष्टे" इत्यादिना च यस्मिन् विज्ञात इति श्रुत्यर्थतयोक्तस्य कथं मुक्तप्राप्यत्वं न स्यात् अथ च प्रतीकत्वमिति । किञ्च । आनुशासनिक एव—

"किमेकं दैवतं लोके किं वाप्येकं परायणम्" इति युधिष्ठिरप्रश्ने भीष्मेण "अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्" इत्युक्त्वा—

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥

इत्युक्तम् ।

श्रीमद्भाष्यकारैश्चैतत्प्रश्नव्याख्यावसरे दैवतं=देव इत्यर्थः, स्वार्थे तद्धितविधानात् । लोके=लोकनहेतुभूते विद्यास्थान इत्युक्तम् । अस्मिंश्च लोके एकं परमयनं प्राप्तव्यं परायणम् । यस्मिन् निरीक्षिते—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥

यस्य च ज्ञानमात्रेणानन्दलक्षणो मोक्षः प्राप्यते । यद्विद्वान्न बिभेति कुतश्चनेति । यत्प्रविष्टस्य न विद्यते पुनर्भवः । यस्य च वेदनात्तदेव भवति । यद्विहायापरः पन्था नृणां नास्ति । तदुक्तमेकं परायणं च लोके यत्तत् किमिति द्वितीयः प्रश्न इत्युक्तम् । "परमं यो महत्तेजः" इत्ये-तद्व्याख्यानावसरे उक्तं, द्वितीयप्रश्नं समाधत्ते । परमं प्रकृष्टं तेजः चैत-न्यलक्षणं सर्वावभासकम् । "येन सूर्य्यस्तपति तेजसेद्धस्तदेव ज्योतिषां ज्योतिर्न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय-मग्निः इत्यादिश्रुतेः । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्" इत्या-दिस्मृतेश्च "परमं तपस्तपति आज्ञापतीति तपः "य इमं च लोकं परमञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" इत्याद्यन्तर्यामिब्राह्मणे स-र्वनियन्तृत्वं श्रूयते । तपतीष्ट इति वा तपः । भीषास्माद्वातः पवते भी-षोदेति सूर्यः, इत्यादिश्रुतेश्च । तस्यैश्वर्यमनवच्छिन्नमतिमहत्त्वम् । "एष सर्वेश्वर" इति श्रुतेः । परमं सत्यादिलक्षणं परं ब्रह्म, महनीयतया महत् परमं प्रकृष्टम् पुनरावृत्तिशङ्कावर्जितम् । परमग्रहणात्सर्वत्रापरं तेजआदि-त्याकं व्यावर्त्तयति । सर्वत्र यो देव इति विशेष्यते । यो देवः परायणं तेजः परमं तपः परमं ब्रह्म स एकः सर्वभूतानां परायणमिति वाक्यार्थ इति । एवं चाचार्य्यव्याख्याततात्पर्य्याभिरनेकश्रुतिभिरुपबृंहणेन च श्री-नारायणत्वप्रतिपादनान्न तं प्राप्तानां प्राप्यान्तरं वक्तुमुचितम् । नापि तस्य परज्योतिःशब्दाप्रतिपाद्यत्वम् । ज्योतिःपर्य्यायपरमतेजःशब्देन प्रतिपादनात् । श्रीविष्णुपरतयाचार्यव्याख्याततया "तदेव ज्योतिषां ज्योतिः इति श्रुत्युक्तत्वाच्च । किञ्च वेदभाष्यकृद्भिर्वेदभाष्ये "महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इत्यादिश्रुतिषु प्रसिद्धो नारायणः पुरुषसूक्ते देवतेत्युक्तम् । यज्ञमन्त्रसुधानिधौ च गणहोमे पुरुषसूक्ते देवतात्वेन नारायणस्तैरेवोक्तः । एवञ्च तदन्तर्गतेन "तमेव विदित्वा-ऽतिमृत्युमेती"तिमन्त्रेण नारायणं जानतां स्पष्टं मुक्त्यभिधानाद् "विष्णुं वा शुभलोचने" । इत्यानुशासनिकवचनस्वरसाद् "गुहां प्रविष्टौ" इति न्यायेन प्रतीयमानस्य सायुज्ययोः साम्यस्य शङ्का न कर्तव्यः

भङ्गे च हिरण्यगर्भसायुज्यस्यापि क्रममुक्तिफलत्वाद्वित्वसंख्यानुपपत्तिः। "यस्मिन्पञ्च पञ्चजना" इत्यत्र साङ्ख्याभिमततत्त्वोक्तौ आकाशस्य पृथगुक्त्या पञ्चविंशतिसङ्ख्यानुपपत्तिवत्। तस्मादानुशासनिकस्थेष्वमरत्वं शिवत्वं चेति प्राचीनश्लोकेषु अमरत्वमिन्द्रादिसाधारणं स्वीकृत्य शिवत्वमित्यनेन तन्मात्रप्रत्ययो मा भूदिति "मां प्राप्य" इत्याद्युक्तमित्येव युक्तम्। श्रीसदाशिवश्रीनारायणयोरुभयोरपि मायाशबलपरब्रह्मरूपत्वेन प्रत्येकं निरपेक्षमोक्षहेतुत्वात्। ननु स्विदं तैत्तरीयछान्दोग्योपनिषत्पर्यालोचनया नारायणस्य जगदीश्वरत्वम्। तथा चाथर्वणोपनिषदीयगोपालतापनीयेऽप्युक्तम्।

कः परमो देवः। कुतो मृत्युर्बिभेति। कस्य विज्ञानेनाखिलं विज्ञातं भवति। तदुहोवाच ब्राह्मणः। श्रीकृष्णो वै परमं दैवतम्। गोविन्दान्मृत्युर्बिभेति। गोपीजनवल्लभज्ञानेनैतज्ज्ञातं भवतीति।

रामतापनीयेऽपि हनुमद्वाक्यम्।

राम एव परं ब्रह्म राम एव परायणम्॥ इति।

नारायणोपनिषद्यपि।

-अथ नित्यो देव एको नारायणो ब्रह्मा च नारायणः शिवश्च नारायण इति।

नृसिंहतापनीये।

प्रतद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा इति॥

इत्थमियमृग्व्याख्याताचार्यैः। विष्णुर्मृगः सिंहः प्रस्तवते=स्तुतिं प्राप्नोति स्तुतिमन्त्रैः। तद्वीर्याय तत्तत्सामर्थ्याय न भीमः=न भयङ्करः। क्वायं न चरति सर्वदेवावग्रहेषु स्वयं विचरति सर्वत्रलीलाविग्रहधारीत्यर्थः। गिरिष्ठाः—गिरिः पर्वतः तत्स्थः ईश्वरात्मकः। यद्वा गिरिषु गुहासु स्तुतिषु यद्रूपमभिनवं स्तोता कामयते तद्रूपं स्वस्मिन् स्थापयतीति गिरिष्ठाः। यस्य त्रिषु विक्रमणेषु विग्रहेषु विविधं विक्रमणं तेषु ब्रह्मविष्णुशिवात्मकेषु अधीत्युपरि भावे अध्युरुषु बहुषु लीलादिविग्रहेषु भुवनानि क्षियन्ति निवसन्तीति। युक्तश्चैतद्व्याख्यानम्। नृसिंहपदनिर्वचनस्य श्रुतौ विवक्षितत्वात्।

विष्णुसूक्तेऽपि।

न ते विष्णो जायमानो न जातो देवमहिम्नः परमं न माया॥ इति।

एतद्व्याख्या। तव महिमत्वस्यावसानं नास्ति अत एव न सर्वैर्ज्ञायत इति भाव इति। तथा—

बह्वृचब्राह्मणे ।

अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ।

इति सकलदेवतोत्कर्षो विष्णोः श्रूयते । नन्वाग्नावैष्णवपुरोडाशार्थवादस्य "अस्याग्निर्मुखं प्रथमो देवतानामग्निरेव तु प्रथमो देवतानाम्" इत्यादिश्रुतिभिरग्नेरुत्कर्षप्रतीतेः सर्वदेवतान्यूनत्वायोगेनाग्निः अवम इत्यंशे कांश्चिद्देवताविशेषान्प्रत्येवान्वयपरतया सङ्कुचितार्थवादत्वे "ग्रहणार्थं च पूर्वमिष्टस्तदर्थत्वादिति (१)पूर्वतन्त्रसिद्धान्तविरोधः, अविवक्षितान्वाधानवाक्यशेषबलेन पूर्वपक्षे सति अहृदयवाचामहृदया एव वाचो भवन्तीत्यनेन न्यायेन तथाभूतमेवार्थवादान्तरमेतदवलम्ब्य निराक्रियत इति तत्रैव प्रकटितत्वात् इति चेन्न । वेदभाष्यकृद्भिरस्याः श्रुतेरन्यथा व्याख्यानात् । तद्यथा । योऽयमग्निरस्ति सोऽयं देवता मध्येऽवमः प्रथमो द्रष्टव्यः । यस्तु विष्णुः सोऽयं परम उत्तमः । वैशब्द उक्तार्थे मन्त्रप्रसिद्धिद्योतनार्थः । "अग्निर्मुखं प्रथमो देवतानां संगतानामुत्तमो विष्णुरासीत्" इति हि मन्त्र आम्नाय इति । एवं चावमशब्देन न्यूनत्वस्यानुक्तत्वादग्निः प्रथमो देवतानामित्यादिभिर्विरोधोद्भावनं तत्परिहाराय च कांश्चिद्देवताविशेषान्प्रतीत्यध्याहाराश्रयणेन सङ्कुचितार्थत्वमसदालम्बनार्थवादत्वं वा युक्तमेव । युक्तश्चायमर्थः । एवमर्थस्य शाखान्तरपठितस्याग्नावैष्णवस्यैवार्थवादस्य "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निः सर्वादेवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चारभते, अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताश्चैव यज्ञं चाभयतः परिगृह्यावरुन्धे इत्यस्य दशमे "इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेत आरम्भस्य प्रधानसंयोगात्" (२)इत्यधिकरणे शबरस्वामिभिरुदाहृतत्वात् । नचास्यासदालम्बनार्थवादत्वम् । कर्मणि सङ्गतानां देवतानां मध्ये यजमानेनाग्नेरेव प्रथममुद्देशात् । आधानसिद्धाग्न्यभाव उत्तरकर्म्मानधिकारात् । पवमानेष्टिषु चाग्नेरेव प्रथममुद्देशात् । विष्णोश्च परमत्वं तत्प्रीत्यर्थत्वात्सर्वकर्म्मणाम् । अत एव विष्णुर्यज्ञ इति तत्प्रीतिस्तत्साध्येत्यर्थः । उपबृंहणञ्च ।

तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म्म विद्यान्या शिल्पनैपुणम् ॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥ इति ।

( १ ) पू० मी० अ० १२ पा० १ अधि० १२ सू० २४
( २ ) पू० मी० अ० १० पा० १ अधि० २ सू० ४

एवञ्च देवताः प्रति शेषिभूतकर्म प्रति शेषिभूतस्य विष्णोर्देवताः प्रति प्राधान्यं युक्तं मन्त्रार्थवादयोर्देवताविग्रहन्यायेन प्रामाण्यात् । द्वादशाध्याये च ग्रहणार्थमित्यत्र भाष्यकारैस्तावद्वह्वृचब्राह्मणार्थवादो नोदाहृतः । शाखान्तरस्थस्यैवोक्तार्थवादस्योदाहरणात् । तत्रैव देवताश्चव यज्ञ चोभयतः परिगृह्यते तदर्थत्वश्रवणात् । असदर्थवादत्वं च नोभयोरित्युक्तमेव । दीक्षासंस्कारार्थत्वेन विधौ दीक्षणीयायाः श्रवणाच्च देवतापरिग्रहार्थत्वामिति देवतापरिग्रहांशेऽसदर्थवादत्वं तत्रोक्तम् । न तु विष्णोः परमत्वे । तत्सिद्धं बह्वृचब्राह्मणपर्यालोचनया विष्णोः सर्वोत्कृष्टत्वम् । तथा लोगाक्षिगृह्ये अग्नये पृथिव्यधिपतये स्वाहेत्यारभ्य रुद्राय भूताधिपतये स्वाहेत्यन्तमन्त्रेण श्रीविष्णोः सर्वाधिपतित्वं प्रतिपाद्यते । ननु द्वादशहोमेषु प्रत्येकं विनियुक्तानामेषां मन्त्राणां एकवाक्यत्वाभावात् । अन्येभ्यः सर्वैश्वर्यव्यवच्छेदे श्रीनारायणे प्रतिपादने च सामर्थ्याभावान्नैतस्यो नारायणस्य सर्वाधिपत्यसिद्धिः । रुद्राय भूताधिपतये स्वाहेति मन्त्राम्नातो रुद्रस्तु शिवकलाविर्भावयुक्तः कश्चिद् गणनाथः । कूर्मपुराणे लोकपालपुरीवर्णनप्रस्तावे "तस्यास्तु पूर्वदिग्भागे शङ्करस्य शुभा पुरी" इत्यादिनाविष्करणादिति चेत् । न । विष्णवे सर्वाधिपतये स्वाहेति मन्त्रस्तावद्गुणविशिष्टां देवतां प्रतिपादयति । सर्वाधिपतित्वगुणप्रत्यायनं च सर्वपदेन स्वार्थप्रत्यायनं विना न सम्भवति । तच्च सर्वनाम्नां सन्निहितपरामर्शित्वेनाध्ययनकाले सन्निहितान्वदवश्यं परामृशति, सत्यपि भिन्नवाक्यत्वे सत्यपि च प्रत्येकभिन्नहोमविनियोगे । तद्यथा । यदि ऋक्तो यज्ञ आर्तिमियाद् यदि यजुष्ट इत्युक्त्वा यदि सर्वतो यज्ञ आर्तिमियादित्यत्र सत्यपि वाक्यभेदे अध्ययनकाले सन्निहितान् परामृशति । यथा वा एकदोहनाशप्रायांश्चित्तवाक्ययोर्यस्योभय हविरार्तिमार्छेदित्यस्य च सत्यपि वाक्यभेदे सत्यामपि चानुष्ठानकाले भिन्नप्रयोगप्रवृत्तौ उभयपदमध्ययनकालेऽन्यदा च दधिपयसी परामृशति सर्वनामत्वात् । यथा वा सहस्रं देयमपरिमितं देयमित्यत्र सत्यपि वाक्यभेदे सत्यामपि भिन्नप्रयोगप्रवृत्तौ अपरिमितपदोक्तं बहुत्वं सहस्रापेक्षं, अध्ययनकाले तस्य सन्निधानात् । यथा वा गायत्रीच्छन्दोरूपकार्यद्वारा कारणब्रह्मणि चेतोवतारपरे वाक्ये भिन्ने अप्युपस्थितं ब्रह्म "अथ यदतः परो दिव" इत्यत्रोपासनान्तरपरे वाक्ये श्रुतेन यच्छब्देन निर्दिश्यते । तद्वद्ब्रह्मणे लोकाधिपतये स्वाहेत्युक्त्वा प्रयुज्यमानं सर्वपदं ब्रह्माणं लोकांश्चावश्यं परामृशतीति सिद्धं देवताविग्रहन्यायेन श्रीविष्णोर्विश्वपतित्वम् । यत्त्वत्र रुद्रोऽन्य इति । तन्न । रुद्रशब्दस्य

शङ्करेशानशब्दयोश्च कूर्मपुराणेऽनेकार्थत्वस्योपचरितार्थत्वस्य वा कल्पने प्रमाणाभावात्, सत्यपि सर्वाधिपत्ये कर्माङ्गगुणत्वेन भूताधिपत्यप्रतिपादने बाधकाभावात्। अत एव सर्वाधिपतित्वेनोक्तस्य विष्णोः, "विष्णुः पर्वतानामधिपति"रित्यत्र कर्माङ्गगुणत्वेन पर्वताधिपत्यं प्रतिपाद्यते। सर्वाधिपतेस्तदाधिपत्ये बाधकाभावात्। सत्यपि आदित्यप्रायपाठे विष्णोर्भगवदवतारत्ववत् तस्यापि सत्यपि लोकपालप्रायपाठे तदुपपत्तेः। उपपादितं च "अन्तस्तद्धर्मोपदेशात्"। ( उ० मी० अ० १ पा० १ अधि०७ सू० २० ) इत्यत्र। "ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाश्चे"ति वाक्योक्तं देशविशेषाधिपतित्वं परमेश्वरस्याचार्यैः, स एव न्यायः प्रकृतेऽपि ज्ञेयः, तत्सिद्धं लोगाक्षिगृह्यालोचनया सर्वपतित्वं विष्णोः। तथा भगवद्गीतासु। "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"इति "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय"इति च सर्वाधिष्ठानत्वं सर्वपतित्वं च श्रूयते।

नन्वनयोर्वाक्ययोर्मन्मना भवेत्यादौ च यदि श्रीकृष्ण एवाभिप्रेतः कथं तर्हि, "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः" "अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्" इत्यादिवचनान्वितं गीताशास्त्रमानं श्रुतवतः "स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव" इति गुरुं प्रत्युक्तवतोऽर्जुनस्य यावज्जीवं शिवपूजारतत्वमभवत्। कथञ्च युद्धमध्ये शिवाय कल्पितेन नित्यपूजोपहरेण कृष्णं शिवबुद्ध्यैव अर्च्चयत्। अतः शिवस्य परमात्मत्वेन भजनीयत्वेन च प्रतिपादनं गीतासु युक्तम्। एवं शिवाराधकस्य सतोऽर्जुनस्य शिवबुद्ध्या कृष्णार्चकत्वमुपपद्यते। अत एव तदीयपूजोपहारस्य कैलासे शिवसमीपे दर्शनमुक्तं द्रोणपर्वणि।

तं चोपहारं विततं नैशं नैत्यकमात्मनः।
ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम्॥ इति।

एवं भगवद्गीतायाः शिवपरत्वे सत्येव,

ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया॥
स्वयमेव हृषीकेशः प्रीत्योवाच सनातनम्।
गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि॥
भजस्व परया भक्त्या शरण्यं शरणं शिवम्॥

इति कूर्मपुराणे अर्जुनं प्रति व्यासवचनम्।
तत्रैवेश्वरगीतान्ते।

नारायणोऽपि भगवान् देवकीतनयो हरिः।
अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम्॥

इति कथनञ्च सङ्गच्छते। "दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्"। "कथं विद्यामहं योगिन्! त्वां सदा परिचिन्तयन्" "योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम्"। "एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः"। "यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः" इति गीताम्नातासु कृष्णार्जुनसञ्ज्ञयोक्तिषु कृष्णस्येश्वरविषययोगत्वस्योक्तत्वाच्च।

तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्ता प्रसृता पुराणी" इति श्रीकृष्णेन स्पष्टं स्वस्मिन् शिवयोगसत्त्वाभिधानाच्च। नचात्र शिवलिङ्गाप्रतीतेः तदीययोगसत्त्वोक्त्यसम्भवः। "प्रज्ञा च तस्मात्प्रसृता पुराणी" इति शैव श्वेताश्वतरोपनिषद्गतमन्त्रभागसमानार्थेन "यतः प्रवृत्ता प्रसृता पुराणी" इत्यंशेन शिवशक्तेरुक्तेः। किञ्च अनुगीतारम्भे श्रीकृष्णेनैव "परं हि ब्रह्म कथितं योगयुक्तेन तन्मया" इति शिवयोगमास्थाय मया गीतोपदेशः कृत इत्युक्तत्वाद्विभूत्यध्याये च "आदित्यानामहं विष्णुः" इतीश्वरपूर्वावताररूपोपेन्द्रस्य "वृष्णीनां वासुदेवोऽस्मि" इति स्वविभूतिषु परिगणनपूर्वकं विश्वरूपाध्याये "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" इति वक्षिणेन प्रत्यक्षहननात् प्रागेव स्ववीर्यप्रभावनिहतत्वमुपवर्ण्य मोक्षधर्मेषु पार्थं प्रत्येव "निहतास्तेन वै पूर्वं हतवानसि यान् रिपून्" इत्युक्तत्वात्, चरितोपदेशस्य सर्वस्यापि शिवविषयत्वं प्रकटीकृतमिति गीतायाः कात्स्न्येन शिवविषयमवश्यमभ्युपगन्तव्यम्। तस्मात्कृष्णस्य "मन्मना भव" इत्यादिवचनं शिवदृष्ट्यैव, "मयैवैते निहता" इतिवदिति।

अत्रोच्यते।

"यत्तावत् कामैस्तैस्तैरित्याद्यभवदित्यन्तम्। तन्न। तत्र ह्यन्यदेवताः क्षुद्रदेवता विवक्षिताः। गीताशास्त्राच्छ्रीकृष्णस्य परमात्मत्वमवगच्छतोऽपि शिवार्चनरतत्वं तु न दोषाय। यतः श्रीनारायणश्रीसदाशिवयोस्तेनाभेद एव निर्णीतोऽस्ति। अत एव वनपर्वणि शिवस्तुतावर्जुनेनोक्तम्।

शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे।
दक्षयज्ञविनाशाय हरिरुद्राय वै नमः॥ इति।

संहारहेतुत्वेन च तस्य प्रसिद्धेः कर्णभीष्मादिसंहारार्थं तदाराधनमुचितम्। अत एव तत्रार्जुनेन प्रार्थितम्—

भगवन्!

वरं ददासि चेन्मह्यं कामप्रीत्या वृषध्वज!
कामये दिव्यमस्त्रं तद् घोरं पाशुपतं प्रभो।

यत्तद्ब्रह्मशिरोधाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥
कर्णभीष्मकृपद्रोणैर्भविता नु महाहवः ।
त्वत्प्रसादान्महाबाहो जयेयं तान् यथा मृधे ॥ इति ।

एवञ्च युद्धमध्ये शिवबुध्या कृष्णार्चनं तस्मिन् निवेदितपूजोपहारस्य शिवलिङ्गे दर्शनञ्च सङ्गच्छते। परमेश्वरत्वेन संहारकर्तृत्वेन च शिवपूजायां तदादरात् । शिवपूजारतत्वमेवेत्यवधारणंत्वयुक्तम् । वासुदेवे निवादितोपहारस्य त्र्यम्बकाभ्याशदर्शनानन्तरं "ततो विपूज्य मनसा शर्वं कृष्णं च पाण्डव" इत्युक्तत्वात् । शिवायेत्याद्यनुपपत्तेश्चेति । यदपि "एवमित्यादि" सङ्गच्छत इत्यन्तमुक्तम् । तदप्यसत् । न हि तद्वाक्यबलेन नारायणस्वरूपाविवक्षया शिवपरत्वं वक्तुं शक्यम् । यत ईश्वरगीतायां तस्मिन्नेवाध्यायेऽनुपदमेव शिवनारायणयोरभेदो विस्पष्टः प्रतिपादितः ।

अहं नारायणो योऽहमीश्वरो नात्र संशयः ।
नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम् ॥
ममैषा परमा मूर्त्तिर्नारायणसमाह्वया ।
सर्वभूतात्मभूता सा शान्ता चाक्षरसंज्ञिता ॥
ये त्वन्यथा प्रपश्यन्ति लोके भेददृशो जनाः ।
न ते मां सम्प्रपश्यन्ति जायन्ते च पुनः पुनः ॥
ये त्विमं विष्णुमव्यक्तं मां वा देवं महेश्वरम् ।
एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥
तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् ।
मामेव सम्प्रपश्यध्वं पूजयध्वं तथैव हि ॥
ये त्वन्यथा प्रपश्यन्ति मत्वैवं देवतान्तरम् ।
ते यान्ति नरकान् घोरान् नाहं तेषु व्यवस्थितः ॥
मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ।
मोचयामि श्वपाकं वा न नारायणनिन्दकम् ॥

इत्यादि । एवं कूर्मपुराणे बहुषु स्थलेषु अभेदप्रतिपादनेन तत्प्रतिपादने च फलश्रवणेन भेददृष्टौ निन्दार्थवाददर्शनेन "शिवाय विष्णुरूपाय" इत्याद्युपबृंहणान्तराच्चाभेदाभिप्रायमेव ज्ञानं तदैश्वरमित्यादि । तथा नारायणोऽपि भगवानित्यादि । न तु नारायणाविवक्षया शिवपरत्वाभिप्रायम् । तथा सतीश्वरगीतायामृषीन्प्रति "सहस्रबाहुं जटिलं चन्द्रार्धकृतशेखरम् । वसानं चर्म्म" त्यादिरूपदर्शनवदर्जुनं प्रत्यपि

दर्शनीयम् न "किरीटिनं गदिनं चक्रिणम्" इति । सनत्कुमारादिभि-रिव नारायणेनोपदिष्टमेतावता न तत्तुल्यत्वं विवक्षितम् ईश्वरगीता-याम् । यतस्तत्र तादृशदर्शनावसर उक्तम् ।

क्षणेन जगतो योनिं नारायणमनामयम् ।
ईश्वरेणैकतापन्नमपश्यन् ब्रह्मवादिनः ॥
दृष्ट्वा तदैश्वरं रूपं रुद्रं नारायणात्मकम् ।
कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः ॥ इति ।

तस्माद्भगवद्गीतायाः सत्यपि नारायणपरत्वे ईश्वरचैतन्यमेव तत्त-दुपाधिभेदेभिन्नं गीताद्वयप्रतिपाद्यमित्यभिप्रेत्य नारायणोऽपि भगवानि-त्युक्तम् । शिवपरत्वश्च भगवद्गीतासु वदता बहवो मयेत्यादिशब्दा उप-चरितार्था व्याख्येयाः । अस्मन्मते तु मायोपहितेश्वरचैतन्यस्य सत्त्वो-पहितनारायणरूपेण प्रतिपादनान्नैष दोषः । तद्यथा चतुर्थेऽध्यायेऽर्जुनेन "अपरं भवतो जन्म परं जन्म विवस्वतः । कथमेतद्विजानीया"मितिपृष्टे उक्तं भगवता ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥ इति ।

अस्य व्याख्यानं गीताभाष्ये या वासुदेवेऽनीश्वरासर्वज्ञाशङ्का मूर्खा-णां तां परिहरन्नाह । बहूनीति । बहूनि मे व्यतीतानि अतिक्रान्तानि ज-न्मानि तव च हे अर्जुन ! तान्यहं वेद जाने न त्वं वेत्थ जानीषे धर्म्मा-धर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनः नित्यशुद्धबुद्धमुक्तस्वभाव-त्वात् अनावरणज्ञानशक्तिरिति वेद हे परन्तप ! इति । कथं तर्हि तव नित्येश्वरस्य धर्म्माधर्माभावे जन्मेति ।

उच्यते—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥
( गी० अ० ४ श्लो० ६ )

अजोऽपि=जन्मरहितोऽपि सन् तथाऽव्ययात्माऽक्षीणज्ञानशक्तिस्व-भावोऽपि सन् तथा भूतानां=ब्रह्मादिस्तम्बपर्यन्तानाम् ईशनशीलो-ऽपि सन् प्रकृतिं ममैव वैष्णवीं मायां त्रिगुणात्मिकां यस्या वशे सर्वं जगद्वर्तते यया मोहितः सन् स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्ठाय=स्वीकृत्य सम्भवामि=देहवानिव सञ्जात आत्मनो मा-यया न परमार्थतो लोकवदिति ।

तच्च जन्म कदाचित्किमर्थं चेति ।

उच्यते—

यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम् ॥
( गी० अ० ४ श्लो० ८ )
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ इति ।

वामदेवादितुल्यत्वे हि ज्ञानप्रदमदृष्टविशेषजं स्वजन्माप्युक्तं स्यात् । नारदेनैव व्यासं प्रति न केवलं "यदा यदा ही"त्येव । अप्रतारकत्वात् । न हि वामदेवतुल्यस्य प्रतारणा सम्भवति । किञ्च भावनानामको ध्यानापरपर्य्यायो धर्म्मविशेषः तत्कृतशिवाभेददृष्टौ भगवत उच्यमानायां—

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्म्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्म्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोकाः न कुर्य्यां कर्मचेदहम् ।

इत्यादि लोकसङ्ग्रहमात्रोक्तिर्विरुध्येत । "न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा" इति च वक्तुं न युज्यते ।

किञ्च गीतायाः श्रीकृष्ण परत्वाभावे श्रीकृष्णो देवता न स्यात् । शिव एव देवता स्यात् । न चैतत्सम्भाति । गीतोपक्रमे श्रीकृष्णो देवतेति सर्वत्र पाठात् । भावनादार्ढ्यकृतशिवाभेददृष्टौ च,

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

इति न वदेत् । किञ्च ।

"तानि सर्वाणि संयम्य युक्त आसीत मत्परः" इत्यत्र "मत्परः= अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्पर इत्युक्तं श्रीभाष्यकृद्भिः । तथा "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना" इत्यत्र योगिनामपि सर्वेषां रुद्रादित्यपराणां मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान् श्रद्दधानः सन भजते सेवते यो मां स मे युक्ततमो मत इति । "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यत्र देवस्य महेश्वरस्य विष्णोरित्युक्तम् ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

इत्यत्र ईश्वरः=सर्वज्ञो नारायणाख्य ईशनशील इत्युक्तम् । "ईश्वरः सर्वभूतानां" मित्यत्रापि, ईशनशीलो नारायणाख्य इत्युक्तम् । "मन्मना भव मद्भक्त" इत्यत्र च तत्रैवं वर्त्तमानो वासुदेव एव समर्पितसाध्यसाधनप्रयोजन इति । एवं व्याकुर्वतां च "मयि सर्वाणि कर्माणि संन्यस्य" इत्यादौ मयि देवे सर्वज्ञे परमेश्वर इति साधारणोक्तिरपि नारायणपरैवावसीयते । न तु क्वचिदपि मच्छब्दः शिवपरत्वेन तैरुक्तः । तस्माद्गीतास्वरसात्पूर्वाचार्यव्याख्यानाच्च गीतायाः श्रीकृष्णपरत्वं निर्णीयते ।

यत्तु "दिव्यं ददामि" इत्यादिवाक्ये श्रीकृष्णस्येश्वरविषयो योगः प्रतिपादित इति । तन्न । "न मे पार्थास्ति कर्तव्यम्" इत्यादिना विरोधात् "नृत्यामि योगी सततम्" । "ज्योतिर्मयं प्रपश्यन्ति" स योगी दृश्यते किल", "महादेवं महायोगम्" "ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम्" । "योगेश्वरं रूपमनन्तशक्तिम्" इत्येवमीश्वरगीतायामीश्वरेऽपि योगश्रवणाच्च । "त्वमव्ययः शाश्वतधर्मगोप्ता" इत्यादिवचनबलेनान्यथा व्याख्यानं प्रकृतेऽपि तुल्यम् । श्रीमद्भाष्यकारैरुक्तगीतावाक्यानामविरोधेन व्याख्यानात् । "दिव्यं ददामी" त्यत्र ऐश्वरं ईश्वरस्य मम ऐश्वरं योगं=शक्त्यतिशयमित्युक्तम् । युक्तञ्चैतत । "ईश्वरोऽहमहं योगी" इत्यादौ लोके च स्वामिमात्रे प्रयुज्यमानानामीश्वरेशेशानशब्दानां स्वामित्वादेव शङ्करे प्रयोगोपपत्तौ तन्मात्रनिष्ठस्वाम्यविशेषविषयरूढिकल्पनायोगात् । बर्हिःशब्दस्येव संस्कृते बर्हिषि, पुरुषशब्दस्येव नारायणे । अन्यथाऽथर्वशिखागतपुरुषशब्देनापि तन्निर्देशापातात् । उक्तञ्च पुरुषेश्वरशब्दयोः शिवविष्णुसाधारण्यं क्रमेण—

वाराहकौर्मयोः ।

पुरुषो विष्णुरित्युक्तः शिवो वा नामतः स्मृतः ।
अहं नारायणो योऽहमीश्वरो नात्र संशयः ॥ इति ।

विष्णौ रूढस्यापि पुरुषशब्दस्य शिवाद्यनेकशब्दसमभिव्याहाराच्छिवपरत्ववच्च शिवे रूढस्यापीश्वरशब्दस्य गीतासु विष्णुपरत्वम् । अन्यथा "गदिनं चक्रिण" मित्याद्यनेकशब्दानुपपत्तेः ।

ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषम्—

इत्यत्र तु ततः=पश्चाद् यत्पदं वैष्णवं तत्परिमार्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः । कथं परिमार्गितव्यमित्यत आह । तमेव च=यत्पदत्वेनोक्तस्तं पुरुषं प्रपद्य इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थ इ-

त्युक्तम्। युक्तं चैतत्। एकवाक्यत्वात्। प्रपद्य इति क्रियाया श्रीकृष्णस्य कर्तृत्वे एकस्मिन्श्लोके वाक्यभेदः स्यात्। यदपि न चात्रेत्याद्युक्तेरित्यन्तम्। तदप्यसत्। न हि "प्रसृता पुराणी" इति वर्णसाम्यमात्रेण समानार्थत्वम्। "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" इति श्वेताश्वतरमन्त्रे शिवशब्दश्रवणाद्युक्तस्तच्छब्देन तत्परामर्शः। "ततः परं तत्" इत्यत्र तु पुरुषश्रवणाद्यत इति यच्छब्देन "यदतः परो दिवो ज्योतिः इतिवत्तस्य परामर्शः। पुरुषस्य च सदाशिवसामानाधिकरण्येन गीतापञ्चदशाध्याये समस्तगीतायां वाऽश्रवणात्प्रत्युत श्रीकृष्णसामानाधिकरण्येनैव श्रवणात् शक्तिसाधारण्येऽपि तत्रैव प्रसिद्धतरत्वाचाचार्यैश्च तन्मात्रपरतया व्याख्यानाच्च सदाशिवपरतावगम्यते। अक्षरसाम्यमात्रं तु पशुकामेष्ट्यभ्युदितेष्टिवाक्ययोरिवार्थभेदेऽपि सम्भवति। न हि ये मध्यमा इत्याद्यक्षरसाम्यमिष्टिवाक्ययोरेकार्थत्वमापादयतीत्युपपादितं षष्ठे। श्रुतिस्मृत्योरक्षरसाम्यादैकार्थ्यमिति चेत्। न "महतः परमव्यक्त"मितिश्रुतेः सांख्यस्मृत्यैकार्थ्यप्रसङ्गात्। तथा सति "आनुमानिकमप्येकेषामिति (१)न्यायविरोधात्। उपक्रमैकवाक्यतानुरोधेनैकार्थ्यानाश्रयणं प्रकृतेऽपि तुल्यम्। न च मूलश्रुत्यभावप्रसङ्गः। अनन्तरश्लोकोक्तानादिसंसारवृक्षप्रवृत्तेरप्रोच्यमानाया "विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती"त्याद्यनेकश्रुतिभिः श्रीनारायणहेतुकत्वप्रतिपादनात्। कथं विद्यामित्यस्याग्रिमश्लोके "विस्तरेणात्मनो योगम्" इत्यत्र योगं=योगैश्वर्यं शक्तिविशेषमित्युक्तम। ततश्च "कथं विद्याम्" इत्यत्रापि योगशब्दार्थः स एवेति गम्यते। "योगेश्वर ततो मे त्वम्" इत्यत्र योगिनां योगास्तेषामीश्वर इत्युक्तम्। एवमुक्त्वा तत इत्यत्राप्ययमेव योगशब्दार्थः, एकप्रकरणात्। "यत्र योगेश्वर" इत्यत्रापि योगेश्वरः सर्वयोगानामीश्वरः तत्प्रभवत्वात् सर्वयोगबीजस्येत्युक्तम्। अनुगीतारम्भेऽपि योगशब्दस्यायमेवार्थः। ईश्वरगीतास्वपि, "योगिनामस्म्यहं शम्भुः इत्यत्र तु शम्भोः सदा शिवस्य योगित्वं नारायणस्येव लोकशिक्षार्थम्। न चायं शम्भुः सदाशिवादन्य इति शङ्का प्रमाणाभावात्, अनेकार्थत्वापत्तेश्च। यत्तु विभूतिषु विगणनं नतद्दोषाय यतः पूर्वाचार्यैरुक्तम्। प्रभावातिशयमात्रविवक्षया विभूतित्वं निर्दिश्यत इति। अत एवेश्वरगीतायां "रुद्राणां शङ्करश्चाहम्"। "वीराणां वीरभद्रोऽहम्"। "ईश्वराणां महेश्वरः" "परेषां परमेश्वर" इत्युक्तम्। न

(१) उ० मी० अ० १ पा० ४ अधि० १ सू० १

षेषामनीश्वरत्वम्, प्रमाणाभावात्, अनेकार्थत्वापत्तेश्च, वीरभद्रस्य सदाशिवावतारत्वप्रसिद्धेश्च। यच्च विश्वेत्यादि अभ्युपगन्तव्यमित्युक्तम्। तदप्यसत्। यतो मोक्षधर्मेषु "निहतास्तेन वै पूर्व" इत्यस्य पूर्वश्लोकः—

तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम्।
कालः स एव कथितः क्रोधजेति मया तव॥ इति।

निहतास्तेनेत्यस्योत्तरश्लोकौ।

अप्रमेयप्रभावं तं देवदेवमुमापतिम्॥
नमस्व देवं प्रयतो विश्वेशं हरमक्षरम्।
यस्य ते कथितः पूर्वं क्रोधजेति पुनः पुनः॥ इति।

तत्र पूर्वश्लोके "कालः स एव कथित" इति, "कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः" इति गीतायामित्यर्थः। क्रोधजेति मया तवेति मोक्षधर्मेष्वेव नारायणीये। "यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः" इत्युक्त्वाऽनुपदमेव—

कपर्दी जटिलो मुण्डः श्मशानगृहसेवकः।
उग्रव्रतचरो योगी रुद्रः परमदारुणः॥
दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा।
नारायणात्मको ज्ञेयः पाण्डवेय! युगे युगे॥
तस्मिन् हि पूज्यमाने वै देवदेवे महेश्वरे।
सम्पूजितो भवेत्। पार्थ! देवो नारायणः प्रभुः॥
अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन!।
तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम्॥
यद्यहं नार्चयेयं वै ईशानं वरदं शिवम्।
आत्मानं नार्चयेत्कश्चिदिति मे भाविता मतिः॥
मया प्रमाणं हि कृतं लोकः समनुवर्तते।
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम्॥
यस्तं वेत्ति स मां वेत्ति यो हि तं स हि मामनु।
रुद्रो नारायणश्चेति सत्त्वमेकं द्विधा कृतम्॥
न हि मे केनचिद्देयो वरः पाण्डवनन्दन।
इति सञ्चिन्त्य मनसा पुराणं रुद्रमीश्वरम्॥
पुत्रार्थमाराधितवानहमात्मानमात्मना।
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय वै॥
ऋते आत्मानमेवेति ततो रुद्रं भजाम्यहम्।

सब्रह्मका सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥ इति ।
कालः स एव कथितः क्रोधजेति मया तव ।
यस्य ते कथितः पूर्वं क्रोधजेति पुनः पुनः ॥ इति ।

नारायणीय एव "त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातन" इत्युक्त्वाऽनुपदमेवोक्तम्—

उवाच देवमीशानमीशः स जगतो हरिः ।
यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ॥
नावयोरन्तरं किञ्चिन्मा ते भूबुद्धिरन्यथा ॥ इति ।

एवं पूर्वोत्तरभागयोरुमापतिनारायणयोर्विस्पष्टमभेदावगमेन "मयैवैते निहताः पूर्वमेव" इत्यत्र मच्छब्देन श्रुतिवशान्नारायणविवक्षायां निहतास्तेन वै पूर्वम्" इत्यनेन न विरोधः । स्वयमेव भगवता "कालः स एव कथितः क्रोधजेति मया तव' इति पूर्वोक्तमनुवदताभेदाभिप्रायेण विरोधस्य परिहृतत्वात्, दुर्योधनादिलयाय क्रोधेन रुद्रावतारं सम्पादितवतो भगवतः प्रयोजककर्तृत्वेन "मयैवैते निहता" इति कर्तृत्वोक्तिसम्भवाच्च । अत एव "प्रतिप्रस्थातः! सवनीयान् निर्वपस्व" इति प्रैषमुक्तवतोऽध्वर्योः प्रातरनुवाकानुपास्तिपक्षे स्वप्रेरितप्रतिप्रस्थात्रनुष्ठितत्वेन स्वकर्तृकनिर्वापोपस्थापितं प्रोक्षणादिकमनुष्ठेयं न तु प्रचरणीहोमादिसौमिकमित्युक्तं पञ्चमे(१)। तत्सिद्धं बाधकान्तराभावात्, "मन्मना भव"त्यादौ च बहुषु शब्देषु मुख्ये सम्भवति लक्षणाया अन्याय्यत्वात्, पूर्वाचार्यैश्चाविरोधेन व्याख्यानात्, भगवद्गीतायाः श्रीकृष्णपरत्वम् । एवञ्च—

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥

इति सञ्जयोक्तिः सङ्गच्छते । इतरथा हरस्येति वदेत्, न वदेद्धरेरिति । तस्माद्गीताबलादपि सिद्धं नारायणस्य परमात्मत्वम् ।

ननु क्वचिदार्षग्रन्थेषु "मायाशबलात्परब्रह्मण आकाशस्तदभिमानी सदाशिवश्च जायते ततो वायुस्तदभिमानीश्वरः ततस्तेजस्तदभिमानी रुद्रः तत आपस्तदभिमानी सत्त्वसहितो विष्णुः ततः पृथिवी तदभिमानी च हिरण्यगर्भो जायते' इति श्रूयते । अतो मायाशबलाज्जायमानत्वेन विष्णोस्ततो भिन्नत्वात्कथं परमा-

(१) पू० मी० अ० ५ पा १ अधि १३ सू० २९

त्मत्वमिति चेत्। न। आदिजीवत्वेन तत्र तत्रोक्तस्य हिरण्यगर्भस्यानीश्वरकार्य्यत्वासम्भवेन विष्णवन्तानां परमात्मत्वस्यावश्यवक्तव्यत्वात्, जन्मश्रवणस्य चावतारत्वेनोपपत्तेः। तथा हि। "यो देवानां प्रथमं पुरस्तादिक्षो रुद्रो महर्षिः हिरण्यगर्भं पश्यत जायमानम्" इति हिरण्यगर्भस्य प्रथमत्वं तैत्तिरीयश्रुतावुक्तम्। देवानां प्रथममादिभूतमिति च विद्यारण्यैर्व्याख्यातम्। तथर्ग्वेदे "हिरण्यगर्भः समवर्त्तताग्रे भूतस्ये"ति। "यो ब्रह्माणं विदधाति पूर्वम्"इति च मन्त्रः। सदाशिवादीनामनीश्वरत्वे सदाशिवस्यैव प्राथम्यं वाच्यं न तु हिरण्यगर्भस्येत्येताः श्रुतयः, उपरुध्येरन्। न च छान्दोग्यावगततेजःप्राथम्यस्यैव हिरण्यगर्भप्राथम्यस्यापि मानान्तरानुरोधेन बाधः शङ्क्यः, छान्दोग्यमात्रगतप्रथमया कल्प्यतेजःप्राथम्यस्य श्रुत्यन्तरसिद्धेनानन्यथासिद्धवियदुत्पत्तिपदार्थेन बाधेऽपि बहुश्रुतिषु श्रूयमाणहिरण्यगर्भप्राथम्यस्य स्मार्त्तेनान्यथोपपद्यमानेन च सदाशिवाद्युत्पत्तिश्रवणेन बाधायोगात्। किञ्च, अविद्योपाधेश्चित्स्वरूपस्य च स्वरूपानादित्वेनानीश्वराणामुत्पत्तिर्लिङ्गशरीरात्मनेति सर्वसिद्धान्तः। न च सदाशिवादिविष्णवन्तानां लिङ्गशरीरात्मनोत्पत्तिः सम्भवति। तस्या पञ्चीकृतपञ्चभूतकार्य्यत्वात् पृथिव्याः पूर्वमुत्पत्त्यसम्भवात्। नापि स्थूलशरीरात्मनोत्पत्तिः, तत्र लिङ्गशरीरं विना चेष्टाऽयोगेनोत्तरकार्य्यजनकत्वायोगात्। प्राज्ञतैजसविश्वानामानन्दमयादिकोशानां चोत्पत्तौ क्रमावश्यम्भावेन लिङ्गशरीरानन्तरमेव तदुत्पत्तेश्च। स्थूलस्य पञ्चभूतकार्य्यत्वेन तदवस्थायां सुतरामयोगाच्च। मायाशबलावतारत्वे तु मायायाः स्वाश्रयाव्यामोहकत्वेन तेषां स्वतः सर्वज्ञत्वात् सर्वशक्तित्वाच्चेति मायिकलीलाविग्रहात्मनोत्पत्तेरुत्पादनस्य चोपपत्तिः। अत एव श्रीभागवतम्। "मायामयस्य न तु भूतमयस्य" इति। न चानीश्वराणां मायिकविग्रहसम्भवः, पूर्वकल्पस्थमौलिकलिङ्गशरीरसंस्कारवतामभीषां भौतिकलिङ्गशरीरोत्पत्तेरवश्यम्भावात्, हिरण्यगर्भस्य तु भूतसृष्टिसमनन्तरभाविनो भौतिकलिङ्गशरीरात्मनोत्पत्तिः साम्प्रदायिकैरुक्तेति युक्तमस्यानीश्वरत्वम्। किञ्च बृहदारण्यके अक्षरब्राह्मणे आकाश एव तदोतं च प्रोतञ्चेत्यवधारणेनाऽब्रह्मव्युदासेनाकाशशब्दिते मायाशबले परब्रह्मणि सूत्राख्यहिरण्यगर्भस्यौतत्वप्रोतत्वमुक्तं, तद्विष्णवन्तानामनीश्वरत्वे न घटते। तथा हि अत्र न तावत् तच्छब्देन समष्टिलिङ्गशरीरात्मकं सूत्रं स्वीकृत्य तस्य भूताकाश ओतत्वं प्रोतत्वं च वक्तुं शक्यम्। लिङ्गशरीरस्य पञ्चभूतेषु अज्ञाने चोतत्वप्रोतत्वेनावधारणा-

योगात्। अत आकाशशब्दं मायाशबले वाचस्पतिमिश्रोक्तरीत्या गौणं स्वीकृत्य पञ्चपादिकाकृदुक्तरीत्या वाचकं वा स्वीकृत्य चेतनस्य हिरण्यगर्भस्योपाध्यात्मनोत्पत्तिरीश्वरायत्तेत्याशयेन तस्मिन्नोतत्वप्रोतत्वप्रतिपादनं वाच्यम्। तच्च मायाशबलावतारत्वेन विष्णवन्तानां मायाशबलत्वे सम्भवति। अन्यथाऽवधारणायोगतादवस्थ्यात्। न च यस्मिन् हिरण्यगर्भ ओतश्च प्रोतश्च साक्षात् स एव विष्णुः, अनीश्वरोऽप्याकाशशब्दित इति शङ्क्यम्। अनीश्वर ओतप्रोतस्य मायाशबल ओतप्रोतत्वावश्यम्भावेनावधारणायोगतादवस्थ्यात्। "आकाशो वै नामरूपयोर्निर्वहिता" "दहरोऽस्मिन्नन्तराकाशः" आकाश इति होवाच" इत्यादावाकाशशब्दस्य मायाशबले प्रसिद्धत्वाच्च। अनीश्वरपरत्वे "अनतिप्रश्न्यां वै देवताम्" इति प्रश्नस्तुत्यनुपपत्तेः। परमकारणप्रश्नस्यावश्यकर्तव्यत्वेन नमोऽस्तु याज्ञवल्क्यायेति समाप्त्ययोगाच्च। उक्तञ्चाचार्यैः सूत्रात्मकं जगदव्याकृत आकाशे आहिवत्र पृथिवी त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये चेति। उक्तस्यैवार्थस्यावधारणार्थं पुनः प्रश्नप्रतिवचनमुच्यत इति। तदिदं भाष्यं वार्त्तिके तत्तच्छ्रुत्युपन्यासपूर्वकं व्याख्यातम्।

आकाशवचसात्मैव ज्ञेयो नान्योऽत्र कश्चन।
सर्वान्तरत्वं नान्यस्य युज्यतेऽनात्मनो यतः॥
आकाशो वा इति तथा ब्रह्मैव श्रुतिरब्रवीत्।
कारणं चात्मनो नान्यत्त्रय्यन्तेषूपपद्यते॥
जगज्जनिस्थितिध्वस्तिनियमाद्यर्थकार्यपि।
नात्मनः कारणादन्यत् किञ्चित् सम्भाव्यते श्रुतेः॥
एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययः।
माण्डूक्यश्रुतिवच इति स्पष्टमधीयते।

योनिः=उपादानम्।

नातोऽन्तर्यामिणः कल्पमन्यदव्याकृतं बुधैः।
सर्वस्यैष वशीत्युक्त्वा यतस्तस्यैव वेद्यताम्॥
यत्नात्प्राह श्रुतिस्तस्याद्यन्ता व्याकृतमुच्यते॥ इति।

अत्रानन्दगिरीयम्। यथा पारम्पर्येण पृथिव्यादेराकाशे लयः, तथा सूत्रस्यापि, किं वा साक्षादित्यभिप्रेत्य पुनः प्रश्ने पृथिव्यादिवदनेकत्र सूत्रस्य न लयः, किन्त्वाकाश एवेत्यवधारणेन सिद्धमिति। तस्मादेतत्पूर्वाचार्यव्याख्यातानेकश्रुतिवशादपि न विष्णवन्तानामनीश्वरत्वं युक्तम्, आचार्यैश्च नारायणस्य विस्पष्टमन्तर्यामित्वमुक्तम्। यः ईशः=ईश्वरो नारायणाख्यः पृथिवीं देवतामन्तरो यमयतीत्यादिना।

वार्तिककृद्भिश्च-

सूत्राद्ध्यन्तरतमस्त्वन्तर्याम्यधुनोच्यते।
कार्य्यकारणभावोऽयं यस्मिन्नुक्ते समाप्यते॥
कृष्णद्वैपायनो व्यासो वेदात्मा ध्वान्तहानिकृत्।
प्राहैतमेव वटुः प्राणिनां हितकाम्यया॥
नारायणः परो व्यक्तादण्डमव्यक्तसम्भवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्त द्वीपा च मेदिनी॥
तस्मै नमोऽस्तु देवाय निर्गुणाय गुणात्मने।
नारायणाय विश्वाय देवानां परमात्मने॥

गुणात्मने=इति सत्त्वोपहितायेत्यर्थः। अन्तर्यामित्वं च पारमेश्वरधर्म्मत्वेन 'अन्तर्याम्यधिदैवादिषु तद्धर्म्मव्यपदेशात्'' इत्यत्रोक्तम्। "नारायणः परो व्यक्तादिति द्वैपायनोपबृंहणेन च "अव्यक्तात्पुरुषः परः" पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति श्रुत्यर्थत्वेन निर्णीतस्य सत्त्वोपहितनारायणस्य स्वरूपेण सदाशिवादिभ्योऽपरत्वायोगात् उत्पत्तिः, अवतारत्वाभिप्रायेणेति निर्णीयते। सत्त्वस्यानादित्वेन तदुपहितस्यानादित्वाच्च। "क्षयन्तमस्य रजसः पराके" "अनादिनिधनं विष्णुम्" इत्यादिश्रुतिस्मृतिभ्यश्च।

अस्य=प्रतीयमानस्य रजसः कार्य्यप्रपञ्चस्य पराके=परे पारे क्षयन्तम्=वसन्तमिति श्रुतेरर्थः। "यास्तु यं पृथिवी न वेद यमापो न विदुः" इत्यादिश्रुतयः तास्वहं पृथिव्यहमाप इत्येवमभिमानवत्यो भूतसृष्टिसमनन्तरं भाविन्योऽन्या एव देवता उक्ताः। भाष्यकारैरन्तर्याम्यधिकरणे पृथिवी देवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयादिति निर्देशात्। पुराणेषु धरण्युवाचेत्यादिव्यवहाराच्च। न हि हिरण्यगर्भो पृथिवीति न वेद नापीश्वरं न वेद। "ज्ञानमप्रतिघं यस्य" त्यादिविरोधात्। तथोक्तानेकमानैर्जगदीश्वरस्य भाष्यवार्तिककारैरन्तर्यामितयोक्तस्य नारायणस्याहमाप इत्यभिमानोऽन्तर्याम्यन्तरप्रेर्यत्वमीश्वराज्ञानं वा सम्भवति तस्माद् भूताभिमानिदेवताकार्य्यभूतोत्तरभूतसृष्टिहेतोर्भगवानेव चतुरोऽवतारानकरोदिति वक्तव्यम्। "तत्तेज ऐक्षत ता आप ऐक्षन्त" इत्यत्र चाप्तेजःशब्दौ परेत्यादिपूर्वश्रुतावेकवचनान्तपुरुषशब्दोक्तस्य जीवस्याण्डजादिभेदत्वेन प्रतिपादितस्यैवेदमा परामर्शात् ? बहुत्वेन स्त्रीत्वेन चोपस्थितानां देवतानां पुल्लिङ्गैकवचनान्तसर्वनाम्नोक्त्ययोगाच्च। यथा बहुत्वेनोपस्थितानां ग्रहाणां "बार्हस्पत्यं ग्रहं गृह्णाति" इत्यत्र तद्धितान्तगतसर्वनाम्ना न ग्रहनिर्देशस्तद्वत्। अधिष्ठानाधिष्ठेययोरभेदमारोप्य कर्म-

त्वेन निर्दिष्टानां देवतानां कर्तृत्वायोगाच्च । अत एव तत्र जीवब्रह्मैक्य-प्रमाणत्वेनैतद्वाक्यमुदाहृतमाचार्यैः । न ब्रह्मणोऽन्यो जीवः, "अनेन जीवेनात्मनाऽनुप्रविश्य" इतिश्रुतेरिति टीकादौ । यदि च श्रीनारायण-स्यैवावधिष्ठानत्वेनैतच्छ्रुतिप्रतिपाद्यत्वादनीश्वरत्वम्, तदा "वेदैश्च सर्वैरहमेव वेद्यो" "नारायणपरा वेदा" इति च न सङ्गच्छेत, वेदाना-मनीश्वरपरत्वायोगात् । श्रुतश्च विष्णुपरत्वं तेषां हरिवंशेऽपि विष्णुम-हिम्नो निरूपणमुपक्रम्य । तथाहि—

य एको विश्वमध्यास्ते प्रधानं पुरुषो हरः ।

हरिरिति बहुपुस्तकेषु पाठः ।

प्रकृत्या यं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ।
तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ॥
तस्यात्मा प्रथमो देवो विष्णुः सर्वस्य धीमतः ।
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी ॥
व्यक्तः सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ।
रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः ॥
अव्यक्ता प्रकृतिर्देवी गुणी देवो महेश्वरः ।
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम ! ॥
गुणिनश्चाव्ययस्यैव सदारः प्रथमो गुणः ।
नारायणो महातेजाः सर्वकृल्लोकभावनः ॥
भोक्ता महेश्वरो देवः कर्ता विष्णुरधोक्षजः ।
ब्रह्मा देवगणाश्चान्ये येन सृष्टा महात्मना ॥
महादेवेन देवेशा प्रजापतिगणास्तथा ।
पुराणपुरुषो देवो विष्णुर्वेदेषु पठ्यते ।
अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥ इति ।

अस्यार्थः साम्प्रदायिकैरेवमुक्तः । य एकः=सजातीयविजातीयभेद-शून्यः । प्रकृत्या=मायया विश्वमध्यास्ते=इति । मायोपहितमेव परंब्रह्म हर-शब्देन हरिशब्देन वा निर्दिष्टो नह्यत्र प्रकृतिशब्देन हरिहरशक्ती रमोमे वक्तुं युक्ते, तयोरपि चिद्रूपत्वेनासङ्गत्वाविशेषात् स्वरूपेण विश्वाधा-रत्वानुपपत्तेः । "प्रकृत्याः प्रथमो भाग उमा देवी" इत्यस्यानुपपत्तेश्च । तस्याव्यक्तस्य=मायोपहितस्य । व्यक्त=उपाध्यन्तरसत्त्ववशाद्व्यक्ततामापन्नो विष्णुशब्दोदितो देवः । व्यक्तः सर्वमयो विष्णुः, इत्यनन्तरोक्तेः । "भाग इव मायोपहितमेव गुणोपाधित्रयेण त्रिधा भूतः" इति मैत्रेयश्रुत्या प्रतिपा-दनात् । तस्य=सत्त्वोपहितपरब्रह्मणः, भागो देवः=श्रीकृष्णः, साक्षात् सर्वस्य

धीमतः=प्रथमो निमित्तं आत्मा=स्वरूपं विष्णुरिति विधीयते । "कृष्णस्तु भगवान् स्वयम्" इतिवत् । अतोऽस्याज्ञानातिक्रमणीयेति भावः । यस्य येनार्थसम्बन्ध" इति न्यायेन(१) प्रकृत्याः प्रथमो भाग इत्यर्थम्, अव्यक्ता प्रकृतिरित्यतः पूर्वं द्रष्टव्यम । तच्च स्वातन्त्र्येणोमां प्रतिपादयति । अव्यक्ता प्रकृतिरित्यत्र तु महेश्वरगुणत्वेनेति पुनर्देवीपदपाठो न दोषाय । श्रीकृष्णाज्ञावत् तत्पत्नीनामपि साऽनतिक्रमणीयेत्याशयेनाह । व्यक्त इति । मोहिन्यादिस्त्रीरूपतां स्वस्मिन् सञ्जानातीति प्रासंङ्गः । सर्वमयत्वेन सर्वं कर्तुमस्य सामर्थ्याद् दैत्यसम्मोहनार्थं मोहिनीरूपस्वीकारवद् रुक्मिसत्राजिदादिवधाद्यर्थं रुक्मिण्यादिरूपस्वीकारसम्भवात् तदाज्ञाऽप्यनतिक्रमणीयेत्याशयः । न हि पुरुषोत्तमत्वेनातिप्रसिद्धस्य स्त्रीसंज्ञपदाभिहितं स्त्रीत्वं यथाश्रुतं वक्तुञ्च शक्यम्, प्रकरणविरोधात् । यदा किल पारिजातप्रार्थनार्थं भगवतेन्द्रं प्रति प्रेषितेन नारदेन नानाविधैः, उपायैः प्रार्थित इन्द्रो न पारिजातं दातुमैच्छत् तदैतानि वचनानि स महर्षिरुदाजहार "संहारस्ते भविता" इति भयमप्यभावयत्, न च स्त्रीरूपत्वं भयोपयोगीत्युक्तव्याख्यानमेव युक्तम् । अनतिक्रमणीयत्वे हेत्वन्तरं प्रथमो गुण इति । प्रधानमहिषीत्वादनतिक्रमणीया इत्याशयः । तत्रैव हेत्वन्तरमाह प्रकृत्या इति सार्द्धेन । उमाविग्रहः स्वेच्छाकृतोऽज्ञानकार्यं न तु भूतमय इत्यर्थः । रुद्रग्रहणेन रुद्रस्य संहारहेतुत्वं प्रसिद्धम् । तदविशेषादस्य तदाज्ञाया अनतिक्रमणीत्वम् । अन्यथा ऽनेन तव संहारः स्यादिति भावः । उमामहेश्वरौ निर्दिश्य रुद्राद्विष्णोर्विशेषाभावं वदन् रमाया उमाया अविशेषं सूचयामास । तं प्रकस्यति । गुणिन इति । अयमाशयः । मार्कण्डेयपुराणात् "चतूरूपं न भिद्यते" इति वचनान्तराच्च सत्यपि उमाशब्दवाच्यस्य विग्रहविशेषोपहितचैतन्यस्येश्वरत्वाविशेष विग्रहस्य कार्यत्वेन प्रतिकल्पं भेदाद्विष्णुरुद्रोपाध्योः सत्त्वतमसोरनादित्वेनाव्ययत्वादस्ति ताभ्यामस्या विशेषः, न तु तयोः परस्परं कश्चित् । गुणयोरनादित्वाविशेषात् । "एक एव रुद्र एको दधार" इत्याद्यनेकोक्तप्रमाणैरुभयोरीश्वरत्वाविशेषावधारणाच्चेति । तादृशस्य श्रीविष्णोः सदारः श्रीकृष्णः प्रथमो गुणः=मुख्योऽवतार इत्यर्थः । आज्ञानतिक्रमे हेत्वन्तरं प्रोक्तेति । अयं हि पालनकालः, अत्र, महेश्वरः केवलं पश्यति पालनकर्ता त्वयमेव । अतस्त्वत्पालनहेतुत्वेन तवोपजीव्य

(१) यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥
इति पूर्णश्लोकः ।

इत्याशयः। त्वज्जनकजनकत्वेनाप्युपजीव्य इत्याह। ब्रह्मेति। ब्रह्मा=विराट्। प्रजापतयः=कश्यपाद्याः। न तु गुणमूर्त्तीनां सृष्टिः सम्भवति। गुणानामनादित्वेन तासामनादित्वात्। नन्वस्यापि जन्म श्रूयते। अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं बभूव। तस्मिन् ब्रह्मा विष्णुर्जायते जातवेदा इति रुद्रान्नारायण इत्यपि क्वचित्पुराणेषु श्रूयते। सत्यम्। तत्तु ब्रह्मादिप्रार्थनावशात् वराहादिवज्जन्महाभूतस्थापनाय भक्तानुग्रहायावताररूपेण लीलाविग्रहस्वीकारमात्रं, न अश्वमेधोपासनया हिरण्यगर्भजन्मेव श्रीविरूपाक्षस्य श्रीनारायणस्य वा कर्ममूलत्वेन तच्छ्रुत इत्याशयेनाह पुराणपुरुष इत्यादि। तस्मादनेकश्रुतिपुराणवचनवशात् सिद्धं हरिहरयोरीश्वरत्वम्। यथा रामकृष्णादीनां श्रीनारायणरूपता यथा वा वीरभद्रादीनां श्रीसदाशिवरूपता। एतावांस्तु विशेषः। तत्तदवताराणां स्वेच्छानिर्मितकादाचित्कपरिच्छिन्नतत्तल्लीलाविग्रहोपाधिकत्वेन परिच्छिन्नत्वादिव्यवहारः। अवतारिस्वरूपस्य तु तदनवच्छेदेनाप्यवस्थानं व्यापकोपाधित्वात्। नैवं गुणोपाधिकेषु। गुणानामनादित्वात् मायामभिव्याप्य वर्त्तमानत्वाच्च। एवञ्च यथा वस्तुतः, अखण्डमद्वितीयं चैतन्यं स्वरूपेणापरिच्छिन्नमपि अनादिभावरूपाज्ञानस्य चिन्मात्रनिष्ठत्वेन(१) व्यापकत्वात् तदवच्छिन्नं सत् साक्षिरूपतामापन्नं साक्षिरूपेणैवावतिष्ठते न तदज्ञानानवच्छिन्नं पृथगिति। अज्ञानं वा मिथ्यास्य अस्ति शक्तिद्वयम्। आवरणशक्तिर्विक्षेपशक्तिश्च। तत्रावरणशक्तिप्रधानं अज्ञानम् अविद्या, विक्षेपशक्तिप्रधानमज्ञानं च माया। तदुपाधिद्वययोगात् साक्षिचैतन्यं, जीवेश्वररूपेणैवावतिष्ठते न तु तदनवच्छिन्नं पृथगपि। अज्ञानस्य शक्तिद्वयस्य च धर्मधर्मिभावेन सापेक्षोपाधित्वाच्छक्तिद्वयस्य व्यापकत्वाच्च। एवं "देवात्मशक्तिं स्वगुणैर्निगूढाम्"इत्यादिवाक्येभ्यः सत्त्वादीनां मायागुणत्वावगतेर्गुणगुणिनोश्चाभेदेन सापेक्षोपाधित्वाच्च मायाशबलेश्वरचैतन्यं, अनादिसिद्धतदुपाधित्रययोगाद्विष्ण्वादिरूपेणैवावतिष्ठते न तु पृथक्। मायाशबलेश्वररूपत्वं विष्ण्वादीनां विस्पष्टमुक्तं कूर्मपुराणे। "सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरः स्वयम्" इत्यादिना। तथा—

अहं नारायणो गौरी जगन्माता सनातनः।
विभज्य संस्थितो देवः स्वात्मानं बहुधेश्वरः॥ इति।

---

(१) तदुक्तं सङ्क्षेपशारीरके।

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥ इति।

अत्र, सर्वत्रेश्वर इत्यनेन "मायिनं तु महेश्वरम्" इतिश्रुत्युक्तमायाशबलपरामर्शः । अहमित्यनेन गुणविशेषोपाधिकस्य साम्बशिवस्य परामर्शः । अत एवात्रैवास्यैव वचनम् । "मामेव केशवं देवमाहुर्देवीमिहाम्बिकाम्" इत्युक्त्वा ।

एष धाता विधाता च कारणं कार्य्यमेव च ।
भोक्ता पुमानप्रमेयः संहर्त्ता कालरूपधृक् ॥
कर्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः ।
स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः ॥
कूटस्थो ह्यक्षरव्यापी योगी नारायणाह्वयः ।
कारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥

इत्यनेन प्रागुक्तं केशवमुपवर्ण्य प्रागुक्ताम्बिकावर्णनम्—

सैषा माहेश्वरी माया मम शक्तिर्निरञ्जना ।
शान्ता सत्या परानन्दा परं पदमिति श्रुतिः ॥
अस्याः सर्वमिदं जातमत्रैव लयमेष्यति ।
एषैव सर्वभूतानां गतीनामुत्तमा गतिः ॥

इत्यनेन कृत्वा—

तयाहं सङ्गतो देव्या केवलो निष्कलः परः ।
पश्याम्यशेषमेवेदं यस्तद्वेद स मुच्यते ॥
तस्मादनादिमध्यान्तं विष्णुमात्मानमीश्वरम् ।
एवमेकं विजानीध्वं ततो यास्यथ निर्वृतिम् ॥ इति ।

एवमिति=सत्यपि गुणोपाधिकभेदे, ईश्वररूपेणेत्यर्थः । माहेश्वरीति । महेश्वरशब्दोदितमायाशबलोपाधिर्मायाया अधिष्ठात्री । अत एव मम शक्तिः=कारणत्वनिर्वाहिका । मायायाः कारणत्वनिर्वाहकत्वेन तदधिष्ठात्र्या अपि तत्त्वात् । अत एवाह तयेति । वस्तुतः असङ्गस्यापि अशेषद्रष्टृत्वं तत्कृतमित्यर्थः एवञ्च य एव निष्कलः शिवशब्दोदितः, अम्बया सङ्गतत्वेनोक्तः । तदनन्तरम् "अहं नारायणो गौरी" इति पूर्वोक्तेनासमर्थो निर्णीयते [illegible] गौरीरूपेण ईश्वरशब्दोदितमायाशबलमवलम्ब्य इति । न चाहं महेश्वरो नारायणगौरीरूपेणेत्यन्वयः शङ्क्यः, व्यवहितान्वयापत्तेः, [illegible] गाढं अस्मिन् वचसि विभज्येति तत्तल्लीलाविग्रहभेदेन । अत्र गुणकृतो भेदो ब्रह्मादीनामित्यनन्तरमेवोक्तम् । गौर्यादिस्तु लीलाविग्रहतया परमेश्वरमेव चैतन्यं मायिकलीलाविग्रहोपाधिना गौरीति व्यवह्रियते । एवं

लक्ष्मीः । सापि ईश्वररूपतया—

यस्य सा जगतां माता शक्तिस्तद्धर्मधर्मिणी ।
माया भगवती लक्ष्मीः-

इत्यादि कूर्म्मपुराणादिषु श्रूयते ।

अत्र मातेति जगत्स्रष्टृत्वम् । शक्तिरिति कारणत्वनिर्वाहकत्वम् । तस्यास्याः कारणत्वनिर्वाहकमायाऽधिष्ठातृत्वात् । तद्धर्म्मधर्म्मिणीति पूर्वोक्तश्रीवासुदेवस्य ये धर्म्मा नित्यसर्वज्ञत्वादयस्तद्वत्त्वम् । मायेति तदधिष्ठातृत्वम् । भक्तानुग्रहार्थं नानाकूर्म्मादिलीलाविग्रहस्वीकारेण भगवतोऽमृतमन्थनस्त्रीव लीलाविग्रहद्वयस्वीकारेण परमात्मनो गौरीरूपेण लक्ष्मीरूपेण च मायाधिष्ठातृत्वम् । उभयोस्तत्र तत्र तच्छ्रवणात् । भगवतीति-

उत्पत्तिं च विनाशञ्च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥

भगवद्रूपतामाह ।

तस्मिन्नं पारमेश्वरमेव चैतन्यं मायिकस्त्रीलीलाविग्रहद्वयस्वीकारेण गौरीति लक्ष्मीरिति च व्यवह्रियते । गुणत्रयोपाधियोगात्तु विष्ण्वादिरूपेण । गुणत्रयस्य चानाद्यनन्तत्वात् तदुपाधिकानामपि तथात्वम् । अत एव चोक्तम् । "तस्मादनादिमध्यान्तं विष्णु"मिति । महाभारतेऽपि । "अनादिनिधनं विष्णु"मिति । श्रीसदाशिवस्यापि तत्र तत्रानादित्वश्रवणं तदुपाधेर्गुणविशेषस्यानादित्वात् । अनयोरेव तत्तद्गुणविशेषोपाधिकयोः क्रमेण रामकृष्णाद्या वीरभद्राद्याश्चावताराः ।

ये तु लाघवतर्कवशेन एकमेवेश्वरं स्वीकृत्य गुणत्रयानाश्रयणेनैकस्यैवेश्वरस्य विष्ण्वाद्याः संज्ञा इत्याहुः, तेषां पुराणेषु व्यवस्थया एतदवतारश्रवणं न सङ्गच्छते । यथा वीरभद्राद्याः शिवसंज्ञस्य शङ्करसंज्ञस्य चावताराः, एवं विष्णोरप्यवतारा इति प्रसिद्धिः स्यात्, लीलाविग्रहविशेषमात्रोपाधित्वेऽपि किं वैकुण्ठवासिनः क्षीराब्धिवासिनो वावतारा इति विनिगमकाभावः, लीलाविग्रहाणां च तुल्यत्वेनावतारकल्पनानुपपत्तिः । अनित्यविग्रहोपाधिकानाञ्च "अनादिनिधनं विष्णु"मिति व्यवहारायोगः । नित्यविग्रहस्वीकारे "अपाणिपादः" इत्यादिबहुश्रुतिविरोधः, अपसिद्धान्तश्च । गुणविशेषाश्रयणे तेषामनुमानासिद्धत्वेन श्रुतिपुराणवाक्येभ्यः सिद्धौ तत एव तदाधारमायाया अपि जगदुपादानत्वसिद्धौ परमाण्वादिकल्पना वृथैवेति वेदान्तसिद्धान्त एव युक्त इति ।

येऽपि वेदान्तिमते स्थित्वा बिम्बचैतन्यमीश्वर इत्याहुः । तन्मतेऽपि

अनेकत्वेऽपि प्रतिबिम्बेषु बिम्बस्य लोके एकत्वदर्शनादवताराणां व्यवस्थाश्रवणं न सङ्गच्छते । गुणविशेषोपाधित्वाश्रयणे तु तदाधारतदभिन्नमायाया उपाधित्वावश्यंभावेन लोकवेदापरिज्ञातबिम्बस्य सोपाधित्वकल्पनायोगः, लोके बिम्बस्य शुद्धत्वेन प्रसिद्धेः । बिम्बस्य च लोके प्रतिबिम्बदेशानवस्थानदर्शनेनान्तर्यामित्वानुपपत्तिः ।

एतेन सत्त्वमात्रोपहित एक ईश्वर इत्यप्यपास्तम् । अवतारव्यवस्थानुपपत्तेस्तुल्यत्वात्, "मायिनं तु महेश्वरम्" इत्यादिप्रमाणेभ्यो मायोपाधिकत्वावश्यंभावाच्च । न च मायाशब्दाभिधेयं सत्त्वमेवेति शङ्क्यम् । आचार्यैर्विक्षेपशक्तिप्रधानाज्ञानस्य मायाशब्दाभिधेयत्वनिर्देशात् । मायिकतया लोके प्रसिद्धस्य च व्याघ्रादेरधिष्ठानाज्ञानकार्य्यत्वसम्भवात् तत्त्वज्ञानजननस्वभावसत्त्वगुणकार्य्यत्वायोगाल्लोकवेदयोश्च शब्दार्थैक्यान्न मायाशब्दाभिधेयं सत्त्वम् । अवश्यमेषाऽविद्या शक्तिरित्यादौ मूलाज्ञानवाचकतया प्रसिद्धाविद्याशब्दसामानाधिकरण्येन मायाशब्दस्य विवरणाचार्य्योदाहृतश्रुतिस्मृत्यादौ प्रयोगाच्च । सत्त्वस्य च निर्विषयत्वेन तदुपादानकस्य जगतो ब्रह्मोपादानकत्वं न स्यात् । सम्भवति तु विवर्त्तमानाज्ञानविषयत्वेन ब्रह्मण उपादानत्वं शुक्तेरिव रजतं । एवञ्च "मायां तु प्रकृतिं विद्या"दित्यादौ विक्षेपशक्तिप्रधानाज्ञानस्यैव प्रकृतित्वोक्तिसम्भवात् तदेव मायाशब्दाभिधेयमुक्तश्रुतिपुराणप्रामाण्यादीश्वरोपाधित्वेन निर्णीयते, तदुपहितेश्वरस्यैव च तन्निष्ठतदभिन्नतत्तद्गुणविशेषोपाधियोगात्, विष्ण्वादिरूपत्वम् । मायायाश्च स्वाश्रयाव्यामोहकत्वात्सर्वेषां गौरीलक्ष्मीसहितानां नित्यसर्वज्ञत्वम् । अत एव न तेषां कदापि व्यामोहः । ननु 'प्रमादमोहौ तमस' इत्यादिस्मृतेस्तमसोपहितेश्वरस्य मोहप्रसक्तिरिति चेत् तर्हि 'न ह वै सशरीरस्य प्रियाप्रिययोरुपहतिरस्ति" इति श्रुतेः कर्पूरगौरमेघश्यामशरीरिण ईश्वरस्य प्रियाप्रियं प्रसज्येत । अथेश्वरस्य रागादिदोषाभावाज्जीवाधिकारैषा श्रुतिः, तर्हि मायोपहितस्यैव तमसोपहितत्वान्मायायाश्च स्वाश्रयाव्यामोहकत्वात्स्मृतिरपि जीवाधिकारेति न तमसोपहितत्वेन कोऽप्यपकर्षः, सममेव तु मायोपहितत्वेन विष्ण्वादीनामैश्वर्य्यम्, अत एव सत्यपि गुणोपाधिके भेदे तेषां तत्र तत्राभेदव्यवहारः । चैतन्ये हि वस्तुतो भेदो नास्त्येव । अस्मदादीनां भ्रान्त्या तद्व्यवहारः । मायायाः स्वाश्रयाव्यामोहकत्वान्न तत्र सति तेषामभेदव्यवहारः । यथा कश्चिद्योगी अनेकानि शरीराणि विधाय तेषु स्वस्य सदासत्त्रीस्वामिभावं व्यवहरन्नपि न स्वात्मानं भिन्नं मन्यते, नापि स्वस्मिन् स्त्रीत्वं वस्तुतः पश्यतीति तद्वत् । तथा च शिववचनम् ।

लैङ्गे—

त्रिधाभिन्नोऽस्म्यहं विष्णो ! ब्रह्मविष्णुभवाख्यया । इति ।

नारायणवचनं-नारायणीये—

नावयोरन्तरं किञ्चिन्मा ते भूद्बुद्धिरन्यथा ॥ इति ।

गौरीवचनम् । कौर्मे—

त्वं हि नारायणः साक्षात्सर्वात्मा पुरुषोत्तमः ।
प्रार्थितो दैवतैः पूर्वं जातो वै देवकीसुतः ॥
पश्य त्वमात्मनाऽऽत्मानममलं परमं च यम् ।
नावयोर्विद्यते भेद ऐक्यं पश्यन्ति सूरयः ॥ इति ।

यथा च योग्यनेकदेहैः कृतेष्वपि कार्य्येषु कर्तृत्वमेकदेहावच्छेदेनैवा-परदेहावच्छेदेनापि व्यवहरति, मयैतदखिलं कृतमिति । तद्वत् "अहमेव हि संहर्ता स्रष्टाहं परिपालकः" इति हरवचनम् । "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" इतिहरिवचनं च । न चैतावता शास्त्रदृष्ट्यन्याय प्रसक्तिः । नित्यसर्वज्ञत्वेन भ्रान्तिसिद्धभेदस्यैतान्प्रति कदाप्यप्रसक्तेः । योगिन इव स्वरूपे । न हि योगी स्वीयानेकदेहान्तरकार्य्यकर्तृत्वं देहान्तरे मन्यमानः "शास्त्रदृष्ट्या तूपदेशः" इति(१)न्यायविषयो भवति । एवं त्रयाणां गुणोपहितानां ब्रह्मविष्णुशिवानामीश्वरत्वं न तु ब्रह्मणः पृथक् मायोपहित इति सिद्धम् ।

विष्णुपुराणवचनम् । [ अंश १ अध्या० २२ श्लो० ३०-३२ ]

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालस्तथैवाखिलजन्तवः ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥ इति ।
रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्द्धा प्रलयायैता जनार्द्दनविभूतयः ॥ इति ।

तत्र सत्त्वोपहितं विभूतिमत्त्वेनाङ्गीकृत्य विभूतित्वेनावतारा व्याख्येयाः । तेषां च सत्यपीश्वरत्वे लोकसङ्ग्रहार्थं सेवकभावाङ्गीकाराद्विभूतित्वोक्तिः । एवं तापनीये ब्रह्मा विष्णुर्महेश्वर इत्याद्यारभ्य "सर्वं यो श्रीनृसिंहो देव" इत्यपि गुणविशेषोपाधिकस्यावतारित्वे श्रीनृसिंहस्य चावतारत्वे तदुपासनायां वचनबलात् ब्रह्मविष्णुमहेश्वरशब्दप्रतिपादितानां अवतारविशेषाणां शेषत्वाध्यवसानम् । एवं—

उमार्द्धविग्रहा शुद्धा त्रिनेत्रा चन्द्रशेखरा ।
नीलग्रीवा परानन्दप्रमोदा ताण्डवप्रिया ॥

---

(१) उ० मी० अ० १ पा० १ अधि० ११ सू० ३०

ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्त्तिभिः ॥

इत्यादौ सत्यपि गुणविशेषोपाधिकब्रह्मणः अवतारित्वे ताण्डवप्रियस्य चावतारत्वे तदुपासनाङ्गत्वेन ब्रह्मविष्णुशब्दोदितगुणमूर्त्यवताराणां शेषत्वाध्यवसानम्।

तथा—

साक्षात् परतरस्यैव वस्तुनः सर्वसाक्षिणः।
अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी ॥
तस्याऽसाधारणी मूर्तिः साम्बा चन्द्रार्द्धशेखरा।
ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरम् ॥

इत्यत्र साक्षात् परतरस्यैवेत्यनेन मायाशबलमुक्तम्। अस्तिमूर्तिरित्यनेन तदेव गुणविशेषोपाधिकम्। तस्यासाधारणीत्यनेन गुणविशेषोपाधिकस्यैव मायाशबलस्यावताररूपा काचिन्मूर्तिः। ब्रह्मविष्णुमहेशानशब्दोदितानां तु अवतारविशेषाणां ध्यातृत्वं लोकशिक्षार्थमिति। एवं—

सृजत्यशेषमीशस्य शासनाच्चतुराननः।

तिसृभिर्मूर्तिभिश्चाहम्—

इति च।

विष्णुः पालयते विश्वं जगद्योनेर्नियोगतः।
सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ॥
हरत्येव जगत्सर्वं हरस्तस्यैव शासनात्।
सृजत्यवति विश्वात्मा त्रिधा भिन्नः सुरक्षति ॥

इत्यपि व्याख्येयम्। तथा हि। न तावज्जीवादीश्वरस्यैव मायाशबलस्य तत्तद्गुणोपाधिकेभ्यः परत्वं युक्तम्। जीवेश्वरोपाधिभूतशक्तिद्वयस्य परस्परानिरपेक्षत्वकल्पनया तद्गुणानां तदभावात्, गुणगुणिभावेन सापेक्षत्वात्। न च सापेक्षोपाधिस्थले शासयितृशासितव्यत्वादि व्यवह्रियते। न हि विश्वतैजसप्राज्ञेषु प्राज्ञः शासितव्य इति व्यवहरन्ति। अवतारेषु तु तत्तल्लीलाविग्रहाणां निरपेक्षोपाधित्वेन संवादादिरूपाः सर्वे व्यवहाराः श्रूयन्ते। तद्यथा ब्राह्मणबालकानयनाय जिष्णुना सह प्रस्थितस्य श्रीकृष्णस्य शेषशायिना सह।

ववन्द आत्मानमजं तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः।
तावाह भूमा परमेष्ठिनौ प्रभुर्बद्धाञ्जली सस्मितमूर्ज्जया गिरा ॥
द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्म्मगुप्तये।
कलावतीर्णाववनेर्भरासुरां हत्वेह भूयस्त्वरयेतमन्तिमे ॥ इति।

न च श्रीकृष्णेन स वन्दितस्तेन चायमाज्ञापित इत्येतावताऽस्याप-

कर्षः। "कृष्णस्तु भगवान् स्वयम्" इत्याद्यनेकवचनविरोधात्। श्रीसदाशिवश्रीनारायणावताराणामपि लोऽन्यःप्रतिप... :। अत्र च पुण्डरीकाक्षश्रीनारायणोपासनमुक्तम्। अक्षिद्वयप्रतिपादनात्। अत एवोपबृंहणं

गारुडे—

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् कनककुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥ इति।

तस्माच्छिवविष्णोस्तदवताराणाञ्च धर्माधर्माऽसंश्लेषनित्यसर्वज्ञत्वनित्यमुक्तत्वादिनेश्वरत्वाविशेषाद्भजनीयत्वाविशेषः। ततश्च तेषां मध्येऽन्यतरविषयापि कृता भक्तिर्ज्ञानद्वारा मुक्तिहेतुरनायासेन भवतीति सिद्धम्॥ इति भजनीयनिर्णयः।

यथा सम्प्रदायं निबन्धाननेकान्
समालोच्य भक्तेरकारीह चिन्ता।
तया यातु तोषं जगन्नाथ ईशः
कृपालुः पितेव स्वबालोक्तशब्दैः॥ १॥
नामकौमुद्यथो भक्तिमुक्ताफलं
श्रीधरीयो विवेको यश्च भक्तेः स्थितः।
शाङ्करं भाष्यमत्रापि यट्टिप्पणं
भक्तिकाण्डेऽखिलं मूलमेतत्स्मृतम्॥ २॥
शृणुत हरिगुणौघं कीर्त्तयध्वं सदा तं
स्मरत हरिपदाब्जं तस्य सेवां कुरुध्वम्।
रचयत हरिपूजां दासभूताः सखायो
नमत सकलमस्मा अर्पयध्वं गृहादि॥ ३॥
य इदं नवविधभजनं गिरिजाभर्तुरमेशितुस्तनुते।
संसृतिसागरपारं व्रजतीति श्रुतिः स्वयं मनुते॥ ४॥
भूधरपक्षच्छेदनकृन्मदभेदनहेतोर्भूधरधारी।
जयति यशोदानन्दयशोदः कोऽपि स यामुनपुलिनविहारी॥५॥
धृतबहुविधजलरुहकृतमालो
मृगमदतिलकयुताखिलभालः।
सज्जनविद्वेषकजनकालो
जयति स कोऽपि यशोदाबालः॥ ६॥

सख्य श्रीशम्भुपादाम्बुरुहगतमना यः स मुक्तः प्रभूयात्
तद्वद्वाराहकौर्मप्रभृतितनुभृतां सेवकाः स्युर्विमुक्ताः ।
अस्माभिस्तं तु कश्चिन्मधुरतररवं वेणुना यामुनीये
तीरे कुर्वन्तबन्धस्वचरणकमले तत्र कुर्मो वयं किम् ॥ ७ ॥
तनुते कश्चन यज्ञं कोऽपि च जपमथ परस्तपोराशिम् ।
अहमिह न किमपि जाने श्रीजाने ते पदाम्बुजं जाने ॥ ८ ॥
शुण्डालनिभभुजदण्डकृतासुरखण्डन ! जगतो मण्डनरूप ।
आखण्डलमुखसुरमण्डलवरकुण्डलमण्डितकाण्डमिदं ते ॥ ९ ॥
वेदान्तशास्त्रार्थविवेकहेतोः सिद्धान्ततत्त्वं विनिरूपितं यैः ।
कृतश्च यैर्भक्तिविवेचनं तान्नमाम्यनन्तान्हृगुरून् स्वमूर्ध्ना ॥ १० ॥
सदा हरेः सेवनमाचरन्तो ये सन्ति सन्तो हरिभक्तिमन्तः ।
नमामि तान् सर्वनरेषु धन्यान् तेऽमुं निबन्धं प्रविवेचयन्तु ॥ ११ ॥
जन ! कुरु सज्जनसङ्गतिमादौ रचय ततो नवभेदकं भजनम् ।
वृन्दावनजनरञ्जनहेतोराखण्डनमदभञ्जनकर्तुः ॥ १२ ॥
नवनीतकरो बालो नवनीरधरप्रभः ।
कमनीयतनुः कुर्याच्छं नो विष्णुरुरुक्रमः ॥ १३ ॥

इति सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनुजश्रीमहाराजमधुकरसाहसू-
-नुचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीम-
न्महाराजाधिराजश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्म-
जश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीण-
धुरीणजगद्दारिद्र्यभञ्जनपारीन्द्रविद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे
भक्तिप्रकाशः समाप्तः ।



## भक्तिप्रकाश उपन्यस्तानां श्रीभागवतस्थश्लोकानां स्कन्धादिसंख्याज्ञापकम् ।

| पृष्ठसंख्या | श्लोकप्रतीकानि | स्कन्धसंख्या | अध्यायसंख्या | श्लोकसंख्या |
|---|---|---|---|---|
| २ | यदृच्छयेति । | ११ | २० | ८ |
| ,, | जातश्रद्ध इति । | ,, | ,, | २७ |
| ,, | ततो भजेतेति । | ,, | ,, | २८ |
| ३ | प्रोक्तेनेति । | ,, | ,, | २९ |
| ,, | भिद्यत इति । | ,, | ,, | ३० |
| ,, | तस्मादिति । | ,, | ,, | ३१ |
| ,, | यत्कर्मभिरिति । | ,, | ,, | ३२ |
| ४ | सर्वमिति । | ,, | ,, | ३३ |
| ,, | दानव्रतेति । | १० | ४७ | २४ |
| ६ | त्रिभुवनेति । | ११ | १ | ५३ |
| ,, | तावत्कर्माणीति । | ,, | २० | ९ |
| ,, | स्वपादमूलमिति । | ,, | ५ | ४२ |
| ,, | शृण्वतामिति । | १ | २ | १७ |
| ,, | नैकात्मतामिति । | ३ | २५ | ३४ |
| ,, | न पारमेष्ठ्यमिति । | ११ | १४ | १४ |
| ,, | दीयमानमिति । | ३ | २९ | १३ |
| ८ | यथायथेति । | ११ | १४ | २६ |
| ,, | यत्कीर्तनमिति । | २ | ४ | १५ |
| ० | भक्तिरिति । | ११ | २ | ४२ |
| ,, | इत्यच्युताङ्घ्रिमिति । | ,, | २ | ४३ |
| ,, | अथैतामिति । | ,, | ३ | १७ |
| १ | कर्माणीति । | ,, | ,, | १८ |
| ,, | नित्यार्तिदेनेति । | ,, | ,, | १९ |
| ,, | एवमिति । | ,, | ,, | २० |
| ,, | तस्माद्गुरुमिति । | ,, | ,, | २१ |
| ,, | तत्रेति । | ,, | ,, | २२ |
| , | सर्वत इति । | ,, | ,, | २३ |
| , | शौचमिति । | ,, | ,, | २४ |
| , | सर्वत्रेति । | ,, | ,, | २५ |
| , | श्रद्धामिति । | ,, | ,, | २६ |
| २ | श्रवणमिति । | ,, | ,, | २७ |
| , | इष्टं दत्तमिति । | ,, | ,, | २८ |
| , | एवमिति । | ,, | ,, | २९ |

इति स्थानज्ञापकपत्रम् ।

# भक्तिप्रकाशस्य शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| इत्युक्तमु | इत्युक्तम् | ३ | १७ |
| श्लो० ८ | श्लो० ९ | ,, | २६ |
| विनैव वा | विनैव चा | ५ | ९ |
| त्यदारविन्द | त्पदारविन्द | ६ | १० |
| त्यक्त्वा | त्यक्ता | ,, | २१ |
| मक्तजनस्य | भजनस्य | ७ | १७ |
| शत्रन् | शत्रून् | ,, | २३ |
| तपो यज्ञ | तपोयज्ञ | ९ | ३ |
| युनाक्त | युनक्ति | ,, | २० |
| धौघ | घौघ | १२ | १६ |
| ब्रह्मणि | ब्रह्मणि | १३ | १७ |
| प्रकृत्या | प्रकृत्य | १५ | ,, |
| प्राप्नु | प्राप्तु | १५ | ११ |
| गारुणे | गारुडे | १६ | १८ |
| पश्यना | पश्यन्ना | १७ | २८ |
| सूजे | सूत्रे | २१ | ३१ |
| तुप्यतु | तृप्यतु | ,, | ३२ |
| णा दीनां | णादीनां | २४ | १४ |
| नृणान् | नृणाम् | ,, | ३४ |
| कुण्यो | कुणपो | २५ | ३२ |
| चवकार | चैवकार | २६ | २० |
| धि रोढुं | धिरोढुं | २९ | १२ |
| जीवानु | जीवातु | ,, | ३२ |
| स्वछन्द | स्वच्छन्द | ३४ | १० |
| प्राप्रोति | प्राप्नोति | ,, | ११ |
| व्रव | व्रज | ३५ | २३ |
| कर्म्मा | कर्म्म | ३७ | ५ |
| माप | मपि | ,, | १० |
| कर्मापक्षा | कर्मापेक्षा | ३९ | ४ |
| सुमति | सुमतिं | ,, | ३० |
| सुमति | सुमतिं | ४० | २० |
| समीपेयागा | समीपेपाठा | ४३ | १८ |
| यागा | पाठा | ,, | २१ |
| कृततन्निव | कृतानां निव | ५१ | २० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| पोघौ | पोघो | ६४ | ८ |
| कतर्व्म | कर्तव्य | ७२ | ३४ |
| मधाः | मधोः | ७९ | १६ |
| दितं | दिनं | ,, | ३१ |
| जवयरटयो | जठरपट्यो: | ९८ | २९ |
| दुहृदो | सुहृदो | ,, | ३१ |
| नी म | नीम | १०६ | १८ |
| वानीय | मानीय | १०९ | २१ |
| पाशन्वित | पाशान्वित | ११० | ३३ |
| मन्त्रेषु | मन्त्रैः सु | ११२ | १४ |
| पुड् | पुण्ड् | ११२ | २० |
| स्त्रोत्राणा | स्तोत्राणां | ११८ | २४ |
| तया | ताया | १२३ | १२ |
| यितुम् । | यितुम् | ,, | १९ |
| वकारि | बकारि | १२४ | १६ |
| कृमत | कृतम | १२५ | ८ |
| एवामौ | एवासौ | १२७ | २३ |
| विशिष्ठ | विशिष्ट | ,, | २४ |
| स्थव कारा | स्यैवकारा | १४६ | १३ |
| ज्योतिः शब्देन | ज्योतिःशब्देन | १४७ | २७ |
| यस्मान् | यस्मात् | १४८ | ३ |
| पपद्ये | प्रपद्ये | १५५ | ७ |
| भदे | भेद | १५७ | १० |
| कृष्ण पर | कृष्णपर | १५८ | २० |
| सदा शिवस्य | सदाशिवस्य | १६० | २८ |
| रुक्तम् । प्रभावा | रुक्तम्प्रभावा | ,, | ३१ |
| हिरण्ययर्भ | हिरण्यगर्भ | १६४ | ३ |
| स्यैवावधि | स्यैवाधि | १६६ | ५ |
| प्रकट्यति | प्रकटयति | १६७ | २२ |
| तच्छ्रयत | तच्छ्रूयत | १६८ | १० |
| वा मिव्याप्य | वाभिव्याप्य | ,, | २० |
| आखण्डन | आखण्डल | १७५ | ९ |
| राखण्डन | राखण्डल | ,, | १९ |

दृष्टिदोषाद्बहुत्र "स्व" इत्यस्य स्थाने "त्व" इत्येव पतितं तत्रापि विशेषतो-ऽष्टमपृष्ठे तत्र सुधीभिः क्षन्तव्यमिति शोधकः ।

९ आगदीशोऽध्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे २ ) रु० २—८

१० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

११ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । (व्या० वि० ११) पूर्वार्द्धम् । रु० २—८ उत्तरार्द्ध । रु० २—८

१२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् । (पुराणेतिहास वि०१) रु० ५—०

१३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

१४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३ ) रु० १—४

१५ (१) संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः । (कर्म० वि० ८) रु० २—०

१५ (२) संस्कारदीपकः । " " " विवाह-गर्भाधानादिकेशान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः । ,, रु० ३—०

१५ (३) संस्कारदीपकः । " तुलादानादि-मूलशान्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः । रु० ३—०

१६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापन सहितः । म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः । ( कर्म० वि ९ ) रु० ३—८

१७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

१८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१६) रु० १—४

१९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा-ख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

२० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छ-न्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा -विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४ ) रु० २—८

२१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्याय विभागे ४) ) रु० १—८

२२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ५ ] रु० २—८

२३ माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२) रु० ५—०

२४ बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [कर्म०वि० ११] रु० ४—०

२५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( वेद वि० ६ ) ( प्रथमोभागः ) रु० ५-०-० ( द्वितीयोभागः ) रु० ७-०-०

१०६ न्यायमञ्जरी। जयन्तभट्टकृता। न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता। सम्पूर्ण। [ न्या० वि० १९ ] रु० ८—

१०७ शारदातिलकम्। श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम्। ( तन्त्रशा० वि० १ ) रु० ९—

१०८ मन्त्रार्थदीपिका। म० म० श्रीशत्रुघ्नविरचिता। ( वेद० वि० ७ ) रु० २—

१०९ शब्दशक्तिप्रकाशिका। श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता। श्रीकृष्णकान्तविद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता। न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता। (न्या वि० १६) रु० ४—

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत "पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वत्याख्यवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पण्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, ( योग. वि. ३ ) ४—

१११ सारस्वत व्याकरणम्। अनुभूतिस्वरूपाचार्यप्रणीतम्। श्रीचन्द्रकीर्त्तिसूरिप्रणीतचन्द्रकीर्त्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादाख्यटीकया च समन्वितम्। कवितार्किकोत्कल-यास्क श्रीनवकिशोरशास्त्रिणा निर्मितया मनोरमाविवृत्या च समुद्भासितम्। पूर्वार्द्धम्। ( व्या. वि. १३ ) रु० १—

११२ सामान्यनिरुक्ति-गादाधरी-गूढार्थतत्त्वालोकः। सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डन-पं० कुलपति झोपाख्य-श्रीधर्मदत्त [ श्रीबच्चा झा ] शर्मविरचितः। ( न्या. वि. १७ ) रु० १—

११३ जागदीशी पक्षता। न्यायाचार्य पं० शिवदत्तमिश्र गौडकृत गंगाख्यव्याख्या टिप्पणीसहिता। ( न्या. वि. १८ ) रु० १—

११४ मनुस्मृतिः। कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यया काशीस्थगवर्नमेन्ट संस्कृतकालेज व्याकरण-मीमांसा-धर्मशास्त्राध्यापकेन पं० नेने इत्युपाह्व गोपालशास्त्रिसंगृहीतपरिशिष्टटिप्पण्यादिभिरपि सहिता। अत्यन्तशुद्धसंस्करणम्। सम्पूर्णम्। ( धर्मशास्त्र. वि. ) रु० २—

११५ व्युत्पत्तिवादः। श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितः। वैयाकरणशिरोमणि शुक्ल श्रीवेणीमाधवशास्त्रिरचित [ शास्त्रार्थ-परीक्षोपयोगि ] शास्त्रार्थकला टीका सहितः। ( न्या. वि. १९ ) रु० २—

११६ भामती। ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता। न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता। तत्रायं द्वितीयाध्यायस्य द्वितीयपादान्तः प्रथमो भागः। रु० १—

११७ जन्मपत्रदीपकः। सोदाहरण-सटिप्पण-हिन्दीटीकासहितः। ज्यो० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः। ( ज्यो. वि. ९ ) रु० ०—

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।